# रङ्गनाथलेखमञ्जूषा

(महामहोपाध्यायस्य विदुषः एन्. रङ्गनाथशर्मवर्यस्य
गद्यलेखानां सङ्ग्रहः)

**संस्कृतभारती**
बेङ्गलूरु

प्रकाशनम् -
**संस्कृतभारती**
'अक्षरम्', ८ उपमार्गः, २ घट्टः
गिरिनगरम्, बेङ्गलूरु - ५६० ०८५



प्रथमं मुद्रणम् - २०१५ - ५००
द्वितीयं मुद्रणम् - २०१६ - १०००

मूल्यं - रू. १००.००

मुद्रणम् -
**राष्ट्रोत्थानमुद्रणालयः**
केम्पेगौडनगरम्, बेङ्गलूरु

**ISBN 978-81-88220-87-8**

**RANGANAATHA-LEKHA-MANJUUSHAA** - A collection of literary writings on various topics, written by Late **Sri Ranganatha Sharma**.
*Publisher* - **SAMSKRITA BHARATI** - 'Aksharam', 8th Cross, 2nd Phase, Girinagar, Bangalore - 560 085.
Tel: 080 - 2672 1052 / 2672 2576 E-mail: samskritam@gmail.com

Pages - iv + 214 Price - Rs. 100/- Second Print - May - 2016

Printed at - RASHTROTTHANA MUDRANALAYA, K.G.Nagar, Bangaluru

## ।। श्री शृङ्गेरीश्रीजगद्गुरुमहासंस्थानम् ।।

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य-पदवाक्यप्रमाणपारावारपारीण-
यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्गयोगानुष्ठाननिष्ठ-
तपश्चक्रवर्त्यनाद्यविच्छिन्नश्रीशङ्कराचार्यगुरुपरम्पराप्राप्तषड्दर्शनस्थापनाचार्य-
व्याख्यानसिंहासनाधीश्वर-सकलनिगमागमसारहृदय-सांख्यत्रयप्रतिपादकवैदिकमार्गप्रवर्तक-
सर्वतन्त्रस्वतन्त्रादिराजधानी-विद्यानगरमहाराजधानी-कर्णाटकसिंहासनप्रतिष्ठापनाचार्य-
श्रीमद्राजाधिराजगुरुभूमण्डलाचार्य-ऋष्यशृङ्गपुरवराधीश्वर-तुङ्गभद्रातीरवासि-
श्रीमद्विद्याशङ्करपादपद्माराधकश्रीजगद्गुरुश्रीमदभिनवविद्यातीर्थस्वामिगुरुकरकमलसञ्जात-

## ।। श्री जगद्गुरु शृङ्गेरी श्रीमद्भारतीतीर्थमहास्वामिभिः ।।

निखिलास्तिकमहाजनेषु नारायणस्मरणपुरस्सरं विरचिता आशिषस्समुल्लसन्तु ।

यशःकायाः विद्वद्धौरेयाः श्री यन्, रङ्गनाथशर्माणः व्याकरणादिदर्शनेषु अनितरसाधारणपाण्डितीमण्डिता आसन् । तत्रापि पाणिनीये तन्त्रे तेषाम् अस्खलिता गतिरासीत् । गैर्वाण्यां कार्णाटक्यां च नैकान् निबन्धान् निबध्य जनतायै महतीमुपकृतिमतानिषुः । अनवद्ये गद्ये हृद्ये पद्येऽपि ते सममेव लेखनीं व्यापारयामासुः । नैकासु पत्रिकासु प्रकटितचराणि तदीयानि लेखनानि अन्तेवसतां व्युत्पत्तिमिव विदुषां चेतसश्चमत्कृतिमप्यादधति स्म । सुरभारत्या महिमानुवर्णने तस्या आवश्यकताप्रतिपादने तस्या अक्लिष्टता-निरूपणे च ते नितरामभिनिविशन्ते स्म । तादृशान् लेखान् तत इतस्समुद्धृत्य संस्कृतभारती ग्रन्थरूपेण प्रकाशयतीति विदित्वा अत्यर्थं मोदामहे । निबन्धोऽयं सुरभारतीप्रणयिनो नितरामाप्याययिष्यतीति प्रतीमो वयम् । श्रीशारदाशशिशकलशेखरयोरसीमया कृपया ग्रन्थोऽयं विशिष्टं प्रचारमेत्वित्याशास्महे ।

इति नारायणस्मरणम्

शृङ्गगिरिः
जयतैषसितद्वादशी भार्गववासरः 2-1-2015

।। चतुर्भुजपट्टाभिरामो विजयते ।।

# यडतोरेश्रीयोगानन्देश्वरसरस्वतीमठः

चन्द्रमौळिमार्गः, कृष्णराजनगरम् - ५७१६०२, मैसूरुमण्डलम्, कर्णाटकराज्यम्

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य-पदवाक्यप्रमाणपारावारपारीण-
यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्गयोगानुष्ठाननिष्ठ-
तपश्चक्रवर्त्यनाद्यविच्छिन्नगुरुपरम्पराप्राप्त-षड्दर्शनस्थापनाचार्य-व्याख्यानसिंहासनाधीश्वर-
सकलनिगमागमसारहृदय-सांख्यत्रयप्रतिपादक-वैदिकमार्गप्रवर्तक-सर्वतन्त्रस्वतन्त्रादिराजधानी-
श्रीमद्विद्यानगरमहाराजधानी-कर्णाटकसिंहासनप्रतिष्ठापनाचार्य-श्रीमद्राजाधिराजगुरुभूमण्डलाचार्य-
श्रीमच्छङ्कराचार्यशिष्यपरम्पराप्राप्त-कावेरीहेमावतीतीरवास-श्रीनरसिंहपुरवराधीश्वर-
श्रीचतुर्भुजपट्टाभिरामस्वामिश्रीनीलकण्ठेश्वरस्वामिपादपद्माराधक-यडतोरे[कृष्णराजनगरम्]
श्रीयोगानन्देश्वरसरस्वतीमठाधीश्वर-श्रीमद्रामब्रह्मानन्दसरस्वतीस्वामिदिव्यपादपद्माराधक-
श्रीमद्गणपतिभारतीस्वामिशिष्यैः

## श्रीमच्छङ्करभारतीमहास्वामिभिः

निखिलास्तिकमहाजनविषये नारायणस्मरणपूर्वकं विरचिता आशीःपरम्परास्समुल्लसन्तु ।

**रङ्गनाथलेखमञ्जूषेति** नाम्ना महामहोपाध्यायानां श्रीमतां रङ्गनाथशर्मणां प्रकटितानि अप्रकटितानि च कानिचन लेखनानि ग्रन्थरूपेण प्रकाश्यन्त इति ज्ञात्वा महान् प्रमोदः समजनि । पदशास्त्रादिषु नैकेषु शास्त्रेषु कन्नडभाषायाञ्च आमूलचूडं प्राप्तपाण्डित्यानां रङ्गनाथशर्मणां लेखनानि विपश्चितां विद्यार्थिनाञ्च अत्यन्तोपयोगीनि इति न ह्यत्र विचिकित्सा ।

गीर्वाणभाषा व्यवहारपथे आसीन्नवा इत्यत्र पाणिनीयशास्त्रप्रामाण्यं प्रादर्श्यत श्रीमद्भिः शर्मभिः स्वीये लेखने । तेनेदं लेखनं सुरगीः प्राचीनकालादपि व्यवहारपथे आसीदिति सप्रमाणं द्रढयति । तथैव पूज्यानां शङ्करभगवत्पादानां लोकोपकारमधिकृत्य भाष्यग्रन्थादी .वलम्ब्य लिखितोऽपि लेखः सद्भिस्सर्वैरपि सगौरवं समाद्रियते ।

एवञ्च रङ्गनाथलेखमञ्जूषायां संयोजितानि सर्वाणि लेखनानि विद्वद्भिः अभ्यासिभिः च सर्वदा मननीयान्येव । सर्वदृष्ट्यापि अत्युपकारकस्यास्य ग्रन्थस्य प्रकाशने परिश्रमं कृतवतां विदुषां जि. महाबलेश्वरभट्टानां संस्कृतभारत्याः कार्यकर्तॄणाञ्च अस्मदाराध्यमूर्तिः पूर्णानुग्रहं विदध्यादिति आशास्महे ।

नारायणस्मरणम्

जयसंवत्सरस्य पुष्यकृष्णपञ्चमी

स्थिरवासरः, दिनाङ्कः −१०.१.२०१५

# अनुक्रमणिका



**भाषणानि**

**रङ्गनाथशर्मणां परिचयः**

# प्रास्ताविकं वचनम्

महामहोपाध्यायः विद्वान् एन्. रङ्गनाथशर्मा संस्कृतविद्वन्मणिहारस्य राजमणिः इव । वर्षात् पूर्वं (२५.१.२०१४) स च राजमणिः हारात् विगलितः सन् तच्छिष्याणां, तदभिमानिनां च स्मृतिकोषे अविस्मरणीयसम्पद्रूपेण तिष्ठति अद्य ।

शर्मवर्येण कन्नडभाषया संस्कृतभाषया च शताधिकाः लेखाः लिखिताः । तेषु केचन स्मरणसञ्चिकासु पत्रिकासु वा प्रकाशिताः, अन्ये केचन अप्रकाशिताः च । संस्कृतलोकस्य उपकाराय ते सर्वे संस्कृतगद्यलेखाः इह प्रकाश्यमानाः सन्ति । एतस्मिन् गद्यलेखसङ्कलने विद्यमानाः केचन लेखाः 'रङ्गाभिनन्दनम्' इत्यस्मिन् अभिनन्दनग्रन्थे, 'पदविवेकः' इति ग्रन्थे च प्रकाशिताः आसन् । 'गरिमा जगद्गुरूणाम्' इति लेखः शृङ्गेरीजगद्गुरु-श्रीमद्भारतीतीर्थमहास्वामिनां संन्याससस्वीकाररजतोत्सवस्मारिकायाः स्वीकृतः । स्मरणसञ्चिकापत्रिकादिषु प्रकाशिताः आसन् अन्ये द्वित्राः लेखाः । केचन लेखाः हस्तप्रतिकृतिमात्ररूपाः आसन् । तेषु त्रिचतुराणि भाषणानि अपि अन्तर्भवन्ति । विषयदृष्ट्या महत्त्वभूतानि इत्यतः तानि अपि भाषणानि पुस्तकेऽस्मिन् अन्ते समावेशितानि । यावतां विवरणं प्राप्तं तावन्तः लेखाः अत्र सङ्कलिताः ।

केषुचित् लेखेषु क्वचिदंशे लेखान्तरोक्ताः विषयाः आवृत्ताः दृश्यन्ते । तथापि ते न अपनीताः अस्माभिः, तस्मिन् लेखे तस्य अंशस्य प्रतिपादनस्य आवश्यकत्वात् । क्वचित् विषयसाम्ये सत्यपि निरूपणशैली भिद्यते, विशेषांशसंवलितता च दृश्यते । अतः सर्वेऽपि लेखाः मूले यथा स्युः तथैव प्रकाशिताः । परं पठनानुकूल्याय सन्धिविच्छेदः कृतः । विचाराः शब्दाः च रङ्गनाथशर्मीयाः एव, सन्धिविच्छेदमात्रम् अस्मदीयम् इति सुधीभिः मनसि स्थापनीयम् ।

शास्त्रीयाः लेखाः कथं भवेयुः इत्येतत् ज्ञापयन्ति एते लेखाः । भाषासौष्ठवं च सर्वेषु लेखेषु विलसति एव अविनाभावेन । पदलालित्यं, प्रौढत्वेऽपि अकठिनता, पदौचित्यम् इत्यादयः बहवः गुणाः अत्र विराजन्ते । लेखानाम् आदौ, मध्ये, अन्ते वा ये श्लोकाः सन्ति तेषामपि अपूर्वता सहृदयैः अवश्यं ज्ञायेत एव ।

पुस्तकस्य अन्ते विद्यमानाः त्रयः लेखाः रङ्गनाथशर्मवर्यस्य परिचयात्मकाः । शतावधानिना रा.गणेशवर्येण 'वाणीवाहन'नाम्ना कन्नडभाषया लघुपुस्तकमेकं यत् सज्जीकृतम् आसीत्, तत्रत्यान् कांश्चन अंशान् सङ्कलय्य, अन्यान् अंशान् संयोज्य च सज्जीकृतः कश्चन लेखः तेषु अन्यतमः । 'रङ्गात् निर्गतः....' इति लेखः सम्भाषणसन्देशात् उद्धृतः । 'सारस्वताराधनम्' इति लेखः तु रङ्गाभिनन्दनग्रन्थात् परिगृहीतः ।

शर्मवर्यस्य लेखानां सङ्ग्रहः अयं विदुषां मोदाय उपकाराय च कल्पेत इति भावयामः वयम् । श्रीदक्षिणाम्नायशारदापीठाधीश्वराः शृङ्गगिरिजगद्गुरु-श्रीमद्भारतीतीर्थमहास्वामिनः, यडतोरेश्रीयोगानन्देश्वरसरस्वतीमठाधीश्वराः श्री शङ्करभारतीस्वामिनः च अनुग्रहवचनदानेन अस्मान् आशिषा अन्वगृह्णन् । अतः तेषां चरणकमलयोः सप्रश्रयं कृतज्ञताञ्जलयः समर्प्यन्ते । ग्रन्थस्यास्य सज्जीकरणे बहवः साहाय्यं कृतवन्तः सन्ति । तेभ्यः सर्वेभ्यः, मुद्रकाय च समर्प्यन्ते कृतज्ञताः ।

जय सं ।। माघशुक्लसप्तमी
२६.१.२०१५

– प्रकाशकः

(द्वितीयमुद्रणस्य)

महतः सन्तोषस्य विषयः अस्ति यत् एतस्याः रङ्गनाथलेखमञ्जूषायाः पुनर्मुद्रणम् अल्पेनैव कालेन जायमानम् अस्ति इति । एतदवसरे सहकृतवद्भ्यः सर्वेभ्यः कृतज्ञताः समर्प्यन्ते ।

दुर्मुख सं ।। वैशाखकृष्णनवमी
३०.०५.२०१६

– प्रकाशकः

।। श्री रङ्गनाथस्वामी विजयते ।।

# १. संस्कृतभाषायाः व्यावहारिकीत्वे पाणिनीयशास्त्रे गमकानि

अथ संस्कृतभाषा कदाचिद् व्यावहारिकी बभूव उत न इति विचार्यते । कुतः पुनरियं विचारणा ? अत्र हि विपश्चितो विवदमानाः दृश्यन्ते । कदाचित् एषा व्यावहारिकी न बभूव, केवलं पण्डितैः बुद्धिपूर्वं परिकल्पिता एषा शास्त्रग्रन्थप्रणयने परम् उपयुक्ता इति केचित् । यदि व्यावहारिकी तर्हि ब्राह्मणेषु आयत्ता, न तु अन्यैः व्यवहृता इति च । अद्यत्वे पुनः क्वापि व्यावहारिकी नास्ति इत्येतदेव अस्य विवादस्य मूलम् ।

लोकव्यवहारगोचरा न बभूव इत्यत्र किं प्रमाणमिति चेत्, उच्यते । या त्वेषा व्यवहारभाषा तस्यां दृश्यमानानि लक्षणानि नात्र संस्कृतभाषायां परिदृश्यन्ते । भाषायाः क्लिष्टत्वात्, व्यवहारे अदृश्यमानत्वात् नैषा व्यवहारयोग्या इदानीमपि । तस्मात् पूर्वम् अपि एवमेव इति ।

अत्र इदं वक्तव्यम् । क्लिष्टत्वं तावत् अनैकान्तिको हेतुः । अद्यतनीयव्यवहारोपयुक्तभाषासु अपि क्लिष्टत्वस्य दुरपह्नवत्वात् । या त्वेषा अस्माकं मातृभाषा, यया अस्माभिः लीलया व्यवह्रियते, सा भवति अन्येषां क्लिष्टा । मातृभाषाः समकालवृत्तयोऽन्याः अपि भाषाः दैनन्दिनिकव्यवहारगोचराः इति भूयसा श्रूयमाणाः सौलभ्यम् आवहन्ति अध्येतुम् । पाश्चात्त्यानां कर्णाटकभाषा सर्वथा क्लिष्टा भासते ।

कानि पुनः पाणिनीयशास्त्रे सन्ति गमकानि यानि संस्कृतवाण्याः व्यावहारिकीत्वं साधयितुम् अलम् ? तान्येव क्रमशो निदर्शयामः । अत्र पाणिनीयशब्देन अष्टाध्यायी, तद्वार्तिकम्, महाभाष्यञ्च विवक्षितम् ।

अष्टाध्याय्यां तावदाचार्यः पाणिनिः छन्दसि भाषायाञ्च इति द्वेधा विभज्य शब्दान् अन्वाचष्टे । तत्र 'भाषा'श्ब्देन लौकिकी भाषा गृह्यते । लौकिकी व्यावहारिकी च इत्ययम् अर्थः कथं ज्ञायते ? भाष्यकारो हि 'अथ शब्दानुशासनम् । केषां शब्दानाम् ? लौकिकानां वैदिकानां च' इत्याह । तत्र लौकिकानां वैदिकेभ्यः पृथगुक्तेः लौकिकाः शब्दाः भाषाशब्दाः एव इति शक्यविज्ञानम् । 'लोके विदिताः लौकिकाः' इति कैयटः शब्दानां लौकिकत्वं निरवोचत् । तथा च लौकिकत्वं लोकविदितत्वम् । लोकविदितत्वं च शब्दानां भाषायाः व्यावहारिकत्वे एव सम्भवतीति ।

इदं सूत्रं परिशील्यताम् । 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ।' (पा. सू. १.४.१०६) अनेन हि सूत्रेण मध्यमोत्तमपुरुषयोः व्यत्ययं, द्वित्व-बहुत्वयोः एकवचनं च शास्ति आचार्यः । 'एहि मन्ये ओदनं भोक्ष्यसे' इति, 'न हि भोक्ष्यसे, भुक्तः स अतिथिभिः' 'एहि मन्ये रथेन यास्यसि, न हि यास्यसि यातस्तेन ते पिता' इत्यादीनि अस्य उदाहरणानि । एतानि च जामातरं प्रति श्यालकादेः वचनानि इति व्याख्यातारः । एष च परिहासः श्यालकादेः व्यवहारे सम्भवति, न तु शास्त्रादिग्रन्थेषु । अपि च, पुरुषव्यत्ययो वचनव्यत्ययश्च दृश्यते व्यवहारे अद्यत्वेऽपि कन्नडभाषादिषु परिहासे गम्यमाने । सोऽयं व्यवहारे संरूढोऽर्थः एव सूत्रकारेण अनूद्य विधिविषयतां प्रापितः ।

अशूद्रविषयकप्रत्यभिवादे वाक्यस्य टेः प्लुतं शास्त्याचार्यः 'प्रत्यभि-वादेऽशूद्रे' (पा. सू. ८.२.८३) इति । प्रत्यभिवादो नाम अभिवाद्यमानस्य गुरोः आशीर्वचनम् । 'अभिवादये देवदत्तोऽहम्' इति शिष्यः अभिवादयते । तदा गुरुराशिषं प्रयुङ्क्ते - 'आयुष्मानेधि देवदत्त३' इति । शूद्रविषये तु प्लुतो न भवति । 'अभिवादये तुषजकोऽहं भोः ।' तदा गुरोर्वचनं - 'कुशल्यसि तुषजक' इति । अनेन प्रत्युदाहरणेन स्फुटं ज्ञायते - शूद्रोऽपि अजानात् संस्कृतभाषां, तया च व्यवहरति स्म इति । अत एव सूत्रकारः 'अशूद्रे' इत्यूचिवान् । किञ्च 'अशूद्रस्त्र्यसूयकेष्विति वाच्यम्' इति अत्रैव वार्तिकम् । शूद्रे प्रत्युदाहरणमुक्तम् । स्त्रियां तु 'आयुष्मती भव गार्गि' इति । असूयके प्रत्युदाहरणप्रसङ्गे तु भाष्यकारः कश्चन परिहासप्रसङ्गम् उपचिक्षेप । कश्चन असूयकः परिहासार्थमेवं वदति - 'स्थाली अहं भोः' इति । यथाश्रुतग्राही

गुरुः आह – 'आयुष्मानेधि स्थालि३न्' इति । तदा असूयकः आह – ''नैषा मम संज्ञा स्थाली इति, दण्डिन्यायेन अहम् अवोचं 'स्थाली' इति, स्थालीधारी खलु अहम्'' इति । तदा गुरुः प्लुतम् अकृत्वा 'आयुष्मानेधि स्थालिन्' इत्याशास्ते । अत्र यौगिकशब्दात् प्लुतो न भवतीति अभिप्रायः । पुनश्च असूयकः आह – 'स्थालीति मम संज्ञेति' । तदा कुपितो गुरुराह – 'असूयकः त्वमसि जाल्म, न त्वं प्रत्यभिवादनम् अर्हसि । भिद्यस्व वृषल स्थालिन्' इति । अत्र वृषलशब्दो भर्त्सनायां वृषलसदृशः इत्यर्थे प्रयुक्तः । अयञ्च परिहासप्रसङ्गः सर्वथा व्यवहारगोचरः एवेति स्फुटं सचेतसाम् । 'भोराजन्यविशां वेति वाच्यम्' इति वार्तिकेन विज्ञायते राजन्यविशामपि संस्कृताभिज्ञता ववृत इति । 'दूराद्धूते च', 'हैहेप्रयोगे हैहयोः', 'गुरोरनृतोऽनन्त्यस्याप्यैकैकस्य प्राचाम्' [८.२.८४, ८५, ८६] इति सूत्रत्रय्या उदाहरणानि अपि संस्कृत-भाषायाः व्यावहारिकीत्वे गमकानि । 'आगच्छ भो माणवक यज्ञदत्त३' इति यत्र दूरादाह्वानम्, है३ देवदत्त, हे३ देवदत्त, दे३वदत्त, देवद३त्त, देवदत्त३ इत्यादीनि हि लोके व्यवह्रियमाणानि वाक्यानि । लोके च अद्यत्वे व्यावहारिक-भाषासु अपि दूरादाह्वाने प्लुतो भवति । लोके च त्रिमात्रादधिकमात्रोऽपि स्वरः प्रयुज्यते इत्यन्यदेतत् । अत एव च बोपदेवेन 'आवत् स्वर्धप्लु' इति मुग्धबोधसूत्रवृत्तौ ''त्रिमात्रस्तु प्लुतो ज्ञेयः' इति शिक्षावाक्यम् अभिलक्ष्य 'त्रिमात्रपदं बहुमात्रोपलक्षकम्' इत्युक्तम् ।

एवमेव 'चौर चौर३ घातयिष्यामि त्वाम्' इत्युदाहरणविषयकम् 'आम्रेडितं भर्त्सने' [८.२.९५] इति सूत्रं, 'अङ्ग कूज३ इदानीं ज्ञास्यसि जाल्म' इत्युदाहरणविषयकं 'अङ्गयुक्तं तिङाकाङ्क्षम्' [८.२.९६] इति सूत्रञ्च दैनन्दिनिकव्यवहारम् अभिलक्ष्य प्रवृत्ते इति मन्तव्यम् ।

एवम् असूयासम्मतिकोपकुत्सनेषु 'कन्ये३ कन्ये' 'माणवक३ माणवक' इत्यादौ, आचारोल्लङ्घने 'स्वयमोदनं भुङ्क्ते३ उपाध्यायं सक्तून् पाययति' इत्यादौ, प्रैषणे 'यवान् लुनीहि३ सक्तूंश्च पिब' इत्यादौ च प्लुतविधानं भाषायाः व्यावहारिकत्वे लिङ्गम् ।

इदमपरम् अवधेयं विद्वद्भिः । सर्वास्वपि भाषासु केचन शब्दसन्धानविशेषाः वर्तन्ते, ये समाहृत्य अर्थविशेषं बोधयन्ति । आङ्ग्लभाषायाम् अयं

शब्दसन्धानः Idiom इति व्यपदिश्यते । It is a form of expression peculiar to a language कन्नडभाषायां ನುಡಿಗಟ್ಟು इति तद्व्यपदेशः । शब्दानाम् इदं विशिष्टस्वरूपं तत्तद्भाषानियतं द्राघीयसा कालेन समुत्पद्यते भाषासु । पण्डितैः अपण्डितैश्च सम्भूय विविधेषु दैनन्दिनिकव्यवहारेषु या भाषा उपयुज्यते तस्यामेव इदं शब्दानां विशिष्टस्वरूपम् उत्पत्तुमर्हति । केवलं पण्डितैरेव शास्त्रे प्रयुज्यमानायां नास्य अवकाशः । सन्ति च भूयांसि तादृशशब्दस्वरूपाणि संस्कृतभाषायां, यानि अनुशास्ति आचार्यः । तथा हि 'ऊर्यादिच्विडाचश्च' [१.४.६१] [एते क्रियायोगे गतिसंज्ञाः स्युः] ऊरीकृत्य, उररीकृत्य = अङ्गीकृत्य इत्यर्थः । मसमसाकरोति । मस्मसाकरोति = हिनस्तीत्यर्थः । गुलुगुधाकरोति = पीडयतीत्यर्थः । एवमादयः ऊर्यादौ पठिताः । वार्तिककारः आह 'कारिका-शब्दस्योपसङ्ख्यानम्' इति । कारिकाकृत्य = कार्यं निर्वाह्य । एवं 'कार्यं निर्वाहयति' इत्यर्थे 'कारिकाकरोति' इत्यपि ।

'कणेमनसी श्रद्धाप्रतीघाते' (१.४.६६) इत्यपरं सूत्रम् । 'कणेहत्य पिबति', 'मनोहत्य पिबति' अभिलाषनिवृत्तिपर्यन्तं यथेष्टं पिबति इत्यर्थः । सूक्ष्मो धान्यखण्डः कणः । तस्य कणे इति रूपम् अर्थविशेषश्चेति द्वयं विना रूढिं न प्राप्नोति । एवम् 'अन्तर्हत्य मृगं गतो व्याधः' = मृगं हत्वा तं परित्यज्य गतः इत्यर्थः । 'मृगमन्तर्हत्वा गतः' = मृगं हत्वा तं परिगृह्य गतः इत्यर्थः । अयम् अर्थविशेषः 'अन्तरपरिग्रहे' (१.४.६५) इति सूत्रेण उपस्थापितः ।

उपाजेकरोति, अन्वाजेकरोति । अनयोर्दुर्बलस्य बलमाधत्ते इत्यर्थः । अयम् अर्थविशेषः 'उपाजेऽन्वाजे' (१.४.७२) इति सूत्रेण सूचितः । उरसिकृत्य, उरसिकृत्वा = अभ्युपगम्य इत्यर्थः । मनसिकृत्य, मनसिकृत्वा = निश्चित्य इत्यर्थः । इदञ्च 'अनत्याधान उरसिमनसी' (१.४.७४) इति सूत्रेण साधितम् । समानन्यायेन 'मनसिकरोति' इत्यस्य 'निश्चिनोति' इत्यर्थो निर्बाधः । इदं च आङ्ग्लभाषायां विद्यमानं 'To make up one's mind' इति शब्दस्वरूपम् अनुहरति । रामः सीतां पाणौ करोति, हस्ते करोति = विवहतीत्यर्थः 'नित्यं हस्ते पाणावुपयमने' (१.४.७६) इत्यनेन लब्धः । इदञ्च कन्नडभाषायाः ಕೈ ಹಿಡಿಯುತ್ತಾನೆ इति शब्दस्वरूपम् अनुहरति ।

प्राध्वंकृत्य = बन्धनेन अनुकूलं कृत्वा इत्यर्थः । इदञ्च 'प्राध्वं बन्धने' (१.४.७७) इति सूत्रेण सिध्यति । अत्रेदं विचारणीयम् । प्रगतः अध्वा प्राध्वः । प्रगतोऽध्वानं वा प्राध्वः । 'उपसर्गादध्वनः' (५.४.८५) इति समासान्तोऽच् । अस्य शब्दस्य बन्धनेन आनुकूल्यं कृत्वा इत्यर्थः कथं लब्धः इति । विना रूढिविशेषं दुरुपपादोऽयमर्थः । अध्वनि नियुक्तेषु रथादिषु एव अयं प्रयोगः प्रतिबद्धो वा उत अन्यत्रापि इति न ज्ञायते, व्यवहारस्य लुप्तत्वात् । एवं सन्ति बहवः शब्दाः, येषाम् अर्थो न शक्यः अध्यवसातुम् । आचार्यस्तु तत् कण्ठरवेण व्युत्पादयति ।

कृषिगोरक्षवाणिज्यं हि भारतीयानां प्राधान्येन जीविका । तत्र नित्यं व्यापारयताम् आत्मानं विपुलाः शब्दाः तत्प्रयुक्तव्यवहारगोचरतां भजन्ते । सूक्ष्मार्थविशेषनियताः तादृशाः शब्दाः दर्शनादिशास्त्रेषु न उपयुज्यन्ते । यदि वा उपयुज्यन्ते तर्हि क्वचिदेव । संस्कृतभाषायाम् उपलब्धाः कृष्याद्यर्थविशेष-नियताः तादृशाः शब्दाः साधीयो गमयन्ति संस्कृतस्य व्यवहारविषयताम् ।

इमे शब्दाः परीक्षणीयाः । तिष्ठद्गु, वहद्गु, आयतीगवं, खलेयवम्, लूनयवम्, लूयमानयवम् । एते शब्दाः कृषीवलनिकाये प्रसिद्धाः भवितुम् अर्हन्ति । तिष्ठन्ति गावः दोहनार्थं यस्मिन् काले स तिष्ठद्गु दोहनकालः । वहन्ति हलं गावः = बलीवर्दाः यस्मिन् काले सः कालो वहद्गु । आयन्ति गावो गृहं यस्मिन् काले सः आयतीगवं कालविशेषः । खलेयवादयः शब्दाः (ಸುಗ್ಗಿ) कालसमुदायविशेषं बोधयन्तीति तु अतिरोहितं विदुषाम् । सर्वत्र अन्यपदार्थे अव्ययीभावः । खलेयवादयस्तु खले यवाः यस्य सः खलेयवं चैत्रः इत्यादावपि भवतीति व्याख्यातारः ।

इमे विलक्षणाः शब्दाः अपण्डितेषु कृषीवलेषु प्रसिद्धाः शिष्टैरपि रूढि-वशात् परिगृहीताः इति शक्यम् अध्यवसातुम् । एवमेव शलाकापरि, एकपरि इत्यादयः द्यूतकरैः कितवैः प्रयुज्यमानाः साधुत्वेन अन्वाख्याताः पाणिनिना । अत एव 'कितवव्यवहारे च' इति वार्तिकं प्रवृत्तम् । उन्मत्तगङ्गं नाम देशः, यत्र गङ्गा उन्मत्ता इव प्रवहति । लोहितगङ्गं, शनैर्गङ्गम् इत्यादयो देशवाचिनो व्यवहारमात्रगोचराः । 'धान्यानां भवने क्षेत्रे खञ्' [५.२.१] मौद्गीनं क्षेत्रम्, व्रैहेयम्, तिल्यम्, तैलीनम् इत्यादयोऽपि कर्षककुले प्रसिद्धाः शब्दाः ।

समांसमीना गौः । कन्नडभाषायां ವರ್ಷಗಂಟು इत्युच्यते । अद्य श्वो वा विजयते अद्यश्वीना गौः इत्यादयोऽपि तथैव । मासं भृतः = वेतनेन क्रीतः मासिकः कर्मकरः, षष्टिरात्रेण पच्यमानाः षष्टिकाः = धान्यविशेषाः, इक्षूणां क्षेत्रम् इक्षुशाकटम्, इक्षुशाकिनम् इत्येते ग्राम्यजनेषु प्रसिद्धाः । किञ्च इदं विचारणीयम् । यौगिकाः शब्दाः केचित् दीर्घेण कालेन प्रयुज्यमानाः यौगिकत्वं परित्यजन्ति । गोष्ठगोयुगादयः शब्दाः यौगिकाः सन्तोऽपि महता कालेन जनैः व्यवह्रियमाणाः यौगिकत्वं परित्यज्य रूढशब्दाः इव व्यवतिष्ठन्ते । पश्चात् यथार्थम् अजानानाः जनाः तान् एव अर्थान्तरे प्रयुञ्जते । पण्डितैस्तु परिशील्यमानाः इमे पुनरुक्ताः दुरुक्ताश्च यद्यपि, तथापि भाषायां बहुलं दृश्यमानत्वेन परिगृहीताः एव भवन्ति । तथा हि । गोष्ठमिति शब्दः गवां बन्धनस्थाने वर्तते, गावः तिष्ठन्ति अत्रेति व्युत्पत्त्या । पशुपालकैः प्रयुज्यमानोऽयं शब्दः क्रमेण गवां सम्बन्धं विहाय 'बन्धनस्थानम्' इत्यर्थे विनियुक्तः । ततश्च पशुविशेषप्रतिपत्तये गोगोष्ठम्, अविगोष्ठम्, महिषीगोष्ठम् इत्यादयः प्रयोगाः समभवन् । तेषां साधुत्वान्वाख्यानाय वार्तिककारः 'गोष्ठादयः स्थानादिषु पशुनामभ्यः' इति वचनम् आरभमाणो गोष्ठं प्रत्ययमातस्थे ।

इमे च शब्दाः चमत्कारम् आवहन्ति परिशील्यन्ताम्, उष्ट्रगोयुगम्, खरगोयुगम् । कृषीवलैः खलु हलकर्षणादिषु गवोर्युगं नियुज्यते सर्वत्र । ततश्च गोयुगशब्दो रूढौ दीर्घेण कालेन केवलं युगमित्यर्थे पर्यवसन्नः । गोशब्दार्थः परित्यक्तः । ततश्च खरगोयुगम्, उष्ट्रगोयुगम् इत्यादिप्रयोगाः सम्बभूवुः । अत एव वार्तिककारः पश्चात् 'उपमानाद्वा सिद्धम्' इत्यूरीचक्रे । भाष्यकारश्च गवां स्थानं गोष्ठं यथा गवां तद्वदुष्ट्राणामिति । कैयटश्च 'विशेष-प्रतिपत्त्यर्थं उष्ट्रादीनामन्यतमेन विशेष्यते । मुख्यगोष्ठप्रतिपत्तये च गोभिरपि गोष्ठस्य विशेषणात् गोगोष्ठमित्यपि भवति' इत्याह ।

षण्णां गवां समाहारः षड्गवम् । कालेन च गोपदार्थोऽत्र परित्यक्तः । षण्णां समुदायः षड्गवम् इत्यर्थः प्रतिपन्नः । षड् हस्तिनः इत्यर्थे हस्तिषड्गवम्, षडश्वाः इत्यर्थे अश्वषड्गवम् इत्यादयः प्रयोगा रूढिमागताः । एवं तैलशब्दस्य कथापि । तिलस्य विकारः तैलमिति न्याय्या व्युत्पत्तिः । तिलतैलमिति पुनरुक्तम् । एरण्डतैलम्, इङ्गुदीतैलमिति दुरुक्तम् । तदिदं सर्वं वार्तिककारः

'स्नेहने तैलच्' इति तैलच्प्रत्ययं विदधानः सामञ्जस्यं निनाय ।

एषा च रीतिरन्यास्वपि भाषासु भूयसी समवलोक्यते । उदाहरणार्थं कन्नडभाषायां 'ಎಣ್ಣೆ'शब्दः । ಎಳ್+ ನೆಯ್ಯ್ इति शब्दद्वययोजनेन निष्पन्नः अयं तैलशब्दसमकक्षः । इदानीं ಎಳ್ಳೆಣ್ಣೆ, ಹರಳೆಣ್ಣೆ, ಕೊಬರಿ ಎಣ್ಣೆ इत्यादयः शब्दाः प्रयुज्यन्ते । ಸೀಮೆ ಎಣ್ಣೆ इत्यपि ।

अत्र तावन्मम विवक्षितमेतावत् । एतादृशाः शब्दाः शब्दार्थव्युत्पत्तिम् अजानद्भिः दैनन्दिनव्यवहारेषु भृशम् उपयुज्यमानाः विकारवैविध्यं प्राप्ताः इत्येव । यदि संस्कृतभाषा कृषीवलादिभिरपि व्यवहारे नोपायोक्ष्यत, तर्हि इमे शब्दाः एतादृशं रूपान्तरं न अलप्स्यन्त इति ।

अपराणि च भूयांसि सन्ति पदानि येषाम् आत्मलाभो गृहेषु, मित्रगोष्ठीषु, परिहासकथादिषु च सम्भवेत्, न तु विद्वत्सभासु, दर्शनादिशास्त्रप्रणयनेषु वा । तेषां पदानां सत्तैव सुष्ठु गमयति संस्कृतभाषायाः व्यवहारविषयताम् । तथा हि । पात्रेसमितादिषु पठ्यमानानि सर्वाण्यपि पदानि एतादृशानि एव ।

पात्रेसमितः । यो भोजनकाले सङ्गतः, न तु कार्ये, स उच्यते पात्रेसमितः । पात्रेबहुलः । कूपमण्डूकशब्दोऽत्रैव पठ्यते । एतदर्थकाः खलु उदुम्बरकृमिः, कूपकच्छपः, अवटकच्छपः, कुम्भमण्डूकः, उदपानमण्डूकः इत्येते शब्दाः अत्र सन्ति । परवञ्चनानिपुणो नगरकाकः, स एव नगरवायसः । यो गृहे तिष्ठन् मातरि धृष्टः न तु बहिः, कार्येषु असमर्थः, स मातरिपुरुषः । यो भोजने शूरो, न तु कार्ये, स पिण्डीशूरः । एवं गेहेशूरः, पितरिपुरुषः, गेहेनर्दी । गेहे स्थित्वा इदं युक्तमिदमयुक्तं च इति विमृशति, न तु कार्ये सः उच्यते - गेहेविचिती । अविनीतो धृष्टः उच्यते - नगरश्वा इति । यो गृहे एव तिष्ठति कार्यार्थे न बहिर्गच्छति सः - गेहेमेही । आजन्म दरिद्रः गर्भतृप्तः । गर्भे एव तृप्तः । गोष्ठेशूरः, गोष्ठविजितीप्रभृतयो निन्दां व्यञ्जयन्ति । यः खलु द्रव्यं नार्जयति आत्मीये गेहे यत्किञ्चिल्लभते तदेव भक्षयति स आखनिक-बकः । श्रोतुरुद्वेगजनकं निरर्थकं कर्णे जल्पनं कर्णेटिरिटिरा । सैव कर्णेचुरुचुरा । शब्दद्वयमिदं कन्नडभाषया व्यवह्रियमाणं ಮಿಟಮಿಟ, ಕಿರಕಿರ शब्दौ अनुकरोति । एतादृशाः शब्दा भाषायाः सार्वजनीनव्यवहारे एव सम्भवन्तीति न अविदितं विदुषाम् ।

कुतुपो नाम छागरोमजन्मा कम्बलः । सदा तं धारयन् सौश्रुतः कुतुपसौश्रुतः । अजानां क्रयविक्रयं कुर्वन् कश्चित्तौल्वलिः अजातौल्वलिः । शाकपार्थिवत्वात् एतादृशाः साधिताः । मयूरव्यंसकादिषु पठ्यमानाश्च शब्दाः केचित् परीक्षणीयाः । शाकादिकं विक्रेतुं पथि गच्छन् वाणिजो गृहिण्या आहूयते एहिवाणिज इति । तस्याः आह्वानम् उच्यते – 'एहिवाणिजा' । कलहायमानो वाणिजो निष्कास्यते गृहात् सा क्रिया 'अपेहिवाणिजा' । चेलं = वस्त्रम् आहर इति वचनम् 'आहरचेला' । एवम् 'आहरवसना' । उत्पत निपत इति व्याहारः 'उत्पतनिपता' । स्नात्वापि यस्य देहमालिन्यं न निर्गतं स उच्यते – 'स्नात्वाकालकः' । अश्नीत पिबत इति यत्र भोजने आतिथेयेन अभिधीयते सा क्रिया 'अश्नीतपिबता' । एवं पचतभृज्जता-खादतमोदतादयः ।

एवमन्येऽपि शब्दाः पाणिनीये व्युत्पादिताः, येषां लोकव्यवहारादेव प्रयोगस्य सम्भवः । कुमारीपुत्रकः, कुमारीश्वशुरकः इति शब्दौ लज्जालौ पुरुषे सादृश्यात् प्रयुक्तौ । कुमार्याः पुत्रः कानीनः । स हि स्वभावतो लज्जालुः । यस्य पुत्रः कस्याञ्चन कन्यायाम् अविनीतम् आचरितवान् स भवति कुमारीश्वशुरः । पुत्रस्य दुश्चेष्टितेन तस्य लज्जा स्वाभाविकी । तत्सदृशः कुमारीश्वशुरकः । वीरणादेः तृणस्य कटादिभावाय प्रस्तरणं 'प्रोहकटा' । शब्दोऽयं कटनिर्मातृ-व्यवहारे रूढः ।

अपरेऽपि शब्दाः सन्ति प्रयोगे लुप्ताः, व्यवहारस्य लुप्तत्वात् । तथाहि – सण्डो वृषः । ग्रामस्य सण्डो ग्रामसण्डः । शीकारं करोति शैत्येन शीकायते । सद्यः पिष्टाः सक्तवो 'दृषच्छारदाः' । गोष्ठे श्वा 'गोष्ठश्वः' । 'Dog in the Manger' इत्यर्थे प्रत्युक्तो भवेत् ।

किञ्च 'कर्णे लक्षणस्याविष्ट' इत्यादिसूत्रेण 'दात्राकर्णः' इत्यादयः शब्दाः व्युत्पादिताः । पशूनां स्वामिविशेषज्ञापनार्थं दात्राकारादिचिह्नम् अद्यापि पशुपालैः क्रियते । तच्चिह्नम् उच्यते लक्षणमिति । यस्य पशोः कर्णे दात्राकारं चिह्नं स दात्राकर्णः । कर्णशब्दे परे विष्टादीनां दीर्घो न । यथा भिन्नकर्णः, छिद्रकर्णः । एते शब्दाः पशुपालानां व्यवहारे सम्भवन्ति ।

अपि च 'दिक्छब्देभ्यस्तीरस्य तारभावो वा' इति वार्तिकम् । दक्षिणतीरम् इत्यर्थे दक्षिणतारम् । एवम् उत्तरतारम् । कथम् एतादृशाः विकाराः सम्पद्येरन्

यद्येते शब्दाः पण्डितमात्रव्यवहारविषयाः । रूढिवशात् शिष्टैरपि परिगृहीताः इति तेषां साधुत्वम् अन्वाख्यायते शास्त्रकारैः ।

एतैः अपरैश्च प्रमाणैः अत्र अपरामृष्टैः साधु सिध्यति, संस्कृतभाषा लोकव्यवहारार्थम् उपयुक्ता, न तु ग्रन्थमात्राश्रया पण्डितगोष्ठीमात्राश्रया वा इति । यदि तादृशी सती विद्याशालासु प्रयत्नाधिगम्या एव अभविष्यत् तर्हि पूर्वोक्ताः व्यावहारिकभाषासाधारणाः स्वरूपविशेषाः नोदपत्स्यन्त । व्यवहार-मात्रोपयुक्ताः शब्दाश्च नावकाशम् अलप्स्यन्त इति शम् ।।

★ ★ ★

---

संज्ञापदानि तावत् परिवृत्तिं न सहन्ते । तस्मात् नेहरूमहाशयः, मद्रास्नगरम् इत्येवं वक्तव्यं भवतीति स्पष्टम् । एवमेव संस्कृतपदसामानाधिकरण्येन अन्य-भाषाशब्दानां क्वचित् प्रयोगे का हानिः ? यथा - रैल्वेयानम्, बस्वाहनम् । चेक्पत्रम् इत्यादि ।

---

# २. साम्प्रदायिकं संस्कृतशिक्षणम्

संस्कृतशिक्षणविषये तावदिदानीं सर्वत्र अनुस्त्रियते द्वयी पद्धतिः । संस्कृत-शालासु संस्कृतमहापाठशालासु च अनुस्त्रियमाणा पद्धतिः एका । अन्यत्र लौकिकविषयशिक्षणपरासु प्रौढशालासु[१] विश्वविद्यानिलयसम्बन्धिनीषु महाशालासु च आद्रियमाणा पद्धतिः अपरा । अनयोश्च पद्धत्योः प्रथमा तावत् प्राचीना साम्प्रदायिकी इति उद्घोषः । 'नास्ति तद्वस्तु लोके यन्न निर्दोषं न निर्गुणम्' इति न्यायेन पद्धतिद्वितये अपि अस्ति गुणः, अस्ति च दोषः इति मन्यते मे मानसम् ।

कोऽसौ साम्प्रदायिकः शिक्षणक्रमः ? अस्माकम् अध्ययनकाले यं क्रमम् अनुरुन्धानैः गुरुभिः वयं पाठशालासु पाठिताः - शिक्षिताः, सोऽयं क्रमः साम्प्रदायिकः इति मन्यते अस्माभिः । वर्षदशकत्रितयात् प्राक् या शिक्षणपद्धतिः दृश्यते स्म पाठशालासु, सा पद्धतिः इदानीं प्रायः न दृश्यते, बह्वंशैः सा पद्धतिः अन्यथाकृता । सन्ति च अत्र बहूनि कारणानि । पाठ्यपुस्तकनिर्देशनं, परीक्षाविधानं, छात्राणाम् अलसता, क्वचित् अध्यापकानाम् असामर्थ्यं चेति समुदित्य भवन्ति कारणानि । तस्मादत्र न कोऽपि अङ्गुलिनिर्देशेन शक्यः दोषपदम् आरोपयितुम् ।

संस्कृताध्ययनं द्वेधा शक्यते विभक्तुम् - भाषाध्ययनं शास्त्राध्ययनञ्च इति । शास्त्रम् अधिजिगांसमानानां भाषाज्ञानं प्रथमः कल्पः, यदवलम्बेनैव शास्त्रेषु बुद्धिः क्रमते । अत एव [२]प्रथमाकाव्यसाहित्यकक्ष्यासु भाषाध्ययनं पूर्णतामियात्, ततो भवतु शास्त्रेषु प्रवेशः इति सूक्ष्मदर्शिभिः प्राचीनैः शिक्षणव्यवस्था कृता

---

१. आङ्ग्लभाषया 'हैस्कूल्' इति पदेन निर्दिश्यमानासु ।

२. 'प्रथमा' 'काव्यम्' 'साहित्यम्' इति कक्ष्यानामानि कर्णाटके साम्प्रदायिकधारायाम् ।

कर्णाटकदेशे । साहित्यपरीक्षाम् उत्तीर्णस्य चम्पूनाटककाव्यानां सिद्धान्तकौमुद्याः मुक्तावल्याश्च अभ्यासेन संस्कृतभाषायां निरर्गलः प्रवेशो भवति स्म । अमरकोशकाण्डत्रयस्य, सर्वेषां नामपदानां क्रियापदानाञ्च वाचोविधेयता तस्य समभूत् । साहित्यान्तम् अधीतमनेन इति प्रशंसापरः प्रवादो रूढः आसीत् । तदिदं सर्वं प्राचीनशिक्षणपद्धतेः अनुसरणस्य शुभः परिणामः ।

काव्याध्यापनं कथं निर्वर्तयन्ति स्म अस्मद्गुरवः इत्यत्र किञ्चिन्निदर्शनं पुरोधातुम् ईहते मे चेतः । रघुवंशमहाकाव्यस्य प्रथमसर्गे तृतीयोऽयं श्लोकः -

मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥

कथमस्य श्लोकस्य अध्यापनप्रकारः ? प्रथमं तावदध्यापकः श्लोकमिमं स्पष्टमुच्चैः पठति । ततश्च पुरोनिषण्णानां छात्राणां मध्ये त्रिचतुरैः छात्रैः श्लोकोऽयं क्रमाद् अनुपठनीयः । ततो द्वित्रैः पदविभागः कर्तव्यः । श्लोक-पठनावसरे पदविभागकाले वा ये दोषाः छात्राणां संभाव्यन्ते तान् दोषान् तत्र तत्र अध्यापकः शोधयति । तदनन्तरं सर्वेषामपि पदानाम् अन्तलिङ्गवचन-विभक्त्यादयः क्रमेण छात्रैः निर्देशनीयाः । तद्यथा - मन्दः, मन्दः मन्दौ मन्दाः ........ मन्दे मन्दयोः मन्देषु इत्यन्तं मन्दशब्दं पठित्वा 'अकारान्तः पुंलिङ्गो मन्दशब्दः प्रथमैकवचनान्तः' इत्येवं समापनीयम् । ततः कवियशः-प्रार्थी इति शब्दः । एवं सर्वेषां नामपदानाम् । गमिष्यामि इति क्रियापदम् । तत्रैवं वक्तव्यम् । गमिष्यति - गमिष्यतः - गमिष्यन्ति । गमिष्यसि - गमिष्यथः - गमिष्यथ । गमिष्यामि - गमिष्यावः - गमिष्यामः । गम्लृ गतौ । गत्यर्थकात् गम्लृधातोः सकर्मकात् परस्मैपदिनः कर्तरि लृटि उत्तमपुरुषैकवचने गमिष्यामीति रूपम् इति । इवेत्यव्ययमित्येव । एवं समेषां शब्दानां लिङ्गवचनादिकीर्तनानन्तरं श्लोकस्थानां शब्दानाम् अन्वयक्रमं प्रदर्शयति अध्यापकः । स च क्रमः छात्रेणापि दर्शनीयः । ततः अन्वयानुसारेण श्लोकार्थं कथयति गुरुः । ततो द्वित्रैः छात्रैः अन्वयक्रमेण अर्थो वाच्यः । अनन्तरं श्लोकतात्पर्थं रसवत्या शैल्या बोधयित्वा समस्तपदानां विग्रहं व्याकरणविशेषांश्च दर्शयति गुरुः ।

ततश्च श्लोकस्य पदविशेषाणाम् आकरभूताः अमरकोशपङ्क्तयः छात्रैः एव उदाहर्तव्याः । तद्यथा । मन्दः - 'मूढाल्पापटुनिर्भाग्या मन्दाः स्युर्द्वौ तु

शारदौ' । कविः - 'धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः' । यद्यत्र कश्चिच्छात्रः 'उशना भार्गवः कविः' इति कोशमुदाहरेत्, तर्हि तद्वाक्यं प्रकृतासम्बद्धमिति गुरुः शोधयति । तदनन्तरम् आकाङ्क्षामर्यादा प्रदर्शनीया । तद्यथा - नदीनां सागरो गतिरिति न्यायेन सर्वेषां पदानाम् आकाङ्क्षा क्रियापदे परिसमाप्यते इति कृत्वा क्रियापदमारभ्य आकाङ्क्षा प्रदर्श्यते । यथा अत्रैव श्लोके गमिष्यामीति क्रियापदम् ।

गमिष्यामि । कः ? अहम् । अहमित्यध्याहारः । कीदृशोऽहम् ? मन्दः । पुनश्च कीदृशः ? कवियशःप्रार्थी । कां गमिष्यामि ? उपहास्यताम् । कः इव ? वामनः इव । कथंभूतो वामनः ? उद्बाहुः । कस्मिन् ? फले । कीदृशे फले ? प्रांशुलभ्ये । कस्मात् ? लोभात् । इति । तदनन्तरं सर्वे समुदित्य श्लोकं पठन्ति । एवम् एकस्यां घण्टायां द्वित्राः श्लोकाः अभ्यसनीयाः भवन्ति । परेद्यवि च पूर्वेद्युः अधीतं सर्वं गुरवे निवेदनीयम् इत्येषा पद्धतिः आसीत् । एवं रघुवंश-कुमारसम्भव-किरातार्जुनीय-माघ-नैषधेषु पञ्चस्वपि महाकाव्येषु प्रतिकाव्यं द्वित्राः सर्गाः क्रमेण अधीयन्ते स्म इति काव्याध्ययनपद्धतेः दिक्प्रदर्शनमेतत् । एवम् अधीतवतः छात्रस्य संस्कृतभाषायां साधीयसी व्युत्पत्तिः सम्पद्यते इत्यत्र को विस्मयः ? एवं व्युत्पन्नानां विद्यार्थिनां चम्पूनाटकाध्ययने सुतराम् आर्हन्ती वरीवृत्यते । चम्पूनाटकाध्यापनप्रकारो विस्तरभयात् न अत्र प्रदर्श्यते । तदिदं साहित्यान्तम् अध्ययनम् । स एष प्रकारः अद्यत्वे पाठशालासु जागर्ति न वेत्यत्र विद्वांसः प्रमाणम् ।

ततः शास्त्रेषु प्रवेशः । अधुनातनी शास्त्राध्यापनपद्धतिस्तु नातीव भिद्यते साम्प्रदायिकपद्धत्या इति समुच्छ्वसन्तीव वैदुष्यप्रियाणां प्राणाः । परन्तु शास्त्राणाम् अध्ययनविधिः विद्यार्थिनां भिद्यते । नाहम् इदानीम् इमं विषयं विवरीतुम् आत्मानं व्यापारयामि । शिक्षणक्रमे चास्मिन् यन्मे वैगुण्यमित्यभिमतं तत्तु किञ्चिदिव स्पष्टयितुम् अभिलषामि । प्राचीनपद्धत्या समधिगता वैदुषी तलस्पर्शिनी शास्त्रस्य, आधुनिकपद्धत्या समार्जिता तु केवलम् आयामस्पर्शिनी इत्यस्ति प्रवादः । यद्यपि प्रवादोऽयं यथार्थः एव, तथापि आधुनिकपद्धतौ सन्ति केचिद्गुणाः, ये अस्माकम् अपेक्षणीयाः इति मे दृढा मतिः । इदानीम् अस्माभिः महापाठशालासु अनुस्त्रियमाणे शिक्षणक्रमे छात्राणां नवोत्साहदायिनी

प्रतिभोन्मेषकारिणी स्वतन्त्रा विचारशक्तिः बलवती भवितुं नावसरं लभते । शास्त्रपङ्क्तीनां यथाश्रुतं शब्दार्थं निरुच्य, क्वचिल्लक्ष्यलक्षणसमन्वयञ्च कृत्वा कृतकृत्यमात्मानं मन्यते अध्यापकः । न च तदुपरि स्वातन्त्र्येण विचारयति, न च तस्मिन् विषये विवेक्तुं शिष्यं चोदयति, न च ग्रन्थान्तरं परिशीलयति, न च पूर्वापरविरोधम् अनुसन्धत्ते, न च शङ्कते, न वा समाधत्ते । तत्फलतया शिष्यो यथाश्रुतग्राही सम्पद्यते । ग्रन्थोक्तादन्यत् किमपि न जानाति । स्वातन्त्र्येण किमपि ऊहितुमपि एषः न समर्थयते । उपमालङ्कारस्य किमुदाहरणमिति प्रश्ने 'चन्द्र इव मुखम्' अथवा 'कमलमिव मुखम्' इत्युत्तरं निर्बाधं निरीक्षणीयं भवति । पूर्णोपमायाश्च 'हंसीव कृष्ण ते कीर्तिः स्वर्गङ्गामवगाहते' इत्येतदेव उदाहरणं मन्यते, नान्यत् कल्पयितुम् ईष्टे । अस्मिन् प्रसङ्गे शिक्षकेण छात्रान् प्रति एवम् आदेशः कर्तव्यः - ''युष्माभिः यानि अधीतपूर्वाणि काव्यानि, तेषु दृष्टान् उपमालङ्कारान् सङ्गृह्णीत । स्वयञ्च उपमालङ्कारसहितानि वाक्यानि रचयत'' इति । वामनस्य काव्यालङ्कारसूत्रं पाठ्यत्वेन निर्दिश्यते । सरलानि वामनसूत्राणि अल्पीयांश्च वृत्तिग्रन्थः ''रीतिरात्मा काव्यस्य, विशिष्टा पदरचना रीतिः, विशेषो गुणात्मा'' इत्यस्ति सूत्रत्रयम् । कथमेतस्य विवरणम् ? रीतिः काव्यस्य आत्मा भवति । गतं प्रथमसूत्रम् । का नाम रीतिः ? विशिष्टा पदरचना रीतिः । गतं द्वितीयसूत्रम् । विशिष्टा इत्यस्य विशेषेण युक्ता इत्यर्थः । को नाम विशेषः? विशेषो गुणात्मा । विशेषो नाम गुणः इत्यर्थकथने गतं सूत्रत्रयम् । अधीतकाव्यचम्पूनाटकस्य छात्रस्य किम् एतावदर्थज्ञानं दुःशकम् ? एतावदर्थकथनाय कश्चिदध्यापकः आवश्यको वा ?

मन्ये, अस्य सूत्रत्रयस्य व्याख्याने दिनत्रयम् आवश्यकम् इति । काव्यस्य आत्मत्वेन कं पदार्थम् अभिमन्यन्ते लाक्षणिकाः इति तावद्विवेक्तव्यम् । ततश्च दण्डिप्रभृतयः अन्ये आलङ्कारिकाः कं कम् आत्मत्वेन प्रतिपन्नाः इति आलोचनीयम् । रीतिरात्मा इति प्रतिजानतो वामनस्य आशयः परिशीलनीयः । रीतिश्च पदरचना वर्णानुपूर्वी इति अनर्थान्तरम् । आत्मत्वेन संमतायां वर्णानुपूर्व्यां को नाम चमत्कारोदयः ? नीरसेषु ग्रन्थेषु वर्णानुपूर्व्याः अवश्यंभावात् । पदरचनां विशिष्टेति विशेषयतो, गुणस्य विशेषः इति संज्ञां कुर्वतश्च शास्त्रकारस्य किम् आकूतमिति विमर्शनीयम् । तदिदं प्राचीनशिक्षणक्रमे हीयते इति महद्वैगुण्यम् ।

व्याकरणशास्त्रम् अधीयानं छात्रं प्रति यण्सन्धेः किमुदाहरणमिति प्रश्ने 'सुध्युपास्यः' 'मध्वरिः' इत्येव उत्तरं लभ्यते, न त्वन्यत् । साहित्याम्भोनिधौ विद्यमानानि शब्दरत्नानि संग्रहीतुम् अयं यत्नः इति सत्यं विस्मृत्य व्याकरणस्य लक्ष्यभूतानि काव्यानि नैव पश्यति । गवाक्शब्दस्य रूपाणि कति सम्भवन्तीति परीक्षते । पञ्चशताधिकरूपाणि भवन्तीति विस्मयोत्फुल्ललोचनो भवति ।

एवं तार्किकश्छात्रोऽपि 'पर्वतो वह्निमान् धूमात्' इत्येव अनुमानप्रकारं पश्यति, न त्वन्यत् । प्रभाते रथ्यां जलक्लिन्नां दृष्ट्वा सर्वोऽप्यनुमिमीते रात्रौ देवः प्रावर्षत् इति । अत्र कथम् अनुमानप्रयोगः ? कः पक्षः ? किं साध्यम् ? को हेतुः इति पृष्टश्छात्रो गगनम् आलोकते । एवमन्येषु शास्त्रेषु अपि ऊह्यम् ।

गृहलेखनपरिपाटी 'Home Work' इति यदुच्यते तस्य अंशतोऽपि मान्यता नास्ति साम्प्रदायिकशिक्षणक्रमे । अध्यापकैश्च पाठनीयग्रन्थानां यत् पूर्वावलोकनं तस्य गन्धोऽपि नाद्रियते । कृष्णफलकानां (Black Board) स्थापनमपि शास्त्रकक्ष्यासु अवहेलनास्पदं मन्यन्ते अध्यापकवरेण्याः ।

किञ्च, प्राचीनशिक्षणक्रमे इतिहासप्रज्ञा दूरतः परिक्षिप्ता । सिद्धान्तकौमुदीम् अध्यापयन्ति । ग्रन्थकर्तारं भट्टोजिदीक्षितं न स्मरन्ति । तस्य देशकालादिकं किमपि न विचार्यते । कौमुदीसहवर्तिनां काशिकाप्रक्रियाकौमुदीप्रभृतीनां नामापि न श्रूयते पाठनावसरे । विनेयजनहितेप्सया उद्दामग्रन्थरत्नानि विरचय्य उपकृतवतां महाविदुषाम् अस्मरणं कृतघ्नतां मन्यामहे ।

---

सन्ति एव अद्यापि अलङ्कारशास्त्रनिष्णाताः विद्वद्वराः । परन्तु न केनापि रसगङ्गाधरं पूरयितुं प्रयत्तम् ।

सर्वासु प्रौढशालासु संस्कृताध्ययनस्य अवकाशो नियमेन कल्पनीयः ।

---

# 3. संज्ञाशब्दानां प्रयोगः

*सुलभा सर्वहृद्येयं नर्तकी विश्वरूपिणी ।*
*संस्कृता भारती सर्वजिह्वारङ्गेषु नृत्यतात् ।।*

अखिलेषु लोकव्यवहारेषु पुरा सर्वैः उपयुक्तायाः, सुसमृद्धायाः, सर्वाङ्ग-परिपुष्टायाः, गच्छता कालेन हेतुभिः अनेकैः लोकव्यवहारपथात् परि-च्युतायाः, परिक्षीणायाः, संस्कृतभाषायाः पुनः संवर्धनं परिपुष्टिं च कामय-मानानां तदर्थं च परमेण उत्साहेन सन्ततं परिश्राम्यतां बहुधा प्रयतमानानां च संस्कृतभारत्याः कार्यकर्तॄणां प्रकामम् अभिनन्दनीयस्य उत्साहस्य अन्तरायं विधातुम् इव समुत्थिताः काश्चित् समस्याः ।

तासु कतिचन संस्कृतेतरभाषासंज्ञाशब्दप्रयोगसम्बद्धाः । 'भाषान्तरसंज्ञा-शब्दानां व्याकरणशास्त्रसंस्काररहितत्वात् संस्कृतभाषायां प्रयोगार्हता एव नास्ति, साधुत्वं तु दूरापेतम् । तेषां संस्कृतीकरणम् अपि नैव उचितम्' इति केषाञ्चित् वैयाकरणानाम् अभिप्राये सति केवलरूढानां यदृच्छाशब्द-व्यपदेशभाजां संज्ञाशब्दानां संस्कृतीकरणं, तेन च प्रयोगार्हत्वं साधुत्वं च योयुज्यते इति अन्येषां वैयाकरणानाम् अभिप्रायः संलक्ष्यते । अस्याम् अवस्थायां किं करणीयम् ? इति सन्देहः युक्तः एव ।

**अभिप्रायभेदः**

प्रथमं वैयाकरणेषु विद्यमानम् अभिप्रायभेदप्रकारं परिशीलयामः ।

देशभाषानुसारेण कृतानां कूची, मञ्ची, अप्पि, कोण्डा इत्यादिनाम्नां व्याकरणसूत्रासंस्कृतत्वेन असाधुत्वम् एव, व्याकरणासंस्कृतत्वादेव अर्थवत्सूत्रविहितायाः प्रातिपदिकसंज्ञायाः न अवकाशः, तत एव च तेभ्यः

सुबुत्पत्तिर्न, ततश्च पदत्वसिद्धेः अनवकाशात् प्रयोगार्हत्वम् अपि न। व्याकरणासंस्कृतत्वेऽपि पाणिनिना कृतानां टि-घु-भ-आदिसंज्ञानां शिष्ट-प्रयुक्तत्वात् साधुत्वम् अभ्युपगम्यते। व्याकरणसंस्कृतत्वं, शिष्टप्रयुक्तत्वं वा साधुत्वप्रयोजकम्। अथवा शिष्टप्रयुक्तत्वबलात् कथञ्चित् तेषां व्याकरण-शास्त्रसंस्कृतत्वं कल्प्यते। तथैव अपभ्रंशानामपि शक्तत्वेन = अर्थ-बोधकत्वेन अर्थवत्त्वात् प्रातिपदिकत्वं न युक्तम् आश्रयितुम्, तेन सुबुत्पत्तेः अवकाशात् तेषाम् अपि व्याकरणसंस्कृतत्वं सम्भाव्येत। व्याकरण-संस्कृतत्वपूर्वम् अर्थवतां शब्दानाम् एव अर्थवत्सूत्रस्य अर्थवच्छब्देन ग्रहणस्य इष्टत्वात्। देशभाषानुसारेण क्रियमाणस्य नाम्नः असाधुत्वात् 'अमुकशर्मा आयुराशास्ते' इत्यादिसूक्तवाकप्रयोगे सङ्कल्पादौ च उल्लेखः बर्बराणाम् = अज्ञानां भ्रान्तिः एव। 'घोषवदाद्यन्तरन्तस्थं द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यात्, न तद्धितम्' इति गृह्यसूत्रोक्तनाम्नः साधोः एव उल्लेखस्य उचितत्वात्।

ननु एवं नियमे आश्रीयमाणे 'यर्वाणः तर्वाणो नाम ऋषयो बभूवुः, ते तत्रभवन्तो यद्वा नः तद्वा नः इति प्रयोक्तव्ये यर्वाणः तर्वाणः इति प्रयुञ्जते, याज्ञे कर्मणि पुनः नापभाषन्ते' इति महाभाष्ये वक्ष्यमाणस्य यर्वाणः तर्वाणः इत्यस्य सुबन्तस्य पदस्य कथम् उपपत्तिः ? असाधुत्वे प्रातिपदिकत्वाभावेन सुपो दुर्लभत्वात् इति पर्यनुयोगः न कार्यः, उक्तस्थले सुपः असाधुत्वात्। इत्येवं महावैयाकरणः नागेशः मञ्जूषायां सिद्धान्तयामास। तन्मतम् एव अवलम्बमानाः नागेशपक्षपातिनः विद्वांसः देशभाषाशब्दानां संस्कृती-करणस्य साधुत्वं न क्षमन्ते, न अनुमन्यन्ते च।

'त्रयी शब्दानां प्रवृत्तिः, न सन्ति यदृच्छाशब्दाः' इति भाष्योक्त्या जगति गुण-क्रिया-प्रवृत्तिनिमित्तकानां त्रिविधानाम् एव शब्दानां साधुत्वेन प्रयोगार्हता, न तु अर्थगतं प्रवृत्तिनिमित्तम् अनपेक्ष्य केवलं प्रयोक्त्रभिप्रायेण प्रवृत्तानां यदृच्छाशब्दानां = संज्ञाशब्दानाम्' इति नागेशानुयायिनाम् अभिप्रायः।

**सन्ति एव यदृच्छाशब्दाः**

'ऌतकः' इत्यादीनां यदृच्छाशब्दानाम् अपि सम्भवम् आश्रित्यैव

पाणिनिः 'ऋलृक्'सूत्रे लृकारम् अपि पृथक् पपाठ । 'न सन्ति यदृच्छा-शब्दाः' इति उक्तिः तु प्रायः संस्कृतभाषायां यौगिकानाम् एव शब्दानां पूर्वैः बहुधा प्रयुक्तत्वात् प्रवृत्ता, न तु सुतरां न सन्ति एव इति । यदृच्छाशब्दानां प्रातिपदिकत्वसम्पादनार्थम् एव 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति सूत्रं प्राणायि पाणिनिना । अन्यथा सर्वेषां यौगिकत्वे कृत्तद्धितसमासाश्च इत्यनेन एव प्रातिपदिकत्वसम्पादनस्य सुशकत्वात् पृथक् सूत्रं व्यर्थं स्यात् । इदम् एव आह हरदत्तः - 'अर्थवत्सूत्रस्य डित्थादीनि अव्युत्पन्नान्येव उदाहरणानि, व्युत्पत्तौ कृदन्तत्वादेव सिद्धम्' इति । टिघुभादीनाम् एव शिष्टप्रयुक्तत्वात् साधुत्वम् इष्यते, न तु अन्येषां संज्ञाशब्दानाम् अव्युत्पन्नानाम् इति अभि-निवेशः अपि न उचितः । व्यासप्रभृतिभिः परमशिष्टत्वेन संमतैः इतरेषाम् अपि केवलरूढानां संज्ञाशब्दानां प्रयुक्तानां बहुधा उपलब्धेः । पाणिनेः एव शिष्टत्वं, न अन्येषाम् इति सङ्कोचोऽपि न कर्तुं शक्यते ।

**असम्पादयतः कञ्चिदर्थं जातिक्रियागुणैः ।**
**यदृच्छाशब्दवत् पुंसः संज्ञायै जन्म केवलम् ।।**

इति महाकवित्वेन परिगणितः विद्वत्कविः माघः संज्ञायै यदृच्छा-शब्दसत्ताम् उररीचकार । प्रथमं संस्कृतभाषायां जगति गुणक्रियासु कञ्चित् धर्मं प्रतिपादयितुम् एव संज्ञाशब्दाः अपि प्रयुक्ताः स्युः । तदाश्रित्य 'न सन्ति यदृच्छाशब्दाः' इति कैश्चित् उक्तं भवेत् । क्रमेण लोके व्यवहारार्थं प्रविष्टाः यदृच्छाशब्दाः इति विभावयन्ति विमर्शकाः । यथा तथा वा भवतु, यदृच्छा-शब्दाः अपि सन्ति इति एव ।

**नामकरणम्**

यदपि नागेशप्रभृतिभिः नामकरणे गृह्यस्मृतिबलात् स्वेच्छया अव्युत्पन्नानाम् अकृदन्तानां नामकरणे प्रतिषेधः उपावर्णि, सोऽपि आपात-रमणीयः । षोडशसंस्कारार्हाणां स्मृतिशास्त्रार्हत्वेन नामकरणे नियमस्य योग्यत्वात् । षोडशसंस्कारानर्हासु सर्वासु प्रजासु विशेषतः विदेशीयासु व्यक्तिषु गृह्यस्मृतिवचनस्य वैदिकाचारस्य धर्मशास्त्रनियमस्य च अन्वयः किं वैदिकैः इष्यते ? किञ्च जातस्य पुत्रस्य नामकरणविषये प्रवृत्तं स्मृतिवचनं ग्राम-नगर-देश-वस्तूनां नामकरणं कथं नियमयितुं प्रभवति ?

'कृतं कुर्यात् न तद्धितम्' इति वचनेन तद्धितान्तशब्दस्य नाम्नः प्रतिषिद्धत्वात् दाशरथिः इत्यादेः नाम्नः साधुत्वं कथम् अभ्युपगम्यते ? नास्त्येव साधुत्वम् इति तु साहसमात्रम् एव ।

ननु भोः, दाशरथिशब्दस्य व्याकरणशास्त्रसंस्कृतत्वात् न असाधुता वक्तुं शक्या । नामकरणे केवलं प्रतिषिद्धत्वात् मा भूत् संज्ञात्वेन विनियोगः इति चेत् मैवं वोचः ! कस्मिंश्चित् संज्ञात्वेन नामत्वेन उपयुक्ते दाशरथिशब्दे असाधुत्वस्य अस्माभिः आपादनात् । यस्मिन् अर्थे यः व्युत्पन्नः शब्दः तस्मिन् एव अर्थे स शब्दः साधुः, न तद्भिन्ने अर्थे । यथा – 'अधनः' इत्यर्थे व्युत्पन्नोऽपि अस्वशब्दः अश्वार्थे असाधुः एव । एवं तुरगार्थे व्युत्पन्नः अश्वशब्दः 'निर्धनः' इत्यर्थे असाधुः एव । रज्जुः इत्यर्थे व्युत्पन्नः 'दाम' इति शब्दः धामार्थे प्रयुक्तः असाधुः एव – इत्येवं महावैयाकरणेन नागेशेन स्वयं मञ्जूषादिषु स्पष्टम् उक्तत्वात्, तत्तुल्यन्यायेन दशरथापत्यम् इत्यर्थे व्युत्पन्नः अपि दाशरथिशब्दः दशरथसम्बन्धरहिते कस्यापि अनामधेयस्य पुत्रे प्रयुक्तः साधुताम् आवहेत् कथम् ?

'अस्मि' इति अहमर्थे तिङन्तप्रतिरूपकम् अव्ययम् इतिवत् दाशरथि-शब्दः तद्धितान्तप्रतिरूपकः अव्युत्पन्नः केवलसंज्ञाशब्दः इति साधुत्वं यदि समर्थ्यते तर्हि सा एव रीतिः कुतो न आश्रीयते अप्पी-कोण्डा-अप्प-अप्पय्यादिषु अपि ?

### संज्ञाशब्दानां न अपशब्दत्वं प्रयोगानर्हत्वं वा

सन्ति बहोः कालात् आरभ्य पुरुषेषु प्रयुक्ताः पण्डितैः अपि आदृताः साङ्केतिकाः शब्दाः कौण्डः, कौण्डभट्टः, अप्पय्यः, भट्टोजीदीक्षितः, नागोजिभट्टः, गुमानिः, मेण्ठकः, कृष्णपिल्लः, नम्मैयः, अरसीठक्कुरः, रिस्सुः इत्यादयः । एषु च केचन शास्त्रनिष्णाताः, केचित् च कवयः ।

व्याकरणशास्त्राव्युत्पन्नत्वात् निर्दिष्टानाम् एषां संज्ञाशब्दानाम् अप-शब्दत्वेन, 'न म्लेच्छितवै, नापभाषितवै, म्लेच्छो ह वा एष यदपशब्दः' इति प्रतिषिद्धप्रयोगत्वात् न प्रयोगार्हत्वं साधुत्वाभावात् इति न भेतव्यम् । व्याकरणसंस्कृते साधुशब्दे जाग्रति तदर्थप्रतिपादनेच्छया असंस्कृतः अपशब्दः साधुशब्दस्थाने न प्रयोक्तव्यः व्युत्पन्नानाम् असाधुशब्दात् साधु-

शब्दवाच्यस्य अर्थस्य अप्रतीतेः विपरीतार्थस्य अपि वा प्रतीतेः इति न म्लेच्छितवै इति वाक्याशयात् । अत एव तादृशस्य असाधोः अपशब्दत्व-व्यपदेशः गौः इति अर्थे संस्कृतः गौः सुशब्दः साधुः च । गावी गोणी गोपोतलिका इत्यादयः असाधवः अपशब्दाः । गौः इति स्थाने गोणीशब्दः न प्रयोक्तव्यः इत्येव । अन्यार्थे गोणीशब्दः साधुः एव । देवदत्तशब्दः देवदिण्णशब्दं व्यावर्तयति इति भाष्योक्त्या इदं स्पष्टं भवति ।

तस्मात् कस्याञ्चित् व्यक्तौ, वस्तुनि, ग्रामादौ वा यदृच्छया सङ्केतितात् शब्दात् तत्सङ्केतवेदिभिः सर्वैः अपि अभिमतार्थस्य अवगमात् सङ्केतितशब्द-निवर्तकस्य व्याकरणसंस्कृतस्य तदर्थबोधकस्य शब्दान्तरस्य अभावात् संज्ञाशब्दस्य अपशब्दत्वं प्रयोगानर्हत्वं च न प्रतिपादयितुं शक्यम् । केवल-रूढानां शब्दानां विषये आश्रीयमाणा रीतिः एषा, न यौगिकानां संज्ञाशब्दानां विषये ।

अवयवार्थविवक्षया देशभाषासु प्रयुक्तानां यौगिकानां योगरूढानां वा संज्ञाशब्दानां परं तदर्थबोधकव्याकरणसंस्कृतशब्दासत्त्वात् अपशब्दत्वम् इति तेषां संस्कृतभाषायां प्रयोगार्हत्वं न अभ्युपगन्तव्यम् । यथा – 'कुशल-पुरम्' इत्यर्थे 'कुशालपुरम्', 'कमलतटाक' इत्यर्थे 'तावरेकेरे' इति प्रयुक्तः ।

'सर्वेषां शब्दानां धातुजत्वेन व्युत्पन्नतया अव्युत्पन्नानाम् असंस्कृतानां शब्दानां सम्भवः एव न' इति केषाञ्चित् कल्पना भ्रान्तिमूला एव । तथा सति सर्वेषु शब्देषु यौगिकत्वस्य योगरूढत्वस्य वा निष्प्रत्यूहतया कोटिद्वय-बहिर्भूतस्य केवलरूढशब्दस्य तृतीयस्य अङ्गीकारः निष्फलः स्यात् ।

केवलरूढानां शब्दानाम् अपि धातुजत्वाभ्युपगमे क्वचित् शास्त्रीयदोषान् आशङ्क्य तत्परिहाराय कात्यायनपतञ्जलिभ्यां 'पक्षान्तरैरपि परिहाराः भवन्ति' इति ऋलृक्सूत्रभाष्योक्तन्यायानुसारेण 'प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः आचार्यस्य सिद्धम्', 'उणादयोऽव्युत्पन्नानि प्राति-पदिकानि' इति महाभाष्योक्तिः अपि अव्युत्पन्नयदृच्छाशब्दसद्भावं स्पष्टयति । 'प्रातिपदिकविज्ञानाच्च पाणिनेः' इति भाष्यप्रतीकम् उपादाय 'अत्र पाणिनेरित्युक्त्या पाणिनेरव्युत्पत्तिपक्षः एवाभिप्रेत इति दर्शयति' इति

नागेशः व्याचख्यौ ।

तथा च अव्युत्पन्नानां संज्ञात्वेन रूढानां संस्कृतभाषायां प्रयुक्तानां डित्थः, डवित्थः इत्यादीनाम् इव बहोः कालात् प्राचीनैः प्रयुक्तानां देशभाषासंज्ञा-शब्दानाम् अपि प्रातिपदिकत्वं सम्पाद्य संस्कृतीकरणेन संस्कृतभाषायां प्रयोगार्हत्वं साधुत्वं न दुष्यतीति सिद्धम् ।

**प्रयोगप्रामाण्यम्**

अस्ति च अत्र प्राचीनैः संस्कृतकविभिः शास्त्रज्ञैः विद्वद्भिः च देशभाषा-शब्दानां बहूनां संस्कृतीकरणपूर्वं कृताः प्रयोगाः अपि प्रमाणम् ।

इदं च पुनः अवधेयम् यत् न वयम् अधुना व्याकरणज्ञानपूर्वं साधुप्रयोगेण स्वर्गं सम्पादयितुं कृतोद्यमाः, येन पुण्यजनकतावच्छेदकत्वं साधुत्वम्, तच्च व्याकरणशास्त्रसंस्कृतेषु शब्देषु एव इति नानादेशभाषाशब्दानाम् अतथात्वात् तेषां संस्कृतभाषायां प्रयोगे न पुण्यावाप्तिः स्यात् इति विभीषिकावचनात् विरमेम ।

पुण्यावाप्तिः न इति किल उच्यते, दिष्ट्या तेषां प्रयोगे पापावाप्तिः भवति इति न उच्यते किल भागधेयम् अस्माकम् । 'दुष्यति चापशब्दैः' इति वचनात् अपशब्दप्रयोगे पापार्जनम् अपि भवति इति चिन्ता न कार्या संज्ञा-शब्दानां = यदृच्छाशब्दानाम् अपशब्दत्वाभावस्य पूर्वम् एव समर्थनात् ।

क्षीणशरीरायाः सुरभारत्याः परिपुष्टिविधानेन लुप्तप्रचारायाः सर्वत्र प्रचारकरणेन सार्वभौमीत्वप्रकाशनेन च भवति सुमहत् एव पुण्यं न पापलेशोऽपि इति विश्वासेन कर्मणि अस्मिन् उद्युक्ताः वयम् इति अक्षर-कार्यकर्तॄणां सुदृढो विश्वासः इति मन्ये अहम् ।

कृतम् अनेन सुमहता विमर्शेन । संस्कृतेतरभाषाशब्दानां संस्कृतीकरणे आश्रयणीयाः मार्गाः के इत्येव विचारः प्रकृतः ।

एतद्विषये पूर्वैः विद्वद्भिः कविभिः आश्रिताः मार्गाः लघूकुर्वन्ति अस्माकं चिन्ताभारम् ।

पर्षियन्देशवासिनः पारसीकाः, इङ्ग्लेण्ड्देशीयाः आङ्ग्लाः, जर्मन्-देशीयाः शर्मण्याः इति निर्दिश्यते । 'हूणाः करुणाहीनाः' इति प्रयुञ्जानः

वेङ्कटाध्वरिनामा कविः इंग्लेण्डदेशीयान् हूणाः इति निर्दिशति ।

शेक्स्पियर्नाम्नः कवेः नाटकानि संस्कृतभाषायाम् अनूदितवता केनचित् विदुषा (विशाखपत्तनस्थमहाराजशालासंस्कृतपण्डितेन वेङ्कटरमणाचार्य-नाम्ना) आंग्लेयसंज्ञापदानाम् अक्षरसादृश्येन स्वरमैत्र्या सिद्धानि सांस्कृतिक-रूपाणि परिकल्पितानि । दिङ्मात्रम् उदाह्रियते -

यथा - वेनिस् (Venice) - विनिशा<br>
कालिबान् (Caliban) - कालभानुः<br>
आण्टोनियो (Antoniyo) - अन्तनयः<br>
ओथेलो (Othelo) - उत्तालः<br>
मिराण्डा (Miranda) - मरन्दा<br>
बस्सानियो (Bassaniyo) - भासनीयः

श्रीविवेकानन्दचरितं संस्कृतभाषायां चम्पूप्रबन्धरूपेण प्रणीतवता केनचित् विदुषा ईषद्वर्णव्यत्यासम् आश्रित्य विदेशीयाः शब्दाः संस्कृती-कृताः । अत्र च उदाहरणम् -

'एलाहाबादम्', 'देहरादुनम्', 'मीरट्'मण्डलात्, आबुपर्वतम्, 'लिम्बडिपुरम्' इत्यादि ।

क्रैस्तस्य चरितं संस्कृतभाषायां रचितवता अन्येन विदुषा वर्णव्यत्यासम् अकृत्वा हलन्तान् केवलम् अदन्तान् विधाय संस्कृतीकरणं व्यधायि ।

यथा - दायूदस्य, दायूदः अब्राहामस्य (सन्तानः), अब्राहामः इस्हाकम् जनयामास । इस्हाको याकोबं, पेरसं, सेरहं च इत्यादि ।

ज्योतिषग्रन्थेषु प्रायः हलन्तानां तुरुष्कभाषाशब्दानाम् अदन्तताम् आश्रित्य एव संस्कृते प्रयोगः कृतः दृश्यते ।

यथा - इत्थसाल् = इत्थसालः    इक्कवाल् = इक्कवालः<br>
ईसराफ् = ईसराफः    खल्लासर् = खल्लासरः<br>
तम्बीर् = तम्बीरः    मूसरीफ् = मूसरीफः<br>
दुरुफ् = दुरुफः इत्यादि ।

एषा एव रीतिः आदृता इतरैः कविभिः अपि यथा - 'नव्वाबासफखान-

मनःप्रसादेन...सार्वभौम-शाहजहान-प्रसादाधिगत-पण्डितराजपदवी-विराजितेन' इत्यादिवाक्यसन्दर्भेषु । तथा - दाराशाहः, दिल्लीबादशाहः जलालुद्दीनः, अकबरशाहः इति च ।

एषु उदाहरणेषु सर्वत्र न केवलम् शब्दान्ते अकारः योजितः, शब्दमध्य-वर्तिनः अपि हलः स्थाने स्वरः एव (अकारः) प्रयुक्तः इति विशेषः ।

**प्रयोगप्रकारः**

अत्र अन्या काचित् समस्या समुत्तिष्ठेत - हलन्तानाम् अकारयोजनया अदन्तत्वम् आश्रित्य पादपाद्यकारान्तशब्दवत् स्वतः इकारान्तानाम् उकारान्तानां च वर्णयोजनाक्लेशं विना अपि हरिगुर्वादिशब्दवत् संस्कृत-भाषायां प्रयोगार्हत्वसम्पादनस्य सुशकत्वे अपि आकारान्तानां मुस्तफा-सुनफा इत्यादीनां, पराञ्जपे, आप्टे, हेगडे इत्याद्येकारान्तानां च संस्कृतीकरणे आश्रयणीयं विधानं किम् ? इति ।

संस्कृतीकरणोद्यमे प्रवृत्तैः अस्माभिः अवश्यं कश्चन मार्गः अव-लम्बनीयः एव ।

'किम् अनेन उपायान्वेषणप्रयासेन ! तत्तन्नामान्ते महोदय-महाशय-वर्येत्यादिशब्दयोजनया कार्यनिर्वाहः भवति । यथा - पराञ्जपेमहाशयः आप्टेमहाभागः' इति केषाञ्चित् सूचना न साधीयसी । न सर्वत्र पण्डित-पामर-शिष्याचार्य-यजमान-सेवक-साधारणाविशेषेण गौरवसूचकानां शब्दानां योजना कर्तुम् उचिता । अपि च भाषाशब्दानुपूर्वीपरिरक्षणे साधितेऽपि एकारान्तानां प्रथमं पदत्वसिद्धिं विना योजितेन संस्कृतेन महोदयपदेन समासः कथं भवति ?

मम तु एवं प्रतिभाति - आकारान्तस्य ह्रस्वाकारान्तत्वाश्रयणम्, एकारान्तानाम् अपि औचित्यानुसारं अकारान्तत्वस्य इकारान्तत्वस्य वा आश्रयणं युक्तम् इति । सत्यपि वर्णव्यत्यासे नामान्तरत्वबुद्धिः न भवितुम् अर्हति । मुस्तफा इत्यस्य स्थाने मुस्तफः इति प्रयुक्तं चेत् तत् एव इदम् इति प्रत्यभिज्ञानं भवति एव । एवम् एव पराञ्जपे इत्यस्य पराञ्जपः इति पराञ्जपिरिति वा कथनं न विरुद्धम् ।

ईदृशः वर्णव्यत्यासः भाषान्तरकरणस्थलेषु बहुषु आश्रितः एव, आदृतः च । यथा 'बेङ्गलूरु' इति स्थाने आङ्ग्लभाषायां 'बाङ्गलूर्' इति, 'मुम्बई' अथवा 'बोम्बाइ' इत्यस्य स्थाने 'बाम्बे' इति, 'पुणे' इत्यस्य स्थाने 'पूना' इति च प्रयुज्यते। वर्णानुपूर्वीव्यत्यासे सत्यपि उक्तोदाहरणेषु प्रत्यभिज्ञानाभावः अन्यनगरभ्रान्तिः वा जायते न कस्यापि ।

संज्ञान्तरबुद्धिः यथा न भवेत्, प्रत्यभिज्ञानं यथा न दुष्करं भवेत् तथा वर्णव्यत्यासः कार्यः इति नियमम् आश्रित्य संस्कृतीकरणसौलभ्याय वर्णाक्षरव्यत्यासः न दोषाय इति मन्यामहे वयम् ।

किञ्च हेगडे, आप्टे, पूजार इत्यादयः व्यक्तिविशेषे रूढाः यदृच्छाशब्दाः एव न भवन्ति । वंशविशेषे कुलविशेषे वा अर्थगतं प्रवृत्तिनिमित्तम् अपेक्ष्यैव प्रवृत्ताः यौगिकाः । अत एव रामकृष्ण हेगडे, जनार्दन हेगडे इत्यादिषु असाधारणनामभिः सह पठ्यन्ते । एतादृशेषु अवयवार्थं = योगार्थं परिज्ञाय तदर्थबोधकानां यौगिकानाम् एव संस्कृतशब्दानां तत्स्थाने प्रयोगः साधीयान् भवति ।

कस्यचित् नाम्नः अन्ते जीरिगे, मेणसिनकायि, अडिके इति उत्तर-कर्णाटकेषु योज्यते । तेषाम् अपि संस्कृतीकरणं दुष्यति एव अयदृच्छा-शब्दत्वात् । व्याकरणलक्षणातिवर्तिनां बहूनां प्राचीनैः प्रयुक्तानां शब्दानां साधुत्वं पृषोदरादीनि यथोपदिष्टम् इति महास्त्रम् उपयुज्य संसाधितमेव वैयाकरणैः अपि ।

इमाम् एव रीतिम् आश्रित्य व्यासादिभिः प्राचीनैः ऋषिभिः कृतान् प्रयोगान् प्रमाणीकृत्य, कथासरित्सागरादिषु ग्रन्थेषु प्रयुक्तान् 'थइल्लक' इत्यादीन् शब्दान् आलम्ब्य, मेण्ठकः, अरसीठक्करः, कृष्णपिल्लः, नम्मैयः, गुमानिः इत्यादिसंज्ञाशब्दान् कविषु प्रसिद्धान् च आश्रित्य विदेशीयभाषा-संज्ञाशब्दादीनां संस्कृतीकरणं न दोषाय, कल्पते महते फलाय इति मदीयम् अभिप्रायम् आवेदयामि । अत्र महान्तः विद्वांसः विमृशन्तु । आ परितोषात् विदुषां न साधु मन्ये मदुक्तम् ।

★★★

# ४. संज्ञाशब्दानां संस्कृते व्यवहारप्रकारः

संस्कृतेन यदा व्यवहारः क्रियते तदा विविधाः संज्ञाशब्दाः प्रयोक्तव्याः भवन्ति । व्यक्तयः, नगराणि, ग्रामाः, देशाः, वस्तूनि च निर्देष्टव्यानि भवन्ति । तादृशानां शब्दानां विभक्तियोजने किं प्रमाणम् ? यदि प्रमाणम् अस्ति तर्हि विभक्तियोजनं केन प्रकारेण ? प्रश्नद्वयस्य अपि उत्तरं दत्तम् अस्ति अत्र ।

भारतदेशे संस्कृतभाषा तावत् जनानां दैनन्दिनलोकव्यवहारेषु उपयुक्ता बभूव इति निश्चप्रचम् । तत्र विपुलानि गमकानि पाणिनीयव्याकरणे विभिन्न-काव्यनाटकादिषु च समुपलभ्यन्ते । तेषाम् इह गवेषणं न प्रस्तुतम् । क्रमेण सा लोकव्यवहारपथात् लुप्ता, ग्रन्थमात्रेषु पण्डितगोष्ठीषु च अवशिष्टा विलोक्यते इति न अविदितं सुमनसाम् । तस्याः क्रमिकलोपे च विद्यमानाः अपि हेतवः न इह गणयितुम् उद्दिष्टाः । संस्कृतस्य न्याय्यं भूतपूर्वं स्वकीयस्थानं प्रापयितुम् उपायचिन्तनं साम्प्रतम् । प्रथितं च बेङ्गलूरुनगरस्थस्य हिन्दुसेवा-प्रतिष्ठानस्य संस्कृतविभागो दिवानिशम् अस्मिन् पुण्ये महति कर्मणि आत्मानं नियोजयन् विविधेषु कार्यप्रसरेषु परिश्राम्यति इति ।

**क्लेशद्वयं व्यवहारे**

एवं संस्कृतभाषायाः प्रसरे काम्यमाने कार्यकर्तॄणां पुरः क्लेशद्वयं मूर्तीभवत् तिष्ठति । इदानीम् उपलभ्यमानानां परं व्यवहारेषु अपरिहार्याणां शब्दानां कार्त्स्न्येन प्रदर्शनं, विद्यमानानाम् अपि संज्ञाशब्दानां व्याकरणशास्त्रानुल्लङ्घनेन विभक्तियोजनाप्रकारं प्रदर्श्य संस्कारकरणं च इति । तत्र प्रथमकक्षाप्रविष्टाः

---

[इतः पूर्वं 'संज्ञाशब्दानां प्रयोगः' इति कश्चन लेखः मुद्रितः । तस्य, अस्य लेखस्य च विषयः यद्यपि समानः, तथापि पूर्वलेखे अनुक्ताः केचन अंशाः अस्मिन् लेखे विवृताः इत्यतः अयं लेखः अत्र यथावत् दत्तः । पुनरुक्तिः तु नाधिका दृश्यते अत्र ।]

अनुपलब्धाः शब्दाः यत्नेन अन्वेषणीयाः । ते च प्रायेण सङ्गीतनाट्यशास्त्रेषु, कौटिल्यादीनां नीतिशास्त्रेषु, शिल्पशास्त्रे, वैद्यकज्योतिषयोः, पूर्वमीमांसाग्रन्थेषु अलङ्कारशास्त्रे, प्राचीनकाव्यनाटकादिषु, पाकशास्त्रे च प्रयुक्ताः सन्ति । व्याकरणशास्त्रे तेषां गवेषणं सुलभम् । पाणिनीयधातुपाठे दर्शिताः अपि केचित् धातवः संस्कृते न प्रयुज्यन्ते, भाषान्तरेषु तु प्रयुज्यन्ते इति चित्रम् एतत् । दैनन्दिनव्यवहारेषु केवलम् आवश्यकाः इमे धातवः व्यवहारपथात् च्यवमाने संस्कृते नष्टप्रायाः बभूवुः इति अनुमीयते । प्राचीने काले अपि येन अर्थेन विना व्यवहारो न प्रकल्पेत, तदर्थबोधकः शब्दः तु नास्ति इति वचनम् अयुक्तम् । सूर्यवत् अर्थे प्रकाशमाने तद्वाचकेन शब्देन अवश्यं भाव्यम् । शब्दार्थयोः नित्यसम्बन्धाभ्युपगमात् । ये तु पदार्थाः पूर्वं न बभूवुः अधुनातनकाले नूतनसंयोजनेन आविष्करणेन वा निर्मिताः नूतननामकरणेन प्रकाश्यन्ते, तेषाम् अपि पदार्थानां संस्कृतशब्दैः एव नूतनं नामकरणं शक्यं विधातुम् । यथा - दूरवाणी, दूरदर्शनं, तन्त्रीवार्ता, पत्रप्रेषणालयः, रक्षाबन्धः (Book binding) इत्येवम् । नूतनतया संयोज्यमानाः शब्दाः किञ्चिदिव वैचित्र्यम् आवहेयुः श्रोतॄणाम् आदौ, न च संतृप्तिम् आदद्युः, तथापि कालेन रूढिम् आरूढाः सामञ्जस्यपदम् अञ्चन्ति ।

यदुक्तं पाणिनीयधातुपाठे दर्शिताः अपि केचित् धातवः संस्कृते न प्रयुज्यन्ते, भाषान्तरेषु तु प्रयुज्यन्ते इति, तत्र कानिचित् निदर्शनानि दर्शयामः ।

| पाणिनीयधातुपाठे | कन्नडभाषायाम् |
|---|---|
| १. अट्ट–अतिक्रमणहिंसनयोः । अट्टते | अट्टुत्ताने |
| २. हिष्क-हिंसायाम् । हिष्कयति । | हिसुकुत्ताने |
| ३. तुडि-तोडने । | |
| तोडनं दारणं हिंसनं च । तोडयति । | तोडुत्ताने |
| ४. चुट-छेदने । चोटयति । | चूटुत्ताने |
| ५. जुड-प्रेरणे । जोडयति । | जोडिसुत्ताने |

एवम् इदं दिक्प्रदर्शनम् । सन्ति एतादृशाः बहवो धातवः । तेषां सङ्ग्रहः कर्तव्यः । वाक्येषु तान् प्रयुज्य अर्थविशेषो विवरणीयः ।

इदानीं 'काशकृत्स्नधातुपाठः' इति कश्चित् ग्रन्थः उपलभ्यते । तत्र भूयांसः

सन्ति धातवः, शब्दतः अर्थतः च भाषान्तरीयधातुभिः सादृश्यम् आवहन्तः । परन्तु सः ग्रन्थः केनापि आधुनिकेन साहसिकेन निर्मितो न प्रामाण्यं भजते इति वृद्धाः । ममापि ग्रन्थः असौ न प्रामाण्यपदवीम् आटीकत इत्येव मतिः । संस्कृतभाषायाः प्रसारणोत्सुकैः प्रामाणिकविरोधः सर्वथा परिहरणीयः । व्याकरणशास्त्रम् उल्लङ्घ्य न किञ्चित् चेष्टितव्यम् ।

**संज्ञाशब्दानां व्यवहारप्रकारः**

स्यात् एतत् । संज्ञाशब्दानां संस्कृते व्यवहारप्रकारः इदानीं चिन्त्यते । इमे खलु संज्ञाशब्दाः – संस्कृते पूर्वम् उपयुक्ताः, अनुपयुक्ताः च इति द्विविधाः । प्रबन्धेऽस्मिन् स्त्रीपुरुषाणां पितृसङ्केतितानि नामानि, किञ्चित् उपाध्यन्तरैः अपि उपयुज्यमानानि, तथा ग्रामनगराणां च नामानि केवलं चिन्तनीयानि इति विषयः सीमितः । संस्कृते पूर्वम् उपयुक्तानि प्रसिद्धनामानि न अस्माकं क्लेशम् आवहन्ति । पुरातनैः संस्कृत्य प्रयोगात् तत्स्वरूपाणां निर्धारितत्वात् । प्रायेण हि पुरातनाः संज्ञाशब्दाः स्वरान्ताः एव । तत्र अपि ऋकाराद्यन्ताः न उपलभ्यन्ते । व्यञ्जनान्तेषु खलु अपि 'दुर्वासस्'प्रभृतयः पञ्चषाः स्युः, येभ्यो विभक्तियोजनं सुलभम् । ग्रामनगरवाचकानाम् अपि गतिः एषा एव । एवं धर्मशास्त्रानुरोधेन क्रियमाणानां नाम्नाम् अपि प्रयोगः सुलभः । अद्यत्वे तु स्त्रीपुरुषाणां ग्राम-नगराणां च नामानि विश्वरूपाणि । पाश्चात्त्यानां संज्ञाशब्दाः तु प्रायेण हलन्ताः संयोगान्ताः च । न खलु वयं जगति विद्यमानानां व्यवहारगोचराणां विश्वेषां नामानि परावर्तयितुं शक्नुमः । स्थितस्य गतेः चिन्तनीयत्वात् । व्यवहारार्थं कश्चित् अभ्युपायः एषितव्यः एव ।

ननु सन्ति एव लोके सहस्रशो विभिन्नाः भाषाः, तासु यः अभ्युपायः आश्रितः स एव अस्माकम् अपि भविष्यति इति किम् अधिकेन चिन्तनेन इति । मैवम् । संस्कृतव्याकरणनियमानाम् अन्यभाषीयनियमानां च वर्तते महान् भेदः । सर्वेभ्यः प्रातिपदिकेभ्यः विभक्तेः उत्पत्त्या भाव्यम् एव अस्माकम्, 'अपदं न प्रयुञ्जीत' इति निषेधात् । सत्यां विभक्तेः उत्पत्तौ विविधविधिनिषेध-पराणि शास्त्राणि अहमहमिकया प्राप्नुवन्ति । अजन्तेभ्यः हलन्तेभ्यः च प्राप्नुवन्तः सुप्प्रत्ययाः प्रातिपदिकेषु रूपान्तराणि प्रापयन्ति, स्वयमपि भिद्यमानाः । लिङ्गभेदात् रूपभेदः च । सन्धिकार्याणि च उपप्लवन्ते ।

विशेषतः पदकार्याणि झल्परककार्याणि च । भोजन्, क्लिण्टन् इत्यादौ नलोपः; अय्यर्, हिट्लर् इत्यादौ विसर्गः; साक्रटिस्, फर्नाण्डिस् इत्यादौ रुत्वम्; क्रुश्चेव्, झुकोव् इत्यादौ ऊठ्; लक्नौ, ओस्लो इत्यादौ आकारादेशः; इङ्ग्लण्ड्, स्काटलण्ड् इत्यादौ संयोगान्तलोपः च इति बहु उपप्लवप्रसङ्गः । कृतेषु तेषु आदेशलोपादिषु संज्ञास्वरूपस्य भङ्गः । विकृतरूपश्रवणं च श्रोतॄणां महान्तम् उद्वेगं जनयति, स्वयं च हास्यास्पदत्वं भजते । नैषा रीतिः क्वचित् अन्यभाषासु सम्भवति इति अलं प्रपञ्चेन । एवं च सति संस्कृतहितेच्छुभिः कश्चित् नूतनः अभ्युपायः आश्रयितव्यः एव । कः असौ ?

**शब्दान्तरयोजनस्य इयत्ता**

एवमस्मान् अभिषेणयन्त्रीः समस्याः परिहर्तुं केचित् पण्डिताः सुलभोपायम् एकम् आश्रयन्ते । महोदय-महाशय-नामक-ग्राम-नगर्यादिशब्दान् संज्ञाशब्दान्ते योजयन्ति । यथा - ब्यानर्जीमहोदयः, नरसिंहराव्महाशयः, चर्चिल्नामकः, पुत्तूरुग्रामः, बेङ्गलूरुनगरी इत्यादि । एवं शब्दान्तरयोजनं यद्यपि न दुष्यति, तथापि अनेन पथा न शक्यते पारम् अधिष्ठातुम् । बालकेषु, शिष्येषु, पुत्रेषु, भृत्येषु, अन्येषु अपि प्राकृतेषु नामान्ते महोदयादिशब्दयोजनं न युज्यते, न च कोऽपि अभिकामयते तादृशप्रयोगम् । तदेतत् संस्कृतभाषायाः काम् अपि न्यूनताम् एव प्रदर्शयेत्, व्यवहारानुपयोगितां च । नापि तादृशप्रयोगैः भाषा सौष्ठवं भजते । गत्यन्तरादर्शनेन तु समाश्रितः अयम् अनाञ्जसः पन्थाः । तस्माद् अस्माभिः अन्यः प्रकारः प्रदर्श्यते विदुषाम् अनुमोदनाय ।

**योग्यः प्रकारः**

सर्वे हलन्ताः संज्ञाशब्दाः आगन्तुना अकारेण सहोच्चार्यमाणाः अकारान्ताः कर्तव्याः इति उत्सर्गः । यथा - रामय्यर् = रामय्यरः, कृष्णराव् = कृष्णरावः इत्येवम् । केचित् तु 'राव'शब्दम् अपनीय 'राय'शब्दं प्रयुञ्जते । 'कृष्णरायः' इति एव यदि व्यावहारिकं नाम तर्हि स प्रकारो युक्तः एव । अन्यथा वकारस्य स्थाने यकारोपदेशो व्यर्थः, अन्यरूपप्रतीतिकरः च । भीमाचार् इत्यत्र भीमाचार्यः इति, श्रीनिवासय्यङ्गार् इत्यत्र श्रीनिवासय्यङ्गार्यः इति च युक्तरूपम् । आचार्यशब्दस्य 'आचार्' विकृतिः, अय्यङ्गार्यशब्दस्य 'अय्यङ्गार्' विकृतिः इति अभ्युपगमात् । एवं 'शेट्टि'शब्दस्य 'श्रेष्ठि'शब्दः प्रकृतिः इति,

'वेङ्कटाचलशेट्टि'शब्दं 'वेङ्कटाचलश्रेष्ठी' इति यदि परिवर्तयामहे तर्हि न दोषः । प्रकृतिवाचकेन नाम्नो ग्रहणे न कोऽपि विमनायते । सुब्रह्मण्यम्, वेङ्कटाचलम्, कृष्णन् इत्यादिषु अन्त्यस्य हलः वर्जनं भवतु । यदि पूजा प्रयोक्तव्या तदा सुब्रह्मण्यमहोदयः इत्यादिव्यवहारः अभ्युपगम्यते एव । 'रङ्गराव्' इत्येतत् पूर्वोक्तरीत्या 'रङ्गरावः' भवतु । यदि 'रङ्गराजन्' इति व्यावहारिकं नाम तदा 'रङ्गराजः' भवितुम् अर्हति । यदि तु 'राजन्' इति, 'राज' इत्येव वा मूलभूतं नाम, तदा कथम् इति चिन्तनीयम् । यदि नकारान्तः राजशब्दः प्रयुज्यते नृपतिः इति अर्थः प्रतीयते । तस्मात् अकारान्तः राजशब्दः संज्ञायां युक्तः ।

राजण्ण-रामण्ण-भीमण्णशब्दाः अकारान्ताः प्रयुज्यन्ताम् । कः दोषः ? यथा - कल्हण-बिल्हण-सायण-मायण-शिङ्गणादयः । राजण्णः, राजण्णेन इत्यादिपदानि प्रथमं विकृतानि इव प्रतिभासन्ते अश्रुतपूर्वत्वात् । पौनःपुन्येन प्रयुज्यमानेषु परं सायणेन, विल्हणस्य इत्यादिपदैः साम्यं भजन्ते कालेन । न च अत्र साधुत्वासाधुत्वचिन्ता । यादृच्छिकाः खलु संज्ञाशब्दाः, यथा - डित्थडवित्थौ । यथा वा - उव्वट-मम्मट-कैयट-जैयट-रुद्रट-रुय्यकादयः । यथा वा भट्टिः । 'न किञ्चिदपि रेवणः' इति प्राचीनः प्रयोगः । एवम् अप्पय्यदीक्षित-भट्टोजिदीक्षित-नागोजिभट्ट-कोण्डभट्टप्रभृतयः शब्दाः समान-योगक्षेमाः द्रष्टव्याः । अप्पय्यादिशब्देभ्यः सुबुत्पत्तौ सत्यां हि समासः । तेषाम् अर्थवत्प्रातिपदिकत्वाभावे कथं सुबुत्पत्तिरिति चिन्त्यताम् । चिरन्तनैः महावैयाकरणैः एव अनुगतः मार्गः अस्माभिः अनुगम्यते, न तु नूतनः । महावैयाकरणः नागेशभट्टः एव 'इति कैयटः', 'इति कैयटेन उक्तम्' इति सहस्रकृत्वः प्रयुङ्क्ते । 'कैयटो जैयटात्मजः' इति कैयटः एव प्रयुक्तवान् । तद्धितप्रकरणे गणेषु पठितानां गर्ग-यास्क-तिकादिशब्दानां संज्ञाशब्दत्वात् एव साधुत्वम् इति विभावनीयम् । अतः एव होय्सळ-बल्लाळगङ्ग-चालुक्यादीनां कुलनाम्नां प्रयोगः अपि संस्कृते न दुष्यति । रूढनाम्नां पर्यायपदप्रयोगासहत्वात् ।

पाश्चात्त्यानां म्लेच्छानां च नामानि प्रायेण हलन्तानि । तेषाम् उच्चारणार्थेन अकारेण योगः सुलभः । चर्चिलः, हिट्लरः, माक्स्मुल्लरः, करीमः, अब्दुल्लः इत्येतादृशानि रूपाणि भवन्तु । स्त्रीणां नामसु परम् अकारान्तात् टाब् विधेयः । एलिजबेता, सेलीमा इत्यादिरूपाणि सन्तु नाम । संज्ञास्वरूपस्य

अवधारणं तु भवति ऊहेन तद्विदाम् । तन्नाम्नां युक्ततमम् उच्चारणं हि तदन्यभाषीयाणां सर्वेषां सर्वदा दुष्करम् एव ।

इयमेव रीतिः अनुसर्तुं शक्यते ग्रामनगरदेशानां नामसु । हैदराबाद, अलहाबाद, लण्डन, बर्लिन, इङ्ग्लण्ड, फ्रान्स इत्येवम् । प्रयुक्तानि च ग्रामादीनां देशभाषानामानि भूयांसि शिलाशासनेषु ताम्रपत्रेषु च ।

इकारान्ताः सर्वे संज्ञाशब्दाः पुरुषवाचकाः हरिशब्दवत् रूपाणि प्राप्नुवन्तु । स्त्रीवाचकाः तु मतिशब्दवत् । ईकारान्ताः पुरुषवाचकाः प्रायेण न सन्ति । यदि सन्ति वातप्रमीशब्दवत् भवन्तु । स्त्रीलिङ्गातु ङीबन्तवत् । एवम् उकारान्तेषु ऊकारान्तेषु च यथायथम् ऊह्यम् । ऋकारान्ताः संज्ञाशब्दाः न उपलभ्यन्ते । एजन्तेषु परं समुद्भवति समस्या । एजन्तसंज्ञाशब्दानां संस्कृतभाषायाम् अश्रुत-चरत्वात् । संज्ञाशब्देतरेषु अपि शब्देषु एकारान्तः स्वभाविको नास्ति । ऐकारान्तो रैशब्दः केवलः । ओकारान्तो गोशब्दः एकः । औकारान्तेषु ग्लौ-नौ-द्यौशब्दाः त्रयः एव ।

## एजन्तादिषु कथम् ?

एवं स्थिते, हेगडे-पराञ्पे-अन्तुलेप्रभृतीनां मनुष्यनाम्नां, लक्नो-ग्लास्को-टोकियोप्रभृतीनां नगरनाम्नां, तथैव ईदृशानां ग्रामदेशनाम्नां साक्षात् विभक्ति-योजने सम्भवन्ति यानि पदरूपाणि तानि चिन्तनीयानि । व्याकरणशास्त्रानुरोधेन सम्पद्यमानं रूपं श्रोतॄणां कर्णौ वेधयेत्, उद्वेगं जनयेत्, संज्ञास्वरूपं च भञ्जयेत् । न हि व्याकरणशास्त्रानुमतिः अस्ति इति तदनुरोधेन पदप्रयोगः सुकरः । वस्तुस्थितेः एव अनुरोध्यत्वात्, व्याकरणेन लोके प्रयुक्तानाम् अन्वाख्यानात् । शिष्टप्रयुक्तशब्दनिदर्शनेन खलु पूर्वं हिट्लर-चर्चिलादयः शब्दाः अस्माभिः निरूपिताः अनुमोदिताः च । इमे च भूयांसः शब्दाः निदर्शनम् अर्हन्ति । यथा - सोमिलः, साहिलः, सोड्डलः, जल्हणः, भट्टतौतः, तिरुमलः च ।

१. कर्णाटरक्षाकरणे नितान्तं विचारवान् बेङ्कटदेवरायः ।

२. शीला-विद्या-मारुला-मोरिकाद्याः ।

३. चन्दाखानमवैमि यत्तव खुरानाश्चर्यमालोकये ।

४. यूनिवर्सिटिरशेषशिक्षया, वेदकाव्यगणितादिदीक्षया

इत्यादयः अत्र निदर्शनम् अर्हन्ति ।

विजयिनीकाव्ये जार्जदेवः इत्यादयः प्रयोगाः । विक्टोरियाप्रशस्तौ, 'राज्ञी विक्टोरिया नाम' इत्यादिप्रयोगः । कल्हणस्य राजतरङ्गिण्यां तु देशभाषानुरोधेन कृताः ग्रामनगरादिवाचकाः, खान-रहिमादयो महम्मदीयनृपाणां बोधकाः च शब्दाः भूयांसः उपलभ्यन्ते । एजन्ताः संज्ञाशब्दाः पूर्वप्रयुक्ताः न उपलभ्यन्ते इति अस्माकम् आतङ्कः । शिष्टगृहीतेषु व्याकरणविधेः सञ्चारः । आमनन्ति हि भाष्यकाराः तत्र तत्र 'प्रयुक्तानामिदमन्वाख्यानम्' इति, 'यथालक्षणमप्रयुक्ते' इति च । शशः अस्य अस्ति इति शशी चन्द्रः । 'अत इनिठनौ' इति मत्वर्थीयः इनिः । न च एवं मृगः अस्य अस्ति इति मृगी चन्द्रः इति भवति । तत्र मृगाङ्कः इत्येव भवति चन्द्राभिधायी शब्दः । इदमेव दृष्टान्तयन् श्रीहर्षः नैषधीयचरिते -

*भङ्क्तुं प्रभुर्व्याकरणस्य दर्पं पदप्रयोगाध्वनि लोक एषः ।*
*शशो यदस्तीति शशी ततोऽयमेवं मृगोऽस्यास्ति मृगीति लोकः ।।*

इति व्याजहार ।

**एवं भवितुम् अर्हति मार्गः**

अस्मिन् व्यतिकरे प्राप्ते यत् मे प्रतिभाति तत् उच्यते । एजन्ताः स्वातन्त्र्येण न प्रयोज्याः । महाशयादिशब्दोत्तराः एव ते प्रयोगम् अर्हन्ति । हेगडे-महोदयः, पराञ्जपेमहोदयः, लक्नोनगरम्, ग्लास्कोनगरी, होडबट्टेग्रामः इत्येवम् । यदा तु पुत्रबालकादिषु महाशयादिशब्दयोजनं न समुचितं तत्र शब्दान्तरं योजनीयम् । स्वार्थिकः कप्रत्ययः बन्धुशब्दः गोत्रशब्दः च, नाम-नामकौ वा शक्यन्ते प्रयोक्तुम् । यथा - हेगडेकः हेगडेबन्धुः, हेगडेगोत्रः, हेगडेनामा, हेगडेनामको वा । अस्मिन् विषये प्रयोक्तॄणां कामचारः अस्तु । यस्मै यत् रोचते तत् अन्यस्मै न रोचते । कालेन काचित् व्यवस्था भविष्यति । ग्रामनगरादिषु परं स स शब्दः योजनीयः एव । सर्वथा एजन्ताः स्वातन्त्र्येण न प्रयोज्याः इति स्थितिः । हलन्तेषु ईकाराद्यन्तेषु च नगरदेशादिशब्दयोजनं समुचितमेव । लण्डन्नगरे, इटलिदेशे इत्यादिः । मुम्बयीदिल्लीशब्दौ स्त्रियां प्रयुक्तौ मुम्बय्याम्, दिल्ल्याम् इत्येवम् । भवतु एवम् । न अस्माभिः अस्मिन् विषये सूक्ष्मवेदिभिः अक्षिपात्रकल्पैः भवितव्यम् इति ।

## विप्रतिपत्तिः परिहारश्च

अत्र कश्चित् प्रत्यवतिष्ठेत – ''ननु लघुमञ्जूषायां नागेशभट्टैः देशभाषानुसारेण कृतानां कूची-मञ्ची-आप्यकोण्ड-इत्यादिनाम्नाम् असाधुत्वमेव इति उक्तम् । ततः च पूर्वोक्तानां संज्ञाशब्दानाम् असाधुत्वात् कथं सुबुत्पत्तिः इति । अत्र उच्यते - ''अपभ्रंशानाम् अपि शक्तिमत्त्वात् वाचकत्वं नागेशभट्टैः एव अङ्गीकृतम् । एवं च तेषाम् अर्थवत्त्वात् प्रातिपदिकत्वे किं बाधकम् ? अननुशिष्टत्वं बाधकम् इति चेत् मणिनूपुरादिशब्दानाम् अत्यन्तरूढानां डित्थ-डवित्थादीनां च असाधुत्वापत्तिः । शिष्टाप्रयुक्तत्वं साधुत्वे बाधकम् इति चेत् जातिगुणक्रियाप्रवृत्तिनिमित्तकेषु शब्देषु तस्य बाधकत्वे अपि संज्ञाशब्देषु तस्य बाधकत्वस्य अनङ्गीकारात् । यादृच्छिकाः हि संज्ञाशब्दाः । स्वेच्छया व्यक्तौ सङ्केत्यमानः शब्दो हि यदृच्छाशब्दः । तत्र शब्दः एव प्रवृत्तिनिमित्तम्, आनन्त्यव्यभिचारयोः अभावात् । एकप्रवृत्तिनिमित्तकत्वे सति अनुशिष्टेन शिष्टप्रयुक्तेन वा प्रकृतिशब्देन निवर्त्यत्वम् असाधुत्वम् । प्रकृतिशब्दनिवर्त्यत्वं च तद्विकृतित्वेन भासमानशब्दस्य एव । गोशब्दः 'गावी'शब्दं, मल्लिकाशब्दः 'मल्लिगे'शब्दं च निवर्तयति इति गाव्यादीनाम् असाधुत्वम् । कः खलु शब्दः संज्ञाशब्दं निवर्तयेत् ? संज्ञाशब्दानां पर्यायशब्दाः कस्याम् अपि भाषायां न भवन्ति इति निवर्त्यत्वम् एव दूरापास्तम् । 'पक्षान्तरैः अपि परिहाराः भवन्ति' इति वदता भाष्यकारेण यदृच्छाशब्दानां स्वीकारात् । 'कुशल्यसि तुषजक' इति भाष्ये एव शूद्रं प्रति 'तुषजक' इति संज्ञाशब्दप्रयोगात् । 'यर्वाणस्तर्वाणः नाम ऋषयो बभूवुः' इति भाष्यवाक्ये रुत्वोत्वादिप्रदर्शनात् च यादृच्छिक-संज्ञाशब्देभ्यः सुबुत्पत्तिः साध्वी इति गम्यते । कूची, मञ्ची इत्यादीनाम् असाधुत्वकीर्तनं धर्मशास्त्रदृष्ट्या । अतः एव 'घोषवदाद्यक्षरमन्तरन्तःस्थं द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यात् न तद्धितम्' इत्यादिधर्मशास्त्रविरोधः नागेशभट्टैः एव उद्भावितः । 'द्व्यक्षरं प्रतिष्ठाकामः, चतुरक्षरम् आयुष्कामः' इत्यादिदर्शनात् काम्यविधिः एव धर्मशास्त्रोक्तः । कथम् अन्यथा कैयट-रुय्यकादिशब्दानां साधुता ? कथं पतञ्जलिः ? घोषवत् आद्यक्षरत्वाभावात् । कथं वा नागेशः ? अयुग्माक्षरत्वात् । पुरुषस्य हि युग्माक्षरं नाम शास्त्रोक्तम् । अप्पय्यदीक्षित-भट्टोजिदीक्षित-कोण्डभट्टादिशब्देषु अप्पय्यप्रभृतिशब्देभ्यः सुबुत्पत्त्यभावे समासः एव दुर्लभः स्यात् । एषाम् अनादिशिष्टप्रयुक्तत्वात्

साधुत्वम् इति वचनं तु छलमात्रम् ।

यदि वा नागेशभट्टानां मतम् अन्यथा एव इति समर्थ्यते तथापि न दोषः । भट्टोजिदीक्षितप्रभृतिभिः प्राचीनैः महावैयाकरणैः यादृच्छिकसंज्ञाशब्देभ्यः सुबुत्पत्तेः स्वीकारात् इति संक्षेपः ।

पण्डितजनेषु सविनया विज्ञप्तिः । संस्कृतसरस्वत्याः व्यवहारभूमौ उपबृंहणार्थम् इदम् एकं प्राथमिकं चिन्तनम् । न च एनत् कोऽपि विवादभूमिम् आरोपयतु इति सप्रश्रयं प्रार्थये । सर्वे अपि विद्वांसः सुहृद्भावेन विचारमिमम् परिशीलयन्तु । समीचीनं मार्गान्तरं सूचयन्तु । इदम् इदानीम् एकनीडं जगत् । यदि संस्कृतं सर्वात्मना व्यवहारगोचरतां न आसादयिष्यति तर्हि तदभिवृद्धिः कुण्ठिता एव भविष्यति । व्याकरणशास्त्रविरुद्धप्रयोगः तु सर्वथा दूरीकरणीयः एव । दैव्याः वाचः सेवार्थं सौमनस्येन यतेमहि इति शिवम् ।

## दन्ते रक्षणीये, दन्तद्वयम् अपाकृतम्

कदाचित् रङ्गनाथशर्मवर्यः दन्तचिकित्सार्थं गच्छन् आसीत् । तदवसरे डि.वि.गुण्डप्पवर्यः अभिमुखम् आगतः । सः रङ्गनाथशर्मवर्यस्य गमनोद्देश्यं ज्ञात्वा अवदत् - ''**एकदन्तस्स वै कुर्यादद्य वो दन्तमङ्गलम्**'' इति । (एकदन्तः अद्य भवतः दन्तं रक्षेत् ।)

दन्तचिकित्सां प्राप्य प्रत्यागतः रङ्गनाथशर्मवर्यः गुण्डप्पवर्यं दृष्ट्वा अवदत् - ''**असूययैव भगवान् दन्तद्वयमपाहरत्**'' इति ।

(एकदन्तवान् सः गजाननः असूयया इव मम दन्तद्वयस्य अपहरणं कारितवान् ।)

# ५. संस्कृतवाङ्मये विश्वजनीना लौकिकदृष्टिः

संस्कृतवाङ्मयं प्रायः द्वेधा विभज्यते - पारमार्थिकम् ऐहलौकिकं चेति । तत्र ये पारमार्थिकं सौख्यम् अभिलषन्ति, ये च ऐहलौकिकं सुखम् अपेक्षन्ते, तेषाम् उभयेषाम् अपि हिताय प्रवृत्ता अस्ति इयं संस्कृतसरस्वती ।

*सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।*
*सर्वः सुखमवाप्नोतु मा कश्चिद्दुःखभाग् भवेत् ॥* इति इयं संस्कृतवाणी स्वस्ति वाचयति सर्वाभ्यः प्रजाभ्यः ।

'कृण्वन्तो विश्वमार्यम्' इति वदति भगवान् वेदः । जगदिदम् आर्यं कर्तुम् ऋषयः प्रवृत्ताः । आर्यो नाम पूज्यः । पूज्यता च मनुष्यस्य शीलेन, सम्यक् चारित्र्येण, विद्यया, वित्तेन च । आह च तत्रभवान् मनुः -

*एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।*
*स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥* इति ।

'विश्वम् आर्यं कृण्वन्तः', 'सर्वमानवाः स्वं स्वं चरित्रं शिक्षेरन्' इति वचनद्वयेन संक्षेपतः प्रतिपादिता भवति संस्कृतभाषया व्यवहर्तॄणां सर्वजन-कल्याणैषिणी शुभदृष्टिः । एवं सत्यपि केचित् भारतीयाः एव जनाः अस्याः महिमानम् अजानन्तः तिरस्कारभावेन पृच्छन्ति - ''संस्कृतभाषायां किम् अस्ति ? किमर्थम् अध्येतव्यं संस्कृतम् ? संस्कृते केवलं जातिमतसम्बद्धाः नियमाः, देवतानां राक्षसानां च कथाः, पुराकल्पसम्बद्धानि पौराणिकानि कल्पितचरितानि च भवेयुः । विवाहादिसमये पुरोहितैः पठ्यमानाः दुरवगमार्थाः अनर्थकाः वा केचन मन्त्राः स्युः । किमिव हि प्रयोजनम् अस्माकम् अनया

भाषया ?'' इति । 'एषा हि पुरोहितभाषा, ब्राह्मणजातीयानां भाषा, अन्धविश्वासं पोषयति केवलम्' इति दोषारोपणम् अपि कुर्वन्ति ते ।

अत्रेदं वक्तव्यं सङ्क्षेपतः सौम्यम् उत्तरम् । यत्तावत् उच्यते संस्कृतभाषा पुरोहितभाषा केवलं ब्राह्मणायत्ता इति, सः एषः मिथ्यापवादः अज्ञानकल्पितः । न हि तत्र किञ्चिदपि प्रमाणम् अस्ति । प्रत्युत सार्वजनिकी भाषा नैव जातिप्रतिबद्धा इत्यत्र सन्ति प्रमाणानि । समाजे जनैः खलु भाष्यमाणा भाषा इत्युच्यते । भाषायाः जातिसम्बन्धो भवतीति न क्वचित् अस्माभिः श्रुतम् । वाल्मीकिरामायणे तावत् इयम् अस्ति फलश्रुतिः -

*पठन् द्विजो वागृषभत्वमीयात्*
*स्यात् क्षत्रियो भूमिपतित्वमीयात् ।*
*वणिग्जनः पण्यपतित्वमीयात्*
*जनश्च शूद्रोऽपि महत्त्वमीयात् ।।* इति ।

अत्र 'पठन्' इति पदं सर्वत्र अनुवर्तते । 'रामायणं पठन् शूद्रः महत्त्वम् ईयात्' इति अभिहितम् । वाल्मीकिरामायणं हि संस्कृतभाषया रचितमस्ति । अतः सिद्धः रामायणपठनाधिकारः सर्वस्य । महाभारते च -

*स्त्रीशूद्रद्विजबन्धूनां श्रुतिर्न श्रुतिगोचरा ।*
*अतो भारतमाख्यानं कृपया मुनिना कृतम् ।।* इत्युक्तम् ।

अतः शूद्रादीनां कृते महाभारतं प्रणीतम् इति स्फुटम् । विष्णुसहस्रनामस्तोत्रे च - 'य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत्' इत्यारभ्य 'शूद्रः सुखमवाप्नुयात्' इति उपसंहृतम् । 'ज्ञाने सर्वेषाम् अपि अधिकारः । न हि ज्ञानं दण्डवारितम्' इति श्रीशङ्करभगवत्पादाः । विदुरः चतुर्थवर्णोऽपि ज्ञानी आसीत्, धृतराष्ट्राय च नीतिम् उपदिष्टवान् इति महाभारते प्रसिद्धम् । तत्रैव धर्मव्याधः सैनिकः मांसविक्रयी कस्मैचित् ब्राह्मणाय धर्मम् उपदिष्टवान् इति स्मृतम् । भागवतस्य दशमस्कन्धे -

'रोमहर्षणो नाम प्रतिलोमजः सूतः व्यासमहर्षेः शिष्य आसीत् । स च -

*ऋषेर्भगवतो भूत्वा शिष्योऽधीत्य बहूनि च ।*
*सेतिहासपुराणानि धर्मशास्त्राणि सर्वशः ।।* - विप्रेभ्यः पुराणानि श्रावयति स्म' इति अभिहितम् । रोमहर्षणस्य पुत्रः उग्रश्रवाः नाम सूतपौराणिकः

इत्येव प्रसिद्धः । किञ्च व्याकरणशास्त्रे महाभाष्यकारः पतञ्जलिः संस्कृतशब्दम् अधिकृत्य अप्रयुक्ताः अपि शब्दाः सन्तीति शङ्कायां *'सर्वे खल्वपि एते शब्दाः देशान्तरेषु प्रयुज्यन्ते'* इत्युक्त्वा *'महान् शब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती । त्रयो लोकाः'* इति अभिदधे । यदि एषा पुरोहितभाषा स्यात् तर्हि कथङ्कारम् इयं देशान्तराणि सप्तद्वीपां वसुमतीं लोकत्रयं च व्याप्नुयात् इति विचिन्त्यताम् ।

किञ्च 'अजेर्व्यघञपोः' इति सूत्रे भाष्ये पतञ्जलिः कस्यचित् रथस्य प्राजितुः सूतस्य वैयाकरणस्य च संवादम् उदाहरति । तथा हि - 'एवं हि कश्चित् वैयाकरण आह - कोऽस्य रथस्य प्रवेतेति । सूत आह - प्राप्तिज्ञो देवानांप्रियः, न त्विष्टिज्ञः । इष्यत एतद्रूपमिति । वैयाकरण आह - अहो नु खल्वनेन दुरुतेन बाध्यामह इति । सूत आह - न खलु वेञः सूतः । सुवतेरेव सूतः । यदि सुवतेः कुत्सा प्रयोक्तव्या दुःसूतेनेति वक्तव्यम् इति ।' अत्र हि कश्चित् सारथिः (जटकावाला) कञ्चन वैयाकरणं शास्त्रे पराजयते इति दर्शितम् ।

यदि नाम संस्कृतभाषा ब्राह्मणायत्ता स्यात्, कथं तर्हि आर्यदेवः, भाविवेकः, शान्तरक्षितः, धर्मकीर्तिः, नागार्जुनः, दिङ्नागः, चन्द्रकीर्तिः इत्यादिभिः परश्शतैः बौद्धमतीयैः उद्दामपण्डितैः विपुलाः तर्ककर्कशाः बौद्धदर्शनग्रन्थाः संस्कृतभाषया विरचिताः ? कथञ्च सहस्राधिकाः बौद्धमतीयाः संस्कृतग्रन्थाः चीनीभाषया परिवर्तिताः ? कथञ्च जैनमतीयाः उमास्वाति-पूज्यपाद-समन्तभद्र-बट्टाकलङ्क-हरिभद्रवादिराज-अमृतचन्द्रसूरि-हेमचन्द्रप्रभृतयः विख्याताः आचार्याः प्रौढान् जैनदार्शनिकग्रन्थान् प्रणेतुं शक्ताः अभवन् इति विभाव्यताम् । अवैदिकाश्च लाकुल-कालामुख-पाशुपतादीनां तान्त्रिकग्रन्थाश्च संस्कृतभाषायां कथं प्रवृत्ताः इति च विभावनीयम् । भारतीयानां संस्कृतभाषामयं ज्यौतिषं शास्त्रं म्लेच्छेषु प्रतिष्ठितम् आसीत् इति । वराहमिहिराचार्यः कथयति -

*म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम् ।*
*द्विजवत्तेऽपि पूज्यन्ते किं पुनर्वेदविद् द्विजः ॥* इति ।

आलबरूनि, फैसि, अबुल्फसल्, दाराशिको इत्यादयः विद्वांसः रामायण-महाभारत-पञ्चतन्त्र-भगवद्गीतोपनिषदादीन् ग्रन्थान् फार्सीभाषया परिवर्तयामासुः इति प्रसिद्धम् इतिहासेषु । एवम् एतेषु अन्येषु प्रमाणेषु च जाग्रत्सु 'संस्कृतभाषा

पुरोहितभाषा, जातिविशेषस्य भाषा' इत्यादीनि अर्थशून्यानि जल्पनानि हेयानि एव इति न किञ्चिदेतत् ।

स्यादेतत् । कानि पुनरिदानीं संस्कृतवाङ्मयानि जातिमतसम्बन्धराहित्येन सर्वजनहितेप्सया प्रवृत्तानि इति किञ्चित् निरूपयामः । इह तावत् अष्टादश विद्यास्थानानि परिगणितानि –

*अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।*
*धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ।।* इत्युक्त्वा
*आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।*
*अर्थशास्त्रं चतुर्थश्च विद्या ह्यष्टादशैव ताः ।।*

इति विष्णुपुराणे कथनात् । अत्र अष्टादशोपपुराणानां पुराणेषु अन्तर्भावः । वेदान्तस्य मीमांसायां, वैशेषिकशास्त्रस्य न्याये, महाभारतरामायणयोः, साङ्ख्य-पातञ्जल-पाशुपत-वैष्णवादीनां च धर्मशास्त्रेषु अन्तर्भावः इत्युक्तम् । अमर-हेमचन्द्रादिभिः प्रणीताः कोषाः वेदाङ्गे निरुक्ते अन्तर्भवन्ति । अर्थशास्त्रं बहुविधम् – नीतिशास्त्रं, सूपकारशास्त्रं, कलाशास्त्रं चेति । कलाश्च गीत-वाद्य-नृत्य-नाट्यादयः चतुष्षष्टिसङ्ख्याकाः । काव्यरचना-काव्यमीमांसाप्रभृतयः कलासु एव परिगणिताः । यद्यपि गीतवाद्यनृत्यनाट्यादीनि कानिचित् गान्धर्ववेदे प्रस्तुतानि, तथापि कौशलविशेषसापेक्षत्वेन कलासु अपि गणितानि । एवं चार्वाक-बौद्ध-जैन-दर्शनानां यथायथम् अन्तर्भावः द्रष्टव्यः । चतुष्षष्टिकलासु च वास्तुविद्या, तक्षणं, कृषिकर्म, सूचीकर्म, यन्त्ररचना, इन्द्रजालम्, धातुवादः, खनीज्ञानम् इत्यादयः लोकोपयोगिन्यः कलाः परिगणिताः । 'संस्कृतभाषायां किमस्ति ?' इति पृच्छतां मुखबन्धाय सर्वम् इदं सङ्क्षेपेण सङ्गृहीतम् इति द्रष्टव्यम् ।

इह तावत् वेदाङ्गेषु -

**शिक्षा** - इदं हि शास्त्रं वर्णोत्पत्तिस्थानं दर्शयत् वर्णानाम् उच्चारणप्रकारं स्फुटयति । अक्षरस्य शुद्धम् उच्चारणं कीदृशम् इति सूक्ष्मो विचारः प्रस्तुतः शिक्षाशास्त्रे ।

*गीती शीघ्री शिरःकम्पी यथालिखितपाठकः ।*
*अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ।।* इत्यादिना सर्वजनादरणीयः

विषयः अत्र विस्तरेण प्रतिपादितः । वाचः उच्चारणे विधिरयं, मन्ये, न क्वचित् अन्यस्यां भाषायाम् उपलभ्येत ।

**व्याकरणम्** – सर्वस्यापि जनस्य भाषाध्ययने व्याकरणशास्त्रम् उपयोगि इति स्फुटम् । अपशब्दवर्जनं भाषास्वरूपसंरक्षणं च व्याकरणस्य परमं प्रयोजनम् । संस्कृतव्याकरणे च अन्ये अपि बहवः विशेषाः व्युत्पादिताः । अर्थस्य बुबोधयिषया खलु शब्दः प्रयुज्यते ? तत्र शब्दस्य अर्थस्य च कः सम्बन्धः ? सम्बन्धं विना शब्देन अर्थबोधनासम्भवात् । अथ कः शब्दः ? किं वर्णाः शब्दः, उत वर्णसमुदायः, आहोस्वित् अन्यो वर्णैः अभिव्यज्यमानः ? अर्थश्च किं व्यक्तिः, उत तन्निष्ठा जातिः, उताहो उभयम् ? अथ किं वाक्यम् ? वाक्ये च पदार्थानां कीदृशः सम्बन्धः ? एकशतं सम्बन्धाः इति भाष्यकारः – इत्यादयः विपुलाः विचाराः व्याकरणशास्त्रे निरूप्यन्ते । किञ्च तत्रभवता भर्तृहरिणा व्याकरणदर्शनं नाम शब्दाद्वैतदर्शनं तदीयवाक्यपदीये विस्तरेण प्रपञ्चितम् । एतादृशी सूक्ष्मतमा विचारपरिपाटी संस्कृतवाङ्मयात् अन्यत्र अदृष्टचरी अश्रुतचरी च । किञ्च Phylology इति शब्देन अभिलप्यमानस्य भाषाशास्त्रस्य संस्कृतव्याकरणशास्त्रेण बहु उपकृतम् इत्यपि स्मर्तव्यम् ।

**निरुक्तम्** – वैदिकनिघण्टोः व्याख्यानमिदं व्याकरणस्य परिशिष्टप्रायम्, 'इदं विद्यास्थानं व्याकरणस्य कात्स्न्र्यम्' इति यास्काचार्येण एव अभिधानात् । अमरकोषादीनां लौकिकनिघण्टूनाम् उद्गमस्थानम् इदं निरुक्तम् । विदुषां कुतूहलजनकाः बहवः विचाराः अत्र यास्काचार्येण निरूपिताः ।

**छन्दश्शास्त्रम्** – पिङ्गलाचार्योपज्ञम् इदं शास्त्रम् उत्तरकाले सम्भूतानां वृत्तरत्नाकरादिच्छन्दोग्रन्थानां मूलम् । मात्रावर्णविभेदैः उपबृंहितेन छन्दसा 'समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना' । समस्तकविजनानां सङ्गीत-कलाविदां च बहूपकारकम् इदं शास्त्रम् इति सर्वैः विदितप्रायम् ।

**कल्पम्** – वेदाङ्गम् इदं कल्पसूत्रं, गृह्यसूत्रं, धर्मसूत्रं, शुल्बसूत्रम् इति च चतुर्धा विभज्यते । तत्र गृह्यसूत्रेषु गृहप्रवेशः, कृषिः, तटाकनिर्माणम् इत्यादयः लौकिकविचाराः अपि प्रस्तुताः । करसङ्ग्रहणं, दायविभागः, अद्यत्वे 'सिविल्, क्रिमिनल्' इति विभज्यमानन्यायाः, चोरादीनां दण्डनविधयश्च विस्तरेण निरूप्यन्ते धर्मसूत्रेषु ।

**शुल्बसूत्रम्** - शुल्बशब्देन वस्तुप्रमाणनिर्णयोपयोगि सूत्रम् उच्यते । यद्यपि यज्ञवेदिकानिर्माणार्थं शुल्बसूत्राणि प्रवृत्तानि, तथापि 'थियरम् क्वड्राटिक् ईक्वेषन्, इण्टर्मिनेट् ईक्वेषन्' इत्यादीनि ज्यामितेः मूलतत्त्वानि एषु सूत्रेषु दर्शितानि इति गणितशास्त्रज्ञैः अभिहितम् ।

**ज्यौतिषम्** - अस्मिन् शास्त्रे फलं, मुहूर्तः, गणितम् इति त्रेधा विभागः । तत्र ब्रह्मगुप्तः, वराहमिहिरः, भास्कराचार्यः इत्यादिभिः पण्डिताग्रेसरैः एतत् शास्त्रं बहुधा विस्तारितं वर्धितं च । खगोलशास्त्रं गणितविज्ञानानि च जगति एतस्मिन् प्रथमतया भारतदेशे प्रादुर्भूतानि वर्धितानि चेति विख्याताः ऐतिहासिकाः विल्डुराण्ट्प्रभृतयः मुक्तमनस्कतया मन्यन्ते । आर्किमिडिस्, अपोलोनियस् इत्यादीनां विख्यातानां गणितज्ञानाम् - एकस्थानं, दशस्थानं, शतस्थानम् - इति गणनापद्धतिं भारतीयपण्डिताः ज्ञातवन्तः आसन् । आर्यभटेन वर्गसमीकरणं, त्रापिज्य-त्रिकोण-वर्तुलानां क्षेत्रफलदर्शनसूत्राणि च दर्शितानि । भूमेः दैनन्दिनी सांवत्सरिकी च चलनगतिः तेन निर्दिष्टा । ब्रह्मगुप्तेन चन्द्रग्रहस्य व्यासप्रमाणं स्फुटम् उक्तम् । भास्कराचार्येण 'र्याडिकल् सैन्, नेगेटिन्, क्वाण्टिटी, फर्मुटेषन्, काम्बिनेषन्' इत्यादिः गणितप्रकारो दर्शितः । सूर्यचन्द्रयोः ग्रहणकालं ग्रहणनिमित्तं च वराहमिहिरः कथयति । राहुः ग्रहणनिमित्तं न इत्यपि तेन सयुक्तिकं प्रतिपादितम् ।

*भूच्छायां स्वग्रहणे भास्करमर्कग्रहे प्रविशतीन्दुः ।*
*प्रग्रहणमतः पश्चान्नेन्दोर्भानोश्च पूर्वार्धात् ।।*
*राहुरकारणमस्मिन्नित्युक्तः शास्त्रसद्भावः ।।* इति ।

सूर्यस्य उदयास्तमयौ न स्तः इति वेदे एव कथितं - 'नोदेति नास्तमेति' इत्यादि । ग्रहनक्षत्राणि परस्पराकर्षणशक्त्या स्थितानि, भूमेः अपि अस्ति आकर्षणशक्तिः इति सिद्धान्तग्रन्थेषु व्यवस्थापितम् । किञ्च सर्वाण्यपि ग्रहनक्षत्राणि गगने वायुरश्मिभिः निबद्धानि इति विष्णुपुराणे प्रोक्तम् । वायुरश्मिशब्दस्य कः अर्थः ? तेन शब्देन किम् अन्यत् अभिप्रेतं स्यात् विना आकर्षणशक्तिम् इति विचिन्तनीयं सूरिभिः ।

**वैद्यशास्त्रम्** - समस्तप्रजानां हिताय खलु वैद्यशास्त्रं प्रवर्तते ? चरकसंहिता सुश्रुतसंहिता इति संहिताद्वयं प्रमाणभूतम् आयुर्वेदशास्त्रे । रोगाणां निदानं,

रोगनिर्णयः, चिकित्सा, आरोग्यम् इति चतुर्व्यूहमिदं शास्त्रं सर्वतो अभिवर्धितं तज्ज्ञैः । औषधनिर्माणक्रमः, चिकित्साविधानम् इत्यादिकः विषयः चरक-संहितायां विवृतः । सुश्रुतेन शस्त्रचिकित्सापद्धतिः विवृता । विंशत्युत्तर-शतसङ्ख्याकाः शस्त्रभेदाः सुश्रुतसंहितायाम् उपवर्णिताः । Surgical Instruments in ancient India इत्येकः ग्रन्थः आङ्ग्लभाषायां सचित्रं प्रकटितः अस्ति । सुश्रुताचार्यः काशीनगरवासी स्वतः शवच्छेदं कृत्वा च तदनुभवेन मानुषाणाम् अङ्गोपाङ्गानां वर्णनं कृतवान् । इदं संहिताद्वयम् अराबिक्भाषया परिवर्तितम् इति 'फिहिस्त्' इत्यरब्बीग्रन्थे लिखितम् अस्ति । भारतीय-वैद्यपद्धतिः अरेबियन्वैद्यद्वारा ऐरोप्यदेशे प्रसारिता इति वदन्ति ऐतिहासिकाः । वाग्भटस्य अष्टाङ्गहृदयं, माधवस्य माधवनिदानम् इत्यादयः बहवः प्रमाणभूताः आयुर्वेदग्रन्थाः संस्कृतभाषायां समुपलभ्यन्ते । एवं पशुचिकित्सा, हस्त्यायुर्वेदः, वृक्षचिकित्सा इत्यादयोऽपि संस्कृतवाङ्मये सन्ति ग्रन्थाः । जीवकः नाम नेत्रवैद्यः अक्षिपात्रे नीरोगां कनीनिकां योजयति स्म इति बौद्धग्रन्थेषु लिखितम् अस्ति ।

**कामशास्त्रम्** - चतुर्षु पुरुषार्थेषु कामम् एकं पुरुषार्थत्वेन गणयद्भिः अस्मत्प्राचीनैः सर्वानुभवसिद्धः प्रत्यक्षो लौकिकानुभवः न कदाचित् उपेक्षितः इति स्पष्टं विज्ञायते । कामः भगवता 'धर्माविरुद्धः कामोऽस्मि' इति नियन्त्रितः, न तु दूरीकृतः इति भारतदेशस्य उत्कर्षः । तदिदम् अनुसन्धाय वात्स्यायनेन कामशास्त्रं प्रणीतम् । रतिरहस्यम् इत्यादयः अन्ये अपि ग्रन्थाः अत्र दृश्यन्ते । दत्तक-दीर्घयारायण-घोटमुख-कोकादयः शास्त्रेऽस्मिन् काश्चित् कृतीः प्रणीतवन्तः दृश्यन्ते । प्रसिद्धैः आधुनिकमनःशास्त्रज्ञैः आड्लर्प्रायड्-प्रभृतिभिः उत्थापितानां कासाञ्चित् विप्रतिपत्तीनां समञ्जसम् उत्तरम् एषु कामशास्त्रेषु समस्ति इति मनःशास्त्रज्ञाः एव प्रवदन्ति ।

**वाणिज्यम्** - सर्वस्यापि राष्ट्रस्य आर्थिकाभिवृद्धिः वाणिज्यायत्ता इति अपरोक्षम् एतत् । न च इदम् उपेक्षितं प्राचीनैः । 'कृषिगोरक्षवाणिज्यम्..' इति भगवद्गीतायाम् उत्कीर्तितं व्यासमुनिना । धर्मशास्त्रेषु विवृतः वाणिज्यप्रकारः । डा.शिवकुमारस्वामिना (बेङ्गलूरुविश्वविद्यालयीयेन) प्रणीते 'प्राचीनवाणिज्यम्' इति ग्रन्थे विस्तरः द्रष्टव्यः ।

**अर्थशास्त्रम्** - राजनीतिः अत्र प्राधान्येन उपवर्ण्यते । कौटिल्यस्य अर्थशास्त्रं,

कामन्दकनीतिः, शुक्रनीतिश्चेति विख्यातं ग्रन्थत्रयम् अत्र विराजते । समस्तप्रजा-योगक्षेमसम्बन्धित्वेन राजनीतेः अन्यत्रापि इयं विस्तरेण वर्णिता । मनुस्मृत्यादि-धर्मशास्त्रेषु, पुराणेषु, रामायणमहाभारतयोः, शिशुपालवधादिमहाकाव्येषु च नीतिरियं प्रपञ्च्यते । किं बहुना ? अद्यत्वेऽपि समस्तशासकैः, सचिवैः, न्यायवादिभिः, न्यायाधीशैः, अधिकारिभिः च अवश्यम् अध्येतव्यम् इदं शास्त्रम् ।

**सङ्गीतं भरतनाट्यं च** – आपामरम् आपण्डितं च सर्वैः अपि मनुष्यमात्रैः अभिनन्द्यमानम् आस्वाद्यमानं च प्रशस्तं कलाद्वयं संस्कृतशास्त्रोपक्रमम् इति हन्त अद्यापि बहवः न जानन्ति । सङ्गीतसुधाकरः, सङ्गीतदर्पणः, सङ्गीत-रत्नाकरः, सङ्गीतमुक्तावली इत्यादयः विपुलाः ग्रन्थाः भारतीयसङ्गीतकलां प्रपञ्चयन्ति । षड्जादिसप्तस्वरन्, ध्रुवादितालभेदान्, शुद्धान् सङ्कीर्णान् च श्रुतिरागादिपरिकरभेदान् च निरूपयन्ति । कर्णाटकसङ्गीतं, हिन्दुस्थानीसङ्गीतम् इति पद्धतिद्वयस्य भरतसंहिता हनूमत्संहितेति संहिताद्वयं हेतुः । एवं बहुविस्तृतम् इदं सङ्गीतशास्त्रम् । वीणामुरजादिवाद्यभेदानां विस्तरः अपि सङ्गीतग्रन्थेषु बहुधा निरूपितः । एवं भरतनाट्यम् अपि नाट्यलास्यादि-नर्तनभेदान् करणाङ्गहारादिपरिकरभेदैः सह प्रपञ्चयति । अभिनयदर्पणप्रमुखाः नाट्यग्रन्थाः अपि सन्ति अत्र ।

**साहित्यम्** – कलासु मूर्धन्यभूतं कविकर्म सहृदयैकगोचरम् । के वा सचेतसः काव्येषु न रमन्ते ? संस्कृतवाङ्मये तावत् व्यासवाल्मीकिकालिदासादिभिः विस्तारितः अयं काव्यप्रपञ्चः सुप्रसिद्धः एव । तत्र वाल्मीकिरामायणं, महाभारतं चेति विख्यातं ग्रन्थद्वयं न केवलं भरतखण्डस्य, अपि तु भुवनस्य भाग्यमिति मन्तव्यम् ।

अलङ्कारशास्त्राभिधाना काव्यमीमांसा साहित्यविद्यायाः एकम् अङ्गम् । आनन्दवर्धनः, अभिनवगुप्तः, मम्मटः, जगन्नाथः इत्यादिभिः काव्यमीमांसकैः बहुधा प्रपञ्चितम् अलङ्कारशास्त्रम् । न केवलं कवीनां शिक्षणम् आददाति इदं शास्त्रं, किन्तु काव्यं कथम् आस्वादनीयम् इति सहृदयान् बोधयति अपि । अनुप्रासयमकादीनि, चक्रबन्धमुरजबन्धादीनि, अक्षरच्युतकमात्रा-च्युतकादीनि, क्रियाकारकगुप्तादीनि, अन्तरालापबहिरालापादीनि च सन्ति

विनोदस्थानानि । अन्योक्तिः नाम अर्थालङ्कारभेदः । असङ्ख्याताः अन्योक्तयः विराजन्ते संस्कृते । लौकिकव्यवहारनीतिबोधकानि मनोहराणि सुभाषितानि गणयितुम् अपि अशक्यानि विराजन्ते ।

वास्तुशिल्पे च मानसारः, मनुष्यालयचन्द्रिका, वास्तुविद्या, शिल्परत्नं, मयमतं, काश्यपशिल्पम्, अभिलषितार्थचिन्तामणिः, समराङ्गणसूत्रधारः इत्याद्याः कृतयः प्रसिद्धाः । अत्र राजधानी-पत्तन-ग्रामाणां निर्माणविधानम् अभिहितम् ।

जनसङ्ख्यानुगुण्येन सर्वतोभद्रं, नन्द्यावर्तं, पद्मकं, स्वस्तिकं, चतुर्मुखम् इत्येवं नगरादीनाम् आकाराः । सेनासन्निवेशार्थं स्कन्धावारनिगमशिबिरादीनां रचनाविशेषाः सन्ति । इष्टकानां रचनाप्रकारः सिमेण्ट्सदृशस्य वज्रलेपस्य निर्माणम् इत्यादिविचारः विस्तरेण अभिहितः । द्राविड-नागर-वेसरनाम्ना देवालयरीतिभेदाः उक्ताः । गृहाणां, हर्म्याणां, स्तम्भानां च रचना, विविधदेवतामूर्तीनां विभिन्नप्रमाणानुसारेण निर्माणप्रकारः इत्यादिकं सर्वम् एषु ग्रन्थेषु निरूपितम् । अभिलषितार्थचिन्तामणौ चित्रलेखनपद्धतिः विस्तरेण उक्ता ।

अलं विस्तरेण । प्राचीनकाले मानवजीवनोपयोगिनः ये ये विषयाः विज्ञाताः ते सर्वे अपि संस्कृतवाङ्मये विवृताः । पाकशास्त्रम् अपि अस्ति अत्र ।

एतावत्पर्यन्तं सङ्गृहीतः विषयः सर्वोऽपि ऐहलौकिकः एव, न तु पारलौकिकः । जातिमतसम्बन्धगन्धोऽपि अत्र नास्ति, मनुष्यजातिसम्बन्धं विना । तस्मात् इदं सर्वं 'सेक्युलर् इण्टरेस्ट्'पदगोचरम् इति मन्तव्यम् ।

*सिकन्दरधरानाथो यवनैः प्रेरितः पुरा ।*
*पुस्तकानि च सर्वाणि तृणान्यग्निरिवादहत् ।।*

इति कथयन्त्यां राजतरङ्गिण्याम् अद्यापि जीवन्त्याम् (अत्र सिकन्दरो नाम सिकन्दरखान्नामकः महम्मदराजः, न तु अलेक्साण्डर्) अतिविशाले दुरवगाहे संस्कृतसरस्वतीभाण्डागारे –

*कति नष्टाः कति शिष्टाः कति दृष्टा मयेति को वक्तु ।*
*अग्रहदूषितमनसां सुग्रहसम्पत्तये कृतो यत्नः ।।*

अपि च जगति अस्मिन् विश्वरहस्यसमीक्षणकुतुकिनः तत्त्वान्वेषणपराः मेधाविनः पुरुषधौरेयाः भवन्ति, तेषां सर्वङ्कषा सर्वंसहा च मतिः अल्पेन मृदुना आहारेण न तृप्यति । येषां ज्ञानपिपासाशान्तये सन्त्येव विस्तृतानि दर्शनशास्त्राणि । बौद्धदर्शनेषु प्रतीत्यसमुत्पादः, प्रज्ञापारमिता इत्यादिषु तर्ककर्कशविचारगर्भितेषु भवन्तः यथेच्छं विहरन्तु । सप्तभङ्गीनयादिप्रौढ-कल्पनाधुरन्धराणि जैनदर्शनानि सन्ति । आन्वीक्षिकी इति, तर्कशास्त्रम् इति च अभिधीयमाने न्यायवैशेषिकदर्शने शक्ष्यते समस्तम् आयुः यापयितुम् । यद्यस्ति महती शक्तिः, तर्हि जागदीश्या गादाधर्या च मल्लयुद्धं क्रियताम् । यदि परमार्थविचारे मतिः सादरा, तर्हि महदिदम् अस्ति साङ्ख्यशास्त्रम् । यदि वा परमार्थसाधनसामग्र्यपेक्षा तर्हि योगदर्शनं समीक्ष्यताम् । तदङ्गभूतः हठयोगः तु आरोग्यादिलौकिकफलजनकेऽपि इति विशेषः । वेदान्तदर्शनमपि सर्वेषां मुक्तद्वारम् । 'न हि ज्ञानं दण्डवारितम्' इति पूर्वम् उक्तमेव । वस्तुतः तु सर्व-जनसौख्याभिलाषः सर्वधर्मसमन्वयश्च महद्भिः सन्दिष्टः । *'समानी व आकूतिः ....'* इति वदति ऋग्वेदः ।

*श्रोतव्यः सौगतो धर्मः स्मर्तव्यः पुनरार्हतः ।*
*वैदिको व्यवहर्तव्यो ध्यातव्यः परमः शिवः ।।* इति सर्वधर्मसमन्वयः ।

एवम् अतिविस्तृते संस्कृतवाङ्मये शते पञ्चंशाः केवलजातिमतसम्बद्धाः भवेयुः, यथा अन्यास्वपि देशभाषासु । एवं सति किम् अपराद्धं संस्कृतगिरा ?

*प्राज्ञा विज्ञानविद्यापरिणतमतयो लब्धवर्णा वरेण्याः*
*प्राचां वाचां वरिष्ठा विमलसुरगवीदुग्धमेवामृतं नः ।*
*बुद्धेरुल्लाघमुच्चैरपघनघनतामादधानं प्रधानं*
*पीत्वा रंरम्यतां किं व्यपगतरसनिक्षेपलघ्वा यवाग्वा ।।*

★ ★ ★

# ६. संस्कृतभाषा, राष्ट्रस्य अखण्डतापरिरक्षणं च

विदितमिदं समेषां विदुषां यत् अस्मदीयो भारतदेशः प्राचीनतमः संस्कृत्या सभ्यतया च देशान्तराणि अतिशयानो व्यराजतेति । सभ्यताशब्दः अत्र Civiligationशब्दपर्यायतया प्रयुक्तो वेदितव्यः । संस्कृतिशब्दस्तु Culture इत्यर्थे रूढः एव । संस्कृतिः नाम काचित् मानसी परिष्कृतिः शिष्टसम्मतेन नैतिकधार्मिकसद्वर्तनेन अभिव्यज्यमाना अन्तरङ्गा । सभ्यता तु बुद्धिकौशल-साधितवैज्ञानिकयन्त्रनिर्माणादिभिः कुशलकलाभिश्च प्रकाश्यमाना बहिरङ्गा । इदं द्वयमपि परस्पराविरोधेन सम्मिलितं वर्धितश्च मानवकुलस्य श्रेयसे प्रेयसे च कल्पते । संस्कृतिप्रधानः सदाचारः चारित्रम् उच्यते । चारित्रमिदं वेदशास्त्र-पुराणेतिहासैः धर्मशास्त्रैः काव्यनाटकादिभिः च भारतदेशे सम्यक् व्यवस्थापितं सर्वानुसरणीयत्वेन चिरन्तनैः । आह च महामनाः मनुः -

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ।। इति ।

स्यादेतत् । इदन्तु चिन्त्यते । समग्रोऽयं भारतदेशः अखण्डैकराष्ट्रत्वेन सङ्कीर्त्यते सर्वत्र । कथमत्र राष्ट्रस्य एकता अखण्डता च इति । न हि इदं राष्ट्रं कदाचिदेकेन प्रभुणा एकच्छत्राधिपत्येन शासितम् इत्यत्र प्रमाणमस्ति । अङ्गवङ्गकलिङ्गकाश्मीरादिनामभेदेन विभिन्नानि राज्यानि विभिन्नैः राजभिः पालितानि इत्येव श्रृणुमः । आङ्ग्लानां प्रभुत्वे परं समग्राणि राज्यानि पाकिस्थानबङ्गासहितानि राजकीयशासनेन एकीकृतानि इति प्रत्यक्षम् । आङ्ग्लप्रभुत्वात् पूर्वं समग्रस्य, तस्मात् परम् अवशिष्टस्य च राज्यसमूहस्य च कथम् एकता इति । अत्र ब्रूमहे । श्रद्धेयम् एतद्वचनम् इतिहासकाराणाम्।

तथापि भारतस्य एकतानिबन्धनमन्यत्र गवेषणीयम् । वेदैः पुराणादिभिश्च प्रतिपाद्यमानः अयं राष्ट्रैकतारूपः अर्थः न शक्यः सहसा अपोहितुम् । यद्यपि वेदेषु राष्ट्रस्यास्य भारतशब्देन व्यवहारो न दृश्यते, तथापि कुरुपञ्चालादि-देशानां गङ्गासिन्धुसरस्वतीप्रभृतीनां नदीनां च नामानि दृश्यन्ते एव । वेदेषु राष्ट्रशब्देन व्यवहारः यथा यजुःसंहितायाम् – 'आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामास्मिन् राष्ट्रे राजन्यः इषव्यः शूरो महारथो जायताम्' इति श्रूयते । श्रीसूक्ते च – 'प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे' इति । ऋग्वेदमन्त्रे च –

ग्रीष्मस्ते भूमे वर्षाणि शरद् हेमन्तः शिशिरो वसन्तः ।
ऋतवस्ते विहिता हायनीरहोरात्रे पृथिवी नो दुहाताम् ।।

इति ग्रीष्मादि ऋतुषट्कं परामृष्टम् । ऋतवश्च चत्वारो ग्रीष्मदयो भारतदेशे एव व्यवस्थया परिवर्तन्ते इत्यपि द्रष्टव्यम् । पुरुषसूक्तादिषु ब्राह्मण्यादिचातुर्वर्ण्यं प्रतिपादितम् । तदिदानीं दूष्यतां भूष्यतां वा, नास्माकं तत्र प्रकृते समादरः । किन्तु यावत्पर्यन्तं येषु येषु देशेषु चातुर्वर्ण्यं व्याप्तं तावत्पर्यन्तं तेषां देशानाम् एकराष्ट्रताकुक्षौ प्रवेशने समादरः । यत्र यत्र वेदाः अधीताः, तदुदितकर्माणि अनुष्ठितानि, तेषां प्रदेशानां तद्वास्तव्यजनानाञ्च सांस्कृतिकसम्बन्धेन एकता दुरपह्नवा । सांस्कृतिकसम्बन्धो नित्यः, राजकीयसम्बन्धस्तु अनित्यः क्षणभङ्गुरः च इति विज्ञेयम् । राजकीयसीमा परिवर्तते, सांस्कृतिकसंसर्गसीमा तु न परिवर्तते ।

पुराणैस्तु अस्य राष्ट्रस्य भारतशब्देन व्यवहारः प्रसिद्धिमगात् । तथाहि विष्णुपुराणे –

उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद् भारतं नाम भारती यत्र सन्ततिः ।। इत्यादि ।

'भारती सन्ततिः' इत्यनेन भारतदेशोत्पन्नानां प्रजानाम् एकवर्गीयता प्रति-पादिता । श्रीमद्भगवते पञ्चमस्कन्धस्य चतुर्थाध्याये नाभिराजपुत्रान् प्रकृत्य 'येषां खलु महयोगी भरतो ज्येष्ठः श्रेष्ठगुण आसीद् येन वर्षं भारतमिति व्यपदिशन्ति' इति अभिहितम् । जिनसेनाचार्यप्रणीते महापुराणे 'नाभिनन्दनो वृषभदेवः । तस्य तनयेन भरतनाम्ना चक्रवर्तिना समग्रमिदं राष्ट्रम् एकप्रभुत्व-

स्थापनेन शासितं भारतनाम्ना प्रसिद्धिमगात्' इति वर्णितम् । इदं भारतवर्षं दक्षिणोत्तरं कन्याकुमारीमारभ्य काश्मीरेण सह गङ्गानदीप्रभवपर्यन्तं व्यायतमिति, पूर्वपश्चिमसमुद्रपर्यन्तं विस्तृतमिति च मत्स्यलिङ्गपुराणादिषु समुपवर्णितम् । भारतदेशस्य हिन्दूस्थानमिति अपदेशान्तरं प्रसिद्धम् । अत्र हिन्दुशब्दः सिन्धुशब्दात् निष्पन्नः इत्यैतिहासिकानां प्रवादः । परन्तु शब्दोऽयं मेरुतन्त्रे, कालिकापुराणे च दृश्यते । बृहस्पत्यागमाख्ये ग्रन्थे समुपलभ्यमानः अयं श्लोकः कौतुकम् उत्पादयति । यथा -

हिमालयं समारभ्य यावदिन्दुसरोवरम् ।
तं देवनिर्मितं देशं हिन्दुस्थानं प्रचक्षते ।।

कन्याकुमारीक्षेत्रस्य इन्दुसरः इत्यस्ति नामान्तरम् ।

'हन्दुर्हिन्दूश्च प्रसिद्धौ दुष्टानाञ्च प्रघर्षणे । रूपशालिनि दैत्यारौ' इति अद्भुतकोशः ।

स्यादेतत् । अखण्डेऽस्मिन् भरतखण्डे सर्वत्र सर्वव्यवहारेण संस्कृतभाषा व्याप्य अवतस्थे इत्यत्र पाणिनीयव्याकरणशास्त्रं प्रमाणपदवीम् अवगाहते । क्रिस्तात् पूर्वं सप्तमे शतके पाणिनिः बभूव इति बहूनाम् अस्ति मतं विदुषाम् । व्याकरणशास्त्रं हि मतधर्मनिरपेक्षम् (Secular) इत्यत्र न कस्यापि असम्मतिः । शिलाशासनमिव ताम्रशासनमिव च प्रक्षेपविक्षेपरहितं भारतदेशस्य बहुमुखं परिचयम् आनुषङ्गिकतया जनयति । 'कापिश्याः ष्फक्' (४.२.९९) इति सूत्रेण कापिश्यायां जातं कापिशायनं मधु, कापिशायनी द्राक्षा इत्यादयः शब्दाः निष्पादिताः । इदानीं काबूलनगरस्य आफघानिस्थाने प्रसिद्धस्य, वायव्यदिशि कस्मिंश्चिद् ग्रामे समुपलब्धे शिलालेखे कपिशेति स्थलनाम उट्टङ्कितम् । 'कच्छादिभ्यश्च' (४.२.१३३) इति सूत्रविषयभूते कच्छादिगणे कच्छ-सिन्धु-गन्धार-कम्बोज-काश्मीरदयो जनपदवाचिनः पठिताः । 'द्व्यञ्-मगधकलिङ्गसुरमसादण्' (४.१.१७०) इति सूत्रे सुरमसो नाम देशविशेषः कथितः । अधुना अस्सम्राज्ये प्रवहन्त्याः सुर्मानद्याः तटवर्ती देशोऽयम् इत्याहुः इतिहासविदः । दक्षिणस्यां दिशि पाण्ड्यचोलकेरलदेशाः वार्तिककारेण उपदिष्टाः । पश्चिमायां दिशि पर्शुनामा आयुधजीविसङ्घः कथितः पाणिनिना । पर्शुश्च पारसीकः एव इति परिशोधकानां मतम् । 'वेशन्तहिमवद्भ्यामण्' (५.४.११३) इति सूत्रे हिमवत्पर्वतो नामतो निर्दिष्टः । एवं पाणिनीयशास्त्रेण

भारतदेशस्य चतस्रः सीमाः शक्यन्ते अनुमातुम् । भारतदेशे निविष्टानां मगधादिदेशानां, तक्षशिलादिनगराणां, ग्रामाणां, नदीनां, गिरीणां, वनानाञ्च नामानि स्पष्टम् उपलभ्यन्ते पाणिनीये । एवम् आयुधजीविनां, नानावृत्तिनिरतानां, वणिजां, कार्मिकाणां, कर्षकाणां च व्यवहारगोचराः विपुलाः शब्दाः व्युत्पादिताः । एवं द्यूतकरैः, सुरापायिभिः च उपयुज्यमानाः शब्दाः प्रकृति-प्रत्ययविभागेन निरूपिताः । समाजे क्षुद्रजनैः भर्त्सनायाम् उपयुज्यमानाः असभ्याः अपि शब्दाः पाणिना संगृहीताः । 'प्रत्यभिवादेऽशूद्रे' इत्यादि-पाणिनिसूत्रपर्यालोचनया, 'अजेर्व्यघञपोः' इत्यादिसूत्रस्थमहाभाष्य-पर्यालोचनया च संस्कृतभाषा इयं व्यावहारिकी सर्वजातीयैः उपयुज्यमाना बभूव इति शक्यते निर्णेतुम् । सर्वमिदं प्रकृते संस्कृतस्य सर्वजनीनतां सर्वाङ्गीणताञ्च दर्शयितुम् अभिहितम् । अत एव तत्रभवान् भाष्यकारः पतञ्जलिः पस्पशाह्निके संस्कृतशब्दान् अधिकृत्य प्राह – 'महान् शब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः, साङ्गाः सरहस्याः बहुधा भिन्नाः, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाथर्वणो वेदः, वाकोवाक्यमितिहासः, पुराणमित्येतावान् शब्दस्य प्रयोगविषयः' इति । इदम् उपलक्षणं मन्वादिप्रणीतस्मृतीनां सङ्गीतनाट्य-शिल्पादिशास्त्राणां काव्यनाटकादीनां च, न तु परिगणनमिति द्रष्टव्यम् । अत्र भाष्ये संस्कृतशब्दप्रयोगविषयत्वेन 'सप्तद्वीपा वसुमती' इति वचनस्य कथञ्चित् केषाञ्चित् मते प्रौढोक्तित्वस्वीकारेऽपि, भाषेयं भरतखण्डे सर्वव्यापिनी बभूव इत्यर्थम् अवश्यं द्रढयति । किञ्च पाणिनिः अष्टाध्याय्यां भाषायामिति छन्दसि इति च अधिकृत्य द्वेधा शब्दान् व्युत्पादयति । भाष्यकारश्च लौकिकाः वैदिकाः चेति द्विधा शब्दान् विभजते । एवञ्च भारतदेशे भाषा नाम संस्कृतमेव, लौकिकाः शब्दाः संस्कृताः एवेति गम्यते । कैश्चन स्वतन्त्रद्रविडभाषामयत्वेन उत्कीर्त्यमानो दक्षिणापथोऽपि गीर्वाणवाण्या व्याप्तः एव । पाणिनीय-वार्तिककारो हि दाक्षिणात्यः । 'यथा वैदिकलौकिकेषु' इति वार्तिकं व्याचक्षाणः पतञ्जलिः वार्तिककारम् उपलक्ष्य 'प्रियतद्धिताः दाक्षिणात्याः' इति परिजहास । एवं वेदान्तमतत्रयस्य प्रवक्तारः श्रीशङ्कर-रामानुज-मध्वाचार्याः दक्षिणदेशीयाः इति सुविदितम् । तथा अप्पय्यदीक्षितप्रभृतयः पण्डितप्रकाण्डाः असङ्ख्याताः कवयः काव्यनाटकादिप्रणेतारश्च सन्ति दाक्षिणात्याः । अद्यापि दक्षिणदेशः

वेदाध्ययने दोषराहित्येन सस्वरस्फुटवर्णोच्चारणे च वेदानां लोकविख्यातिम् अश्नुते । यास्तु इमाः द्राविडभाषाः स्वतन्त्रभाषात्वेन अभिमताः तास्वपि शतेऽशीतिः शब्दाः संस्कृताः वेदितव्याः । या च परिशुद्धद्राविडभाषात्वेन ख्याप्यते तमिल्भाषा, तत्रापि वेषान्तरधारिणो नटाः इव प्रविष्टाः संस्कृतशब्दाः प्राज्ञैः अभिज्ञायन्ते एव । हिन्दीबङ्गालीप्रभृतयः भाषाः उत्तरभारतीयाः संस्कृत-प्रभवाः इत्यत्र नास्ति कस्यचित् विमतिः । एवं सर्वभाषामयी गीर्वाणी भारतीयैः ममत्वेन गृहीता, प्रीत्यास्पदभूता सर्वाणि राज्यानि एकत्वेन निबबन्ध इति को विस्मयः ?

अथ संस्कृतिः । संस्कृतिर्नाम मानसी परिष्कृतिः इति अवोचाम । संस्कृति-संस्कारशब्दौ पर्यायौ । तयोः संस्कारशब्दः प्राचीनः क्वचिदीषदर्थभेदेन प्रयुज्यते । संस्कारो नाम गुणाधानम् । नैतिकेन धार्मिकेण च गुणेन आहितं मनः सतां सम्मतेन शिष्टाचाररूपेण विवर्तते । सद्वर्तनं संस्कृतिरिति संक्षेपः । भारतीयसंस्कृतिस्तु शास्त्राचार्योपदेशैः शोभिता । सज्जनैः परम्परया पाल्यमाना इति विशेषः । इयञ्च दैवी सम्पदित्याख्यायते भगवद्गीतासु । यथा –

अभयं सत्त्वसंशुद्धिः ज्ञानयोगव्यवस्तितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ।।
अहिंसा सत्यमक्रोधः त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ।
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति सम्पदं दैवीमभिजातस्य भारत ।। (अध्यायः – १६)

मुमुक्षोरेते कथिताः अपि गुणाः संस्कृतिसम्पन्नस्य गुणेभ्यो नातिरिच्यन्ते ।

'अहिंसा सत्यवचनं स्थैर्यमिन्द्रियनिग्रहः' इति चत्वारो धर्माः सर्वैरपि जनैः विना वर्णभेदं नित्यम् अनुष्ठेयाः इत्याह तत्रभवान् मनुः । यद्येते प्रजाभिर्न पाल्यन्ते तर्हि –

'राष्ट्रिकैः सह तद्राष्ट्रं क्षिप्रमेव विनश्यति' इति स एव प्रबोधयति । प्रातःस्मरणीयाः श्रीविनोबाभावेमहोदयास्तु –

यो वर्णाश्रमनिष्ठावान् गोभक्तः श्रुतिमातृकः ।
मूर्तिश्च नावजानाति सर्वधर्मसमादरः ।।

उत्प्रेक्षते पुनर्जन्म तस्मान्मोक्षणमीहते ।
भूतानुकूल्यं भजते स वै हिन्दुरिति स्मृतः ।।

इति हिन्दूजनलक्षणप्रसङ्गेन भारतीयसंस्कृतेः स्फुटतया व्यक्तगुणान् कथयन्ति । (गोरखपुरप्रकाशन - संस्कृतिः)

श्रीविनोबामहोदयैः संक्षेपेण निरूपिता इयं हिन्दुसंस्कृतिः सामान्यजनतायाः अपि सुखेन बुद्धिम् आरोहति । पुनर्जन्मनि विश्वासः, पापपुण्यविवेकेन पापाद् भीतिः, ईश्वरस्य एकत्वेऽपि विष्णुशिवादिनामरूपभेदेन देवतार्चनं, सर्वधर्म-समादरः चेति चतुष्पादरमणीया हिन्दूसंस्कृतिः । अहिंसासत्यवचनादयः सर्वेऽपि सामान्यधर्माः अत्रैव अन्तर्भवन्ति । अत्रेदं बोध्यम् । आचार्यविनोबाभावे-महोदयाः संस्कृतभाषायां विद्वांसः प्राचीनानाम् अर्वाचीनानाञ्च मनोधर्माणां प्रवृत्तीनाञ्च सम्यक् वेदितारो बभूवुः । 'यो वर्णाश्रमनिष्ठावान्' इत्यत्र वर्णशब्देन चातुर्वर्ण्यम् अभिप्रेतमिति निश्चयः । तत्र चातुर्वर्ण्यं किं गुणगात्रनिमित्तकम्, उताहो तत्र योनिरपि निमित्तमिति विस्तरेण विवरणम् अपेक्षितम् अस्ति । सोऽयं विषयः प्रकृते लघुप्रबन्धे परित्यज्यते । सर्वथा चातुर्वर्ण्यं भारतीयसंस्कृतेः एकम् अङ्गमिति तु समेषाम् अभ्युपगमः । ब्रह्मचर्याद्याश्रमव्यवस्था अन्य-संस्कृतिषु अदृष्टचरी भारतीयसंस्कृतेः अङ्गम् । 'गोभक्तः श्रुतिमातृकः' इति तु निगदव्याख्यातम् । 'मूर्तिश्च नावजानाति' - मूर्तिपूजामप्यङ्गीकरोति, यथार्हम् अव्यक्तोपासनामपि भजते । 'प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः' इति अङ्गीकारात् । 'सर्वधर्मसमादरः' - न कदाचित् भारतीयाः मतान्तरं द्विषन्ति निरुन्धन्ति वा । 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।' 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्यादिभगवदुक्तिं शरणीकुर्वाणाः 'सर्वदेव-नमस्कारः केशवं प्रति गच्छति' इति दृढं मन्यन्ते भारतीयाः । सर्वधर्मसमादरः इति साधूक्तम् ।

एतादृशसर्वधर्मसमन्वयरूपमहाधर्मस्य सर्वत्र भारतदेशे प्रसरणं संस्कृत-भाषया सम्यगनुष्ठितमिति, अत एव संस्कृतभाषोपबृंहिता संस्कृतिरिमं विशालं भारतदेशं नानाराज्योपजुष्टम् अनादिकालाद् एकतया बबन्ध इति आतिष्ठामहे । अद्यापि यथा वेदाः कन्याकुमार्याम् अधीयन्ते, सभाज्यन्ते, तदुदितकर्माणि च अनुष्ठीयन्ते, तथा हिमालयपर्यन्तेषु सर्वदेशेषु । पुराणेतिहासागमकाव्य-

नाटकादीनां प्रभावः सर्वेषु भारतराज्येषु सर्वासु भाषासु सहस्रांशुरिव सूर्यः प्रकाशते । तत्रापि श्रीमद्रामायण-महाभारत-भागवतानां महिमा सर्वातिशायी । नास्त्येव काचिदपि भारतीया भाषा, यस्यां श्रीरामादीनां कथा गद्यपद्यादिरूपेण न पठिता । नास्त्येव कोऽपि हिन्दूमतीयो, यो श्रीरामकृष्णादीनां कथां न श्रुतवान् । कर्षकः कार्मिकः पांसुलपादः ग्रामीणोऽपि जनः स्त्रीपुंसादिभेद-राहित्येन सीताद्रौपद्यादीनां सतीनां धर्मराजहरिश्चन्द्रादीनां चरितम् अंशतोऽपि जानात्यैव । हरिकथाकीर्तनपुराणप्रवचनादिभिः पौराणिकनाटकाभिनयैश्च सर्वदेशभाषासु संस्कृतसाहित्यं ग्रामं ग्रामं नगरं नगरञ्च प्रवेशितम् ।

रामायणं भारतञ्च श्रीमद्भागवतं तथा ।
रत्नत्रयं भारतीयसंस्कृतेर्भूषणायते ।।

आगमशास्त्रोक्तविधिना सर्वत्र देवालयाः निर्मिताः, देवनां मूर्तयश्च स्थापिताः । तत्र देवालयेषु अर्च्यमानाः शिव-विष्णु-गणपति-स्कन्दप्रभृतयो देवाः दुर्गालक्ष्मीसरस्वतीप्रभृतयः देवताः च वेदपुराणादिसंस्कृतग्रन्थप्रतिपाद्याः एव । ताश्च देवतामूर्तयः सर्वेषां भारतीयानां हृदये 'इमे देवालयाः अस्मदीयाः, अस्माभिः प्रतिष्ठापिताः, इमाः देवमूर्तयः अस्माकम् आराधनीयाः' इति भावं जनयन्त्यः देशभेदं भाषाभेदञ्च पृष्ठतः कृत्वा भारतीयेषु ममत्वं जनयन्त्यः सर्वत्र एकताभावम् उद्दीपयामासुः । 'तिरुपतिवेङ्कटेशः आन्ध्रप्रदेशीयः, काशी-विश्वनाथः तावदुत्तरदेशीयः, पुरीजगन्नाथः ओरिस्सादेशीयो न अस्माकम् आराध्यः' इत्येतादृशी भेदबुद्धिः न कस्यापि भारतीयस्य मस्तिष्कम् आरुरोह ।

किञ्च पुराणप्रतिपादिततीर्थक्षेत्रादीन्यपि समेषां हिन्दुमतीयानां विभिन्नदेश-समागतानाम् एकत्र समवायसम्पादनेन समानश्रद्धाभक्तयः सखायो वयम् इति एकताबुद्धिं वर्धयामासुः । येन काशीयात्रा कृता तेन रामेश्वरयात्रा अपि कार्या इति अस्ति बुद्धिः आस्तिकानाम् । काशीक्षेत्रात् गङ्गाजलम् आनीय रामेश्वर-लिङ्गस्य अभिषेकः कर्तव्यः, रामेश्वरस्य समुद्रतीरे विद्यमानं सैकतं पुनर्नीत्वा गङ्गायां विसर्जनीयम् इति यात्रानियमः । उभयोर्मध्ये भवन्तु नाम बहुधा राज्यानि विभिन्नाश्च राजानः । न कोऽपि राजा यात्रिकाणाम् अन्तरायं जनयति । किं नः छिन्नमिति मतिः सर्वेषाम् । किमतः परमपेक्षितं वस्तु यद् भारतदेशस्य समग्रतां स्थापयेत् । वाहनसौकर्यरहिते काले तस्मिन्, तीर्थक्षेत्राणि गच्छन्तः यायावराः यात्रिकाः विभिन्नराज्येषु ग्रामे ग्रामे विश्रम्य विश्रम्य तत्रत्यैः सह

वार्तालापान् शास्त्रचर्चाश्च कुर्वन्तः, सुखदुःखानि निवेदयन्तः समानधर्माणो वयमिति राष्ट्रस्य अखण्डताबुद्धिम् अपोषयन् ।

गङ्गा-यमुना-कावेरीप्रमुखाश्च पुण्यनद्यः अस्मदीयाः इति भावना धर्मशास्त्रेण अपि प्रचोदिता । साधु किल कलशपूजायां सर्वकर्मस्वेवं पठ्यते -

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ।। इत्यादि ।

अथ अध्यात्मम् । भारतीयानां सांख्यादिदर्शनानि संस्कृतभाषायामेव उद्बभूवुः । दर्शनेषु प्रधानतमस्य वेदान्तस्य द्वैताद्वैतविशिष्टाद्वैतसिद्धान्ताः संस्कृत-भाषायामेव प्रादुर्भूताः सर्वत्र भारतदेशे प्रसृताः । उत्तरदेशे क्वचित् प्रचुरं निम्बार्कमतं वल्लभाचार्यमतश्च संस्कृतमेव आश्रित्य प्रवृत्तम् । काश्मीरेषु सुप्रसिद्धं प्रत्यभिज्ञादर्शनमपि तथैव संस्कृतवाणीनिबद्धम् । तमिलनाडुप्रान्ते विख्याताः दिव्यप्रबन्धाः तमिल्भाषायां विरचिताः अपि औपनिषदमेव सिद्धान्तं प्रतिपादयन्ति । वेदसारोऽयमिति तत्रैव अभिधीयते । गौतमबुद्धः खलु कुलगुरोः असितदेवलात् वेदान्तशास्त्रम् अधीत्य संसारात् विरक्तो बभूव, बौद्धमतश्च प्राचारयदिति अश्वघोषप्रणीते बुद्धचरिते कथितम् ( १.५४ ) दिङ्नाग-धर्मकीर्ति-नागार्जुनप्रभृतयो महाविद्वांसः संस्कृतभाषायामेव प्रौढग्रन्थान् विरचय्य बौद्धमतं प्रसारयामासुः । जैनदर्शनेऽपि कुन्दकुन्दाचार्यः, उमास्वातिः, भट्टाकलङ्कः इत्यादयः पण्डितप्रकाण्डाः जैनमतप्रसारार्थं संस्कृतगिरमेव अशिश्रियन् । यतः संस्कृतभाषा एव सर्वेषु राज्येषु समानरूपतया विराजमाना जिज्ञासुजनविज्ञेया बभूव ।

क्रिस्तीये पञ्चदशे शतके (15th April 1469) समुत्पन्नेन महात्मना नानक-गुरुणा प्रवर्तितं सिक्मतमपि वेदान्तादिदर्शनप्रभावितं, देशकालादिभेदेन किञ्चित् किञ्चित् परिवर्तितं द्रष्टव्यम् । 'ग्रन्थसाहेब'नाम्नि ग्रन्थे प्रणवमोङ्कारमेवं स्तौति नानकगुरुः -

ओम् अक्खर सुनहु विचार
ओम् अक्खर त्रिभुवनसारा ।
प्रणवो आदि एक ओङ्कार
जल थल महियल कियो पसारा ।।

'ओमितीदगँ सर्वम्' इति उपनिषद्वाक्यस्य विवरणमेतत् । 'सर्वं खल्विदं ब्रह्म' इत्यद्वैतसिद्धान्तं पुरस्कुर्वाणः सः एव आह -

ईश जीव में भेद न जानो
साधु, चोर, सब, ब्रह्म पहचानो ।
वासुदेव विन अवर न कोऊ ।
नानक् ओं सोऽहं आतम आतम सोऽहम् ।।

एवं धर्मशास्त्रबोधिताः विवाहादिसंस्काराः, पतिपत्न्योः पितापुत्रयोः गुरुशिष्ययोः च सम्बन्धः, अतिथिसत्कारः इत्येवमादयो धर्माः हिन्दुजनेषु समानाः दृष्टाः (इदानीं दृश्यते व्यतिकरः महान्, अतः उपरागकालः सन्निहितः इव भाति) । धर्मशास्त्रोक्तानि गणेशचतुर्थीप्रभृतीनि पर्वदिनान्यपि समानतया सर्वत्र अनुष्ठीयन्ते अद्यापि । गृहाणां द्वारप्रदेशेषु रङ्गवल्ल्या चित्रणं, कदली-स्तम्भचूतपत्रादिभिः तोरणानाम् अलङ्करणम् इत्यादयः संस्कृतिप्रकारलेशाः सर्वेषु हिन्दूगृहेषु समानाः अद्यापि वरीवृत्यन्ते इत्यपि द्रष्टव्यम् ।

अथ सभ्यता । Culture इत्यर्थे सभ्यताशब्दोऽस्माभिः प्रयुक्तः इति पूर्वम् उक्तम् । विज्ञानशास्त्रं तावत् पूर्वं शैशवावस्थाम् अतिक्रम्य न प्रवृद्धम् । तत्र कारणान्वेषणम इदानीम् अप्रस्तुतम् । क्रि.पू.षष्ठशतके एव ब्राह्मीलिपिः प्रसिद्धा बभूव । तस्याः एव भारतदेशे सर्वाः लिपयः, द्राविडभाषालिपयोऽपि समुत्पतिताः इति डा॰ एस्. श्रीकण्ठशास्त्रिमहोदयाः सोदाहरणं लिखितवन्तः । अ आ इ ई इत्यादिवर्णमाला प्रातिशाख्येषु प्रसिद्धा । अर्थशास्त्रम्, धनुर्विद्या, राज्यशास्त्रम्, वास्तुशिल्पम्, गणितम्, आयुर्वेदः, रसायनशास्त्रम्, अश्वशास्त्रम्, गजशास्त्रम् इत्यादीनां प्रमाणभूताः मूलग्रन्थाः संस्कृतभाषया एव विरचिताः । कुशलकलाः खल्वपि चतुःषष्टिरिति परिसंख्याताः प्रचुरतां जग्मुः । नाट्यसङ्गीतवाद्यचित्रकलादीनां मूलग्रन्थः संस्कृते एव लिखिताः सर्वत्र प्रचुरतां प्रपेदिरे । इति संक्षेपः ।

किं बहुना ? भारतराष्ट्रनिर्मात्री संस्कृतभाषा एव इति मन्यामहे । अमरकोशे पठ्यते -

ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती ।
व्याहार उक्तिर्लपितं भाषितं वचनं वचः ।। इति ।

भारतीशब्दस्य भाषा, वागित्यर्थः । का नाम व्युत्पत्तिः भारतीशब्दस्य ? भरतखण्डस्य इयम्, भरतखण्डे भवा भारतीति व्युत्पत्तिः । संस्कृतं विना का नाम अपरा भाषा अस्ति, या अखण्डं भारतमण्डलं व्याप्य अवतिष्ठते ? भारतराष्ट्रस्य निर्मात्री संस्कृतभाषा । सेयम् असाधारणवीर्यतेजोबलैः सम्पन्ना ऋषिगणैः, पण्डितमण्डलैः, कविकुलैः, निखिलराज्यप्राज्यप्रजासमुदायैश्च सेविता सभाजिता च राष्ट्रभाषासिंहासनं स्वयमधिरुरोह इति साम्प्रतम् । सेयं संस्कृतभाषा स्वसमुत्थया संस्कृत्या नानारूपेण राष्ट्रव्यापिनी भारतराष्ट्रस्य एकतायाः अखण्डतायाः समग्रतायाः च निबन्धनम् । यथा बीजपूरे दाडिमफले मनोज्ञानि स्वयंपुष्टान्यपि बीजानि सूक्ष्मया त्वचा सम्बद्धानि अखण्डमेकं दाडिमफलम् आरभन्ते, तथा भारतदेशे विभिन्नानि राज्यानि संस्कृतवाङ्मय-प्रभूतया संस्कृत्या वज्रलेपेन इव सम्बद्धानि समग्रमेकं भारतराष्ट्रम् आरभन्त । अत्र इमे श्लोकाः भवन्ति मदीयाः -

भारती संस्कृतिर्भाति भारतं बिभ्रती भृशम् ।
राष्ट्रस्याखण्डतावाप्तौ राजनीतिस्तु दुर्बला ।।
वैदिकी संस्कृतिः सेयं देववाण्युपबृंहिता ।
समग्रं भारतं वर्षं शरीरमिव चेतना ।
अनुप्रविष्टा सर्वत्राप्यबुधानामगोचरा ।
चेतयन्ती महाशक्तिः कृत्स्नं जनपदं महत् ।
सग्रामनगराण्येषा राष्ट्रे राज्यानि सर्वतः ।
मालायामिव माल्यानि ग्रथ्नती सम्प्रकाशते ।
संरक्षणीया यत्नेन सूत्रकल्पा हि संस्कृतिः ।
अल्पज्ञैर्यदि विच्छिन्ना राष्ट्रं मालेव शीर्यते ।
न खल्विष्टो मतिमतां स्वप्नेऽप्युच्छेद आत्मनः ।
अन्तरं नैव पश्यामो राष्ट्रनाशात्मनाशयोः ।
तस्मादस्माभिरेतस्मिन् काले कलिकरालिते ।
एकताखण्डता राष्ट्रे संस्कृतेनेति घुष्यते ।

अन्ते च इदमस्तु भारतवाक्यम् - आथर्वणिकोऽयं मन्त्रो भूमिसूक्ते -

जनं बिभ्रती बहुधा विवाससं

नानाधर्माणं पृथिवी यथौकसम् ।
सहस्रं धारा द्रविणस्य मे दुहां
ध्रुवेव धेनुरनपस्फुरन्ती ।।

अस्यार्थः – विविधभाषाः बहुधा भाषमाणान्, नानाधर्मानुयायिनः, यथाक्रमं स्वस्वगृहेषु निवसतो जनान् सर्वान् धारयन्ती भूमिरियम् अस्माकं, ध्रुवा कामधेनुः सहस्रधारं क्षीरमिव निरन्तरमैश्वर्यधारां प्रयच्छन्ती विराजताम् इति ।।

★ ★ ★

## हरिहरयोः अभेदः

'सः एकः एव' इति तत्त्वं रङ्गनाथशर्मवर्यः एवं प्रतिपादयति –

**हरिहरयोरिह भेदं कलयति मूढो न वै विद्वान् ।**
**प्रकृतिस्तयोरभिन्ना प्रत्ययभेदात् द्विधा भवति ।।**

'हरिहरयोः भेदं तु अविवेकिनः वदेयुः, न तु पण्डिताः । तयोः मूलस्वरूपं तु एकमेव । उपासनविधेः (विश्वासस्य) कारणतः तयोः भेदः दृश्यते' इति तु अस्य श्लोकस्य वाच्यार्थः ।

'प्रकृतिः नाम धातुः अपि । प्रत्ययाः तु अच्प्रभृतयः । हरिहरपदयोः उभयोः अपि प्रकृतिभूतः तु 'हृ'धातुः । हरिः इत्यत्र औणादिकः 'इ'-प्रत्ययः । हरः इत्यत्र कर्त्रर्थकः 'अच्'प्रत्ययः । एवं प्रत्ययभेदात् रूपभेदः । अर्थस्तु समानः' इति तु प्रतीयमानः अन्यः अर्थः ।

# ७. वर्णविवेकः

प्रबन्धेऽस्मिन् संस्कृतभाषायां प्रयुज्यमानानां वर्णानां भेदान्, स्थानप्रयत्नान्, केषाञ्चित् वर्णानाम् उच्चारणे सम्भाव्यमानदोषं च विचारयितुं यत्नः क्रियते । विचारश्च शिक्षाशास्त्रसहकृतव्याकरणशास्त्रानुरोधेन । व्याकरणशास्त्रे शब्द-साधुत्वचिन्ता, शिक्षाशास्त्रे तु वर्णोच्चारणसाधुत्वचिन्ता इति विशेषः । अतः एव 'पुनर्व्यक्तीकरिष्यामि वाच उच्चारणे विधिम्' इत्युक्तं पाणिनीयशिक्षायाम् । 'प्रवक्ष्यामि वर्णोच्चारणलक्षणम्' इति शौनकशिक्षायाम् । तथा च शिक्षयति वर्णोच्चारणविधिम् इति शिक्षा इति व्युत्पत्तिः । विद्योपादानार्थकशिक्षधातोः पचादित्वात् कर्तरि अच्प्रत्ययः । वर्णोच्चारणविधिश्च स्थानप्रयत्नभेदानां प्रतिपादनं विना न शक्यो बोधयितुमिति स्थानादीनां प्रतिपादनं विस्तरेण कृतमत्र शास्त्रे ।

तत्र 'अइउण्' इत्यादीनि माहेश्वरसूत्राणि व्याकरणशास्त्रीयप्रक्रियोपयोगीनि केवलम् । लोके तु अआ इई इत्यादिरूपेण प्रसिद्धा या अक्षरमातृका सा एव आश्रिता शिक्षायाम् ।

संस्कृतभाषायां प्रयुज्यमानानां वर्णानां विषये सन्ति केचन प्रश्नाः केषाञ्चित् । भेद-स्थान-प्रयत्नविषये सन्ति सन्देहाः पुनः केषाञ्चित् । वर्म्नानाम् उच्चारणे सन्ति अन्येषां केषाञ्चित् भ्रमाः । पुनः कांश्चन भाययन्ति दोषाः । अतः एतेषां सर्वेषां विषये शास्त्रीयचिन्तनं कृतम् अस्ति एतस्मिन् लेखे । अक्षरं वर्णश्चेति पदद्वयं पर्यायेण प्रयुज्यते । कति वर्णाः सन्ति संस्कृतभाषायाम् ?

'त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः' इति शिक्षावाक्यम् । तथाहि – स्वराः, व्यञ्जनानि इति द्वेधा भवति वर्णानां स्थूलो भेदः । स्वयमेव राजन्ते इति स्वराः । वर्णान्तरानपेक्षया स्वयमेव स्फुटोच्चारणविषयाः इत्यर्थः ।

अइउ इत्यादिस्वराणां खलु विना व्यञ्जनाक्षरं स्फुटम् उच्चारणं शक्यते कर्तुम् । क्, ग्, च् इत्यादिव्यञ्जनानां तु स्वरं विना न स्फुटं भवति उच्चारणम् । क कि ग गि च चु इत्यादौ स्वरयोगे तु स्पष्टं भवति ककारादीनां श्रवणम् । अन्यैः स्वरैः व्यज्यन्ते श्रवणगोचराः क्रियन्ते इति व्यञ्जनानि । स्वरव्यञ्जनयोः अन्वर्थम् अस्ति नामधेयम् । ततश्च -

स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ।
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ।।

अस्यार्थः -

स्वरा विंशतिरेकश्च = एकविंशतिः स्वराः ह्रस्वदीर्घप्लुतभेदेन । तथाहि - अइउऋवर्णाः चत्वारः प्रत्येकं ह्रस्वदीर्घप्लुतभेदेन द्वादश भवन्ति । लृकारस्य दीर्घप्लुतौ न स्तः इति मते एकः लृकारः । एऐओऔवर्णानां ह्रस्वो नास्ति । ते चत्वारः । दीर्घप्लुतभेदेन प्रत्येकं द्विविधाः इत्यष्टौ भवन्ति । आहत्य स्वराः एकविंशतिः । (२१)

स्पर्शानां पञ्चविंशतिः = कादयो मावसानाः स्पृष्टप्रयत्नत्वात् स्पर्शाः उच्यन्ते । एते पञ्चविंशतिः इति स्पष्टम् ।

यादयश्च स्मृता ह्यष्टौ = य, र, ल, व, श, ष, स, ह इत्येते वर्णाः अष्टौ स्मृताः । एते अवर्गीयाः इति पृथगुक्तिः ।

चत्वारश्च यमाः स्मृताः = कवर्गादिषु पञ्चसु वर्गेषु प्रत्येकमाद्यानां चतुर्णां मध्ये एकैकस्मात् पञ्चमेऽनुनासिके परे मध्ये यमो नाम पूर्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः । यथा - पलिक्नी, चख्नतुः, अग्निः, घ्नन्ति इत्यत्र क्रमेण क-ख-ग-घेभ्यः परे तत्सदृशाः एव यमाः । एवं याच्ञा, ज्ञानम्, प्रयत्नः, स्वप्नः इत्यादावपि इति द्रष्टव्यम् । यमानां पूर्वसादृश्यं विवारत्वादियत्नकृतं, न तु स्थानकृतम् । महाभाष्ये च एषाम् अयोगवाहत्वम् उक्तम् । एते यमाश्च कुँ-खुँ-गुँ-घुँरूपाश्चत्वारः इति सर्वत्र लिखितम् । चवर्गटवर्गतवर्गपवर्गेषु अपि पञ्चमे परे यमानाम् एकरूपता उत, भिन्नरूपता इत्यत्र वैदिकाः एव प्रमाणम् । सर्वे व्याख्यातारः अत्र तूष्णीकाः । सर्वत्र यमाश्चत्वारः इत्युक्तेः एषां सर्वेषु अपि वर्गेषु समानरूपता इति प्रतिभाति । तदेवं पूर्वोक्तया स्वराणाम् एकविंशत्या सह स्पर्शादीनां सप्तत्रिंशतः योजने अष्टपञ्चाशत् । (५८)

अनुस्वारो विसर्गश्च≍क≍पौ चापि पराश्रितौ ।
दुःस्पृष्टश्चेति विज्ञेयो लृकारः प्लुत एव च ।।
अस्यार्थः -

≍क≍पौ जिह्वामूलीयोपध्मानीयौ । चैत्रः करोति । अत्र≍क् इति जिह्वामूलीयः । चैत्रः पचति । अत्र≍प् इति तु उपध्मानीयः । कुप्वोः परयोः इमौ विधीयेते इति पराश्रितौ । दुःस्पृष्टो नाम ळकारः डकारस्य स्थाने विधीयमानः । 'अग्निमीळे पुरोहितम्' इत्यत्र डस्य स्थाने ळः । स च वेदेष्वेव, न तु लोके । देशभाषासु तस्य भूयान् अस्ति प्रयोगः इत्यन्यत् । ढकारस्य महाप्राणस्य स्थाने 'ळ्ह' इति श्रूयमाणः अपि दुःस्पृष्टः । तदुच्चारणे ताल्वाद्यवयवस्पर्शः सम्यग् न भवतीति दुःस्पृष्टः आख्यायते । ऋलृकारौ दुःस्पृष्टौ इति केचित् । प्रकृते तु ळकारः एव दुःस्पृष्टः ग्राह्यः । अन्यथा एकविंशतिः स्वराः इति प्रतिज्ञायाः भङ्गापत्तिः इति बोध्यम् । एवं च अनुस्वारादीनां पञ्चानां पूर्वोक्तया अष्टपञ्चाशत्संख्यया योजने त्रिषष्टिः वर्णाः भवन्ति ।

'लृकारः प्लुतः एव च ।' इदन्तु स्वमतम् । लृकारः ह्रस्वः, प्लुतः चेति द्विविधः । एवकारेण दीर्घं व्यावर्तयति । पूर्वोक्तेन ह्रस्वमात्रेण गणनायां त्रिषष्टिर्वर्णाः । प्लुतेन सह चतुःषष्टिः इति व्यवस्था । 'लृति सवर्णे लृ वा' इति वार्तिकेन दीर्घोऽपि लृकारो विधीयते । सः तु ईषत्स्पृष्टः । विवृतस्य लृकारस्य तु दीर्घो नास्तीति बोध्यम् । सोऽपि क्लृपिधातौ एव उपलभ्यते क्लृप्तः, क्लृप्तिः इत्यादौ ।

**शिक्षोक्तः वर्णोत्पत्तिक्रमः**

आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।।
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।
वर्णान् जनयते..... । इति पाणिनीयशिक्षावचनम् । अस्य अर्थः -

आत्मा = कर्तृत्वेन अभिमतजीवात्मा, बुद्ध्या = बुद्ध्यात्मकवृत्तिविशेषेण करणेन, अर्थान् = विषयीकृतान् पदार्थान्, समेत्य = विविच्य, एकबुद्धिविषयान् कृत्वा, कान् शब्दान् प्रयुञ्जीयेत्यपि निश्चित्य, विवक्षया = तद्बोधनेच्छया, मनो युङ्क्ते = मनो युक्तं करोति, मनसि वक्तुमिच्छा जायते इत्याशयः । ततश्च मनः

= तदिच्छावन्मनः, कायाग्निम् = जाठराग्निम् आहन्ति = अभिहन्ति । जाठराग्निर्नाम चैतन्याभिधः शक्तिविशेषः । सः सर्वाङ्गव्यापकः अपि प्रकृते जठरदेशावच्छिन्नः गृह्यते । सः जाठराग्निः नाभिदेशस्थं मारुतं = वायुं प्रेरयति । सः मारुतः उदीर्णः = ऊर्ध्वं प्रेरितः सन् मूर्ध्नि* = शिरःकपालेन अभिहतः, वक्त्रमापद्य = आस्यं प्रविश्य, ताल्वादिस्थानानि अभिहत्य वर्णान् जनयते = अकारादिवर्णान् उत्पादयति । अत्र वर्णशब्देन ध्वनिः ग्राह्यः । ध्वनिना च नित्यो वर्णः अभिव्यज्यते इति वैयाकरणसिद्धान्तः । ध्वनिवर्ण-शब्दयोः अभिन्नार्थकत्वम् अभिप्रेत्य साङ्कर्येण तत्र तत्र प्रयोगः ।

**स्थानप्रयत्नादिविवेकः**

एषां वर्णानां स्थानानि शिक्षावचनम् अनुरुध्य सिद्धान्तकौमुद्यां सङ्गृहीतानि । तथाहि - *अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । लृतुलसानां दन्ताः । उपूपध्मानीयानाम् ओष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकानुस्वारस्य* इति स्थानानि । विस्तरभिया नायं विषयः विव्रियते । इदं तु वक्तव्यम् - विसर्जनीयस्य कण्ठः स्थानमित्युक्तिः अकाराश्रयं विसर्गम् अभिप्रेत्य । हरिः गुरुः इत्यादौ इकाराद्याश्रयाणां ताल्वादीनि यथायथं स्थानानि । 'अयोगवाहा विज्ञेया आश्रयस्थानभागिनः' इति शिक्षावचनात् । अनुस्वारस्य इव यमानामपि नासिका स्थानम् । किञ्च कण्ठादीन्यपि वस्तुतः वर्णोत्पत्तौ करणानि, न तु स्थानानि । न हि कुण्डे बदराणि इव अकारादयः कण्ठादिषु सन्ति । स्थानत्वव्यवहारः तु वर्णाभिव्यक्तिजनकवायुसंयोगाधारे कण्ठादौ वर्णाधारत्वारोपेण ।

वर्णाभिव्यक्तिसमये कण्ठादिस्थानाभिघातकाः गलविवरविकासादिकराः च यत्नाः अपेक्षिताः । ते च यत्नाः आभ्यन्तराः बाह्याः चेति । आभ्यन्तरप्रयत्नाः चतुर्धा - स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात् । बाह्यप्रयत्नाः तु एकादशधा - विवारः, संवारः, श्वासः, नादः, घोषः, अघोषः, अल्पप्राणः, महाप्राणः,

---

* अत्र 'मूर्ध'पदेन घोषतन्त्र्याः उच्चभागः अभिप्रेतः इति मन्तव्यम् । सर्वेषामपि वर्णानां प्रथमः संस्कारस्तु घोषतन्त्र्याम् एव । नाभिदेशात् निर्गतः वायुः घोषतन्त्र्यां संस्कारं प्राप्य एव अग्रे सरति । - **सम्पादकः**

उदात्तः, अनुदात्तः, स्वरितः चेति । 'एषां प्रयत्नानाम् आभ्यन्तरत्वं वर्णोत्पत्ति-काले एव भावात् । बाह्यत्वं तु वर्णोत्पत्तेः अनन्तरं* सम्भवात्' इति न्यासे पदमञ्जर्यां च उक्तम् । नागेशभट्टाः तु लघुशब्देन्दुशेखरे - 'यत्नाः ते आस्यान्तर्गतत्वात् कार्यकारित्वात् आभ्यन्तराः इत्युच्यन्ते, गलविवर-विकासादिकराश्च आस्यबहिर्भूतदेशे कार्यकारित्वात् बाह्या' इत्याहुः । आस्यबहिर्भूतदेशः च तन्मते कण्ठदेशस्थकाकलकात् अधोभागः । काकलकः = The top of the wind pipe. एषां प्रयत्नानां लक्षणकथनपूर्वकम् उदाहरण-प्रदर्शनं महान्तं कालम् अपेक्षते इति तदिह परित्यजामि ।

'स्वरा विंशतिरेकश्च' इत्युक्तिः तु प्रायोवादः । अनुनासिकत्वाननुनासिकत्व-भेदस्य उदात्तादिस्वरभेदस्य च असंख्यानात् । एवं 'व्योर्लघुप्रयत्नतरः शाकटायनस्य' इति सूत्रविहितौ लघुतरप्रयत्नौ वयावपि न गणितौ । तयोः शाकटायनमतसिद्धत्वेन पाणिनीयशिक्षायां परिगणनं न कृतम् । लोकप्रसिद्ध-वर्णानाम् अत्र परिगणनं कृतम् । वेदेषु वर्णान्तराण्यपि सन्तीति प्रातिशाख्येभ्यः अवगम्यते । 'हुम्' इति नासिक्यो वर्णः अपि अस्ति लोके । शास्त्रीयकार्यन्तु न भजते ।

**पूर्वोक्तपरामर्शः**

स्वरः व्यञ्जनं चेति द्विविधं वर्णजातम् । तत्र स्वरेषु अ, इ, उ इति त्रयः एव ह्रस्वस्वराः प्रकृतिभूताः । दीर्घाः प्लुताः च तद्विकृतयः । ह्रस्वद्वयस्य नैरन्तर्येण उच्चारणात् दीर्घस्य, ह्रस्वत्रयस्य संयोगात् प्लुतस्य च उत्पत्तेः । अतः एव तन्त्रालोके -

*अकाराज्जात आकार इकाराद् ई इति स्मृतः ।*
*ऊकारश्च उकारात् स्यात्* .... इत्युक्तं टीकायाम् ।

ऋकारे स्वरव्यञ्जनोभयलक्षणस्य उपलम्भात् 'ऋकारश्च नपुंसकम्' इत्यपि तत्रैव उक्तम् । ऋकारस्य मध्ये व्यञ्जनम् । पार्श्वद्वये स्वरांशः इति नृसिंहाकृतिरयं वर्णः । मध्ये विद्यमानस्य रेफस्य अर्धमात्रा । 'व्यञ्जनन्त्वर्धमात्रकम्' इति वचनात् । पार्श्वद्वये स्वरांशः ह्रस्वस्य चतुर्थो भागः, यः अणुः इति उच्यते । अणुद्वयस्य अर्धमात्रा इति आहत्य एका मात्रा ऋकारस्य । एवं लृकारोऽपि मध्ये व्यञ्जनघटितः इति वेदितव्यम् । 'मातॄणाम्' इत्यादौ दीर्घे तु कस्य

अंशस्य दीर्घः ? अन्त्यस्वरांशस्य आधिक्येन समुदायस्य द्विमात्रो दीर्घः इति मे वितर्कः । अत्र प्रमाणवचनं न उपलब्धम् । आदिस्वरघटितत्वादेव ऋकारस्य 'ऋत्यकः' इति पाक्षिकं प्रकृतिभावविधानम् अर्थवत् । न हि अकः रेफे परे सन्धिकार्यमस्ति । अत एव 'उरण्रपरः' इति सूत्रेण ऋकारस्थाने आदिश्यमानस्य अण्वर्णस्य रेफशिरस्कत्वं साम्प्रतम् । अण्प्रत्याहारोऽत्र अ इ उ वर्णानां ग्राहकः । सर्वत्र अन्तरतमस्य आदेशविधानात् ऋकारगतः स्थानी अइउकाराणाम् अन्यतमः स्वरांशः इति सम्भाव्यते । अतः एव मातरः, पितरः इत्यादौ अकारो गुणः, किरति कीर्णः इत्यादौ 'ऋत इद्धातोः' इति इकारः, पूर्तः पूर्णः इत्यादौ 'उदोष्ठ्यपूर्वस्य' इति उकारश्च स्थाने श्रूयन्ते ।

ए, ऐ, ओ, औ इति चत्वारो वर्णाः सन्ध्यक्षराणि । द्वे अक्षरे सन्धाय एकाक्षरत्वं प्राप्तानि अक्षराणि सन्ध्यक्षराणि । एषु अकारः सर्वत्र पूर्वार्धः । एदैतोः उत्तरार्धस्तु इकारः, ओदौतोः तु उकारः इति विवेकः । उत्तरांशाधिक्यात् ऐकारे इकारस्य, औकारे उकारस्य च अंशेन अभिव्यक्तिः । अतः एव 'ऐचोश्चोत्तरभूयस्त्वात्' इति भाष्यं प्रवृत्तम् ।

यरलवाः अन्तःस्थाः = स्वरव्यञ्जनयोः अन्तराले विद्यमानाः । एषामेव व्यञ्जनेषु ईषत्स्पृष्टत्वं कथितम् - 'ईषत्स्पृष्टमन्तःस्थानाम्' इति । अतः एव 'इको यणचि' इति सूत्रेण इकः स्थाने यण्विधानम्, 'इग्यणः सम्प्रसारणम्' इति सूत्रेण यणः इग्रूपेण प्रत्यापत्तिविधानञ्च युज्यते इति संक्षेपः । यवलाः सानुनासिकाः अपि सन्तीति विशेषः ।

**केषाञ्चिद्वर्णानाम् उच्चारणविधिः**

**१. अथ अनुस्वारः**

स्वरः एव स्वारः । स्वार्थेऽण् । स्वारमनु पश्चात् भवति इति अनुस्वारः । स्वरानन्तरम् उच्चार्यमाणो वर्णविशेषः, यो बिन्दुरिति अन्यत्र अभिधीयते । अनुस्वारस्य प्रकृती मकारनकारौ । 'मोऽनुस्वारः' 'नश्चापदान्तस्य झलि' इति सूत्राभ्यां मकारनकारयोः स्थाने विधीयते । 'वा पदान्तस्य' इति सूत्रेण पदान्तस्य ययि परे 'त्वङ्करोषि', 'सम्भवति' इत्यादौ विकल्पेन परसवर्णो भवति । अन्यत्र पदमध्ये शषसहेषु रेफे च परे नित्यम् अनुस्वारः । क्रमेण उदाहरणानि - अंशुः, शिंषा, हंसः, रंहः, पदान्ते संरावः इत्यादीनि ।

नासिका अनुस्वारस्य स्थानम् । केवलनासिकया कस्यापि वर्णस्य उच्चारणासम्भवात् अनुस्वाराश्रयस्य अचः स्थानम् अपि तस्य बोध्यम् । 'अयोगवाहा विज्ञेया आश्रयस्थानभागिनः' इति शिक्षोक्तेः ।

*अलाबुवीणासदृशो दन्तमूल्याः स्वरा ननु ।*
*अनुस्वारस्तु कर्तव्यो नित्यं ह्रोः शषसेषु च ।।*

इति पाणिनीयशिक्षावचनात् दन्तमूल्यः अपि अनुस्वारः । दन्तमूले भवो दन्तमूल्यः । स च कथं श्रूयते ? अलाबुवीणासदृशः । अलाबुः तुम्बी, 'पुङ्गी' इति देशभाषायाम् । तुम्बीवीणाभ्यां जायमानः साधारणध्वनिरिव एकमात्रिकः श्रूयते । यथा हंसः, कंसः, हिंसा, भ्रुकुंसः, शिंषा, पिंषन्ति, सिंहः, संरोहति इत्यादि । अनुस्वारस्य उच्चारणे ओष्ठपुटस्य संस्पर्शो मा भूत् । यदि संस्पर्शः भवति ओष्ठयोः तर्हि स मकरः एव उच्चार्यते, न तु अनुस्वारः । एवं च कम्सः, सिम्हः हिम्सा इत्युच्चारणम् अशुद्धम् इति बोध्यम् । सम्भवति, अम्भः, सञ्चयः, अन्नः इत्यादौ तु परसवर्णः अनुनासिकः इति मकाराद्युच्चारणं साधु एव । शषसहेषु रेफे च परेषु अनुस्वारः नित्यः इति तत्त्वम् । सम्राट्, साम्राज्यम् इत्यत्र तु मकारः एव उच्चारणीयः, न तु अनुस्वारः 'मो राजि समः क्वौ' इति विशेषविधिना मकारस्य विधानात् ।

**२. अथ विसर्गः**

उच्चारणकाले मुखात् वायुना विसृज्यते इति विसर्गः । स एव विसर्जनीयः । अयोगवाहत्वाद् आश्रयस्थानभागिता तस्य । अतः एव आश्रयेण अकारादिना अनुषक्तः इव श्रूयते सर्वत्र । यथा - रामः इत्यत्र अकारेण, हरिः इत्यत्र इकारेण, गुरुः इत्यत्र उकारेण च अनुषङ्गो विसर्जनीयस्य । ऋकारपूर्वकः लृकारपूर्वकः वा विसर्जनीयः अप्रसिद्धः । हरेः, रामैः, गोः इत्यत्रापि एकाराद्यनुषङ्गो द्रष्टव्यः । रामैः इत्यत्र इकारानुषङ्गः, गौः इत्यत्र उकारनुषङ्गश्च श्रूयते । ऐचोः उत्तरखण्डभूयस्त्वं तत्र हेतुः । एवं जिह्वामूलीयोपध्मानीययोः अपि हरि  करोति, तरु  फलति इत्यादौ आश्रयस्वरानुषङ्गो द्रष्टव्यः । 'अकुहविसर्जनीयानां कण्ठः' इति वचनन्तु अकरोत्तरस्य विसर्जनीयस्य कण्ठः स्थानम् इत्यभिप्रायेण ।

स्यात् स्वत् । रामः, हरिः, गुरुः इत्यत्र विसर्गं परित्यज्य तस्य स्थाने ह, हि, हु इति वर्णान्तरस्य क्रमात् उच्चारणे विसर्गोच्चारणात् को भेदः श्रूयते ? न किञ्चित् । अतः एव संस्कृतभाषानभिज्ञं पुरुषं प्रति 'इमान् शब्दान् लिख' इत्युक्ते, सः नूनं रामह, हरिहि, गुरुहु इत्येव हशब्दोत्तरान् लिखति, न तु विसर्गोत्तरान् । तत् कस्य हेतोः ? न चाज्ञानं तस्य शरणम् । श्रुतिकृतभेदस्य अनुपपादनात् । भवितव्यं च श्रुतिकृतभेदेन । तस्मात् विसर्जनीयस्य समीचीनोच्चारणप्रकारे अस्ति मे जिज्ञासा* ।

**३. अथ ञकारः**

चवर्गपञ्चमोऽयं ञकारः अनुनासिकः स्पृष्टः । अस्त्यन्यो ञ्ँकारः, अन्तस्थः, ईषत्स्पृष्टः । अनयोः उच्चारणे श्रुतिकृतभेदः स्पष्टम् अनुभूयते । अञ्चति, अञ्जनम्, भञ्जनम्, सञ्चारः इत्यादौ चवर्गपञ्चमः स्पष्टम् उच्चार्यते । ञकारानुबन्धकाः सन्ति केचित् प्रत्ययाः व्याकरणशास्त्रे - अञ्, खञ्, ठञ्, ढञ् इत्यादयः । झभञ् इति माहेश्वरसूत्रमपि ञकारानुबन्धकः । विद्वांसः अपि इमान् शब्दान् अयँ्, ठयँ्, ढयँ् इत्येवं यँकारं सानुनासिकम् उच्चारयन्ति, न तु ञकारं चवर्गपञ्चमाक्षरम् । तदिदं प्रमादायातमिति मे भाति ।

अत्र इदमवधेयम् । 'राजन्'शब्दस्य द्वितीयाबहुवचने राज्ञः इति रूपं प्रसिद्धम् । राजन् + शस् इति स्थिते पूर्वस्य अनोऽल्लोपे नकारस्य श्चुत्वेन ञकारः । ततो जकारञकारयोर्योगे स्वतः सिद्धः 'ज्ञ'शब्दः । अत्र प्रक्रिया-प्रदर्शनावसरे सिद्धान्तकौमुद्याः 'जञोर्ज्ञः' इति प्रतीकमादाय - *''जञयोगे लोकवेदसिद्धताद्दशध्वनेः लिपिविशेषस्य चानुवादकम् अभियुक्तवचनं, न तु इदं वर्णान्तरं, शिक्षादावपरिगणितत्वेन तत्सत्त्वे मानाभावात् । अतः एव*

---

* हकारस्य श्रुतौ घोषो नाम कम्पनधर्मो वर्तते, तस्मात् कठोरतरो हकारः । विसर्गस्य श्रुतौ पुनः घोषो नास्ति । तस्मादसौ मृदुतरः । एषः एव अनयोः भेदः । तस्मात् प्रथमं -

सः - सह, स्वाः - स्वाहा, स्वपिः - स्वपिहि इत्यादिषु सहजेषु स्थलेषु,

धीः - धीहि, गुरुः - गुरुहु इत्यादिषु कृत्रिमेषु स्थलेषु च

हकारं कम्पनेन कर्कशं, विसर्गं तु तदभावेन मृदु च कुर्वन् तयोः विवेकम् अभ्यस्येत् ।

- (श्रीरमणविरचितात् 'शिक्षाप्रथमक्लृप्तिः' इत्यस्मात् ग्रन्थात् ।)

*तज्ज्ञानमित्यादौ श्चुत्वसिद्धिः''* इति नागेशभट्टैः अभिहितम् । सर्वमिदम् अस्माकं कौतुकास्पदम् । जकारञकारयोर्योगे ज्ञ इति स्वतो भवत्येव । 'जञोर्ज्ञः' इति वचनस्य का प्रसक्तिः ? इदं वर्णान्तरमिति शङ्कायाः अपि कथम् उत्थितिः, या यत्नेन समाधीयते ? न हि संयुक्ताक्षरेषु क्त, क्ष, त्न इत्यादौ वर्णान्तरत्वशङ्का भवति कस्यापि सचेतसः । तस्मादनेन ग्रन्थेन भवति एवम् अस्मदीयः तर्कः – ''राज्ञः, ज्ञानम् इत्यादौ ज्ञशब्दोच्चारणरीतिः अस्मद्देशे प्रसिद्धैव । ग्रन्थकाराणां भट्टादीनां जन्मभूमौ तदुच्चारणरीतिः अन्यथा एव आसीत् । तेषाम् उच्चारणे जकारञकारयोः श्रवणं स्फुटं न अभवत् । अतः एव ज्ञशब्दः अयं वर्णान्तरम् इति शङ्कानिवारणार्थं 'जञोर्ज्ञः' इति कौमुद्यां लिखितम् । तथापि जञोः स्थाने ज्ञादेशः इति भ्रमनिवारणार्थं नागेशभट्टैः तत् विवरणं कृतम् इति ।

मम अपि अस्ति कश्चित् अनुभवः । महाराष्ट्रीयः कश्चन वृद्धः विद्वान् ज्ञानशब्दं 'ग्याँन' इति पठति स्म । वृद्धः अयं करणानाम् अपाटवात् एवं पठति इति अहम् अमन्ये । पश्चाद्विज्ञातं – तद्देशीयाः सर्वेऽपि 'ग्याँन' इत्येव पठन्ति इति । तेषाम् उच्चारणे ज्ञशब्दस्य आदौ जकारः न श्रूयते । अतः एव नागेशभट्टैः वर्णान्तरत्वभ्रमनिवारणार्थं तज्ज्ञानमित्यत्र श्चुत्वं प्रमाणीकृतम् । एवं स्थिते ज्ञशब्दोच्चारणे का रीतिर्युक्ता इति परिशीलनीयं वर्तते ।

**४. अथ ह्रस्वाकारः**

ह्रस्वाकारं परित्यज्य सर्वे स्वराः विवृताः इति आम्नायते शिक्षाग्रन्थेषु । आकारो दीर्घः प्लुतश्च विवृतौ एव । ह्रस्वः अकारस्तु संवृतः । आचार्यः पाणिनिः अपि अष्टाध्याय्यन्ते 'अ अ' इति सूत्रयन् ह्रस्वस्य प्रयोगे संवृतत्वं बोधयति । अनेन हि सूत्रेण विवृतमनूद्य संवृतो विधीयते । सवर्णसंज्ञाद्वारा शास्त्रीयप्रक्रियानिर्वाहार्थं ह्रस्वस्य विवृतत्वं केवलं प्रतिज्ञातम् । वस्तुतः न एषः विवृतः, किन्तु संवृतः एव इति ज्ञायते । किमिदं वैलक्षण्यम् अन्येभ्यः स्वरेभ्यः ह्रस्वस्य अकारस्य ?

अकारोऽयमुच्चार्यते अस्माभिः द्विधा । अस्त्युत्तरस्यां दिशि देवतात्मा । अत्र अॅ इति ध्वनिः । अस्तं गतः भानुमान् । अ इति ध्वनिः । हस्ती । हकारोत्तरस्य अकारस्य अॅ इति ध्वनिः । हस्तः अत्र तु अ इत्येव । अॅ इति उच्चारणे ओष्ठद्वयस्य किञ्चित् संवरणं भवति, अ इत्युच्चारणे तु ओष्ठद्वयस्य

विवरणं भवति इति सूक्ष्मेक्षिकया द्रष्टव्यम् । एषु द्वन्द्वेषु परिशीलितेषु स्फुटतरो भवति अनयोर्भेदः । यथा - अद्य - अदन्ति, सद्यः - सदनम्, रक्तम् - रजतम्, लशुनम् - लता, गव्यम् - गहनम् इत्यादि । धारवाडप्रान्तेषु अध्यापकाः वर्णमालाम् अॅ आ इ ई - इति पाठयन्ति । वयं तु अ आ इ ई इति पाठयामः । औत्तराहाः अपि ह्रस्वम् अॅ इत्येव पठन्ति । कमल-वसन्तादिशब्दान् कमलॅ, वसन्तॅ इति पठन्ति । कन्नडभाषायां ह्रस्वस्य उच्चारणभेदेन अर्थभेदः अपि भवति । यथा 'अत्ते' (ಅತ್ತೆ) इत्युक्तौ 'श्वश्रूः' इत्यर्थः । 'अत्ते' (ಅತ್ತು) इत्युक्तौ 'अरुदम्' इत्यर्थः । उत्तरकर्णाटके 'कत्ति' (ಕತ್ತಿ) इत्यस्य 'खड्गः' इत्यर्थः । 'कत्ते' (ಕತ್ತೆ) इत्यस्य 'गर्दभः' इत्यर्थः ।

एवं स्थिते अॅ अ इत्यनयोः कतरदक्षरं संवृतम् ? ह्रस्वस्य कीदृशम् उच्चारणं युक्तरूपम् ? अॅ इत्यक्षरं संवृतम् । ह्रस्वस्य अॅ इत्युच्चारणमेव युक्तरूपम् उत्पश्यामि । लोके तु विवृतसंवृतयोः साङ्कर्यं प्रविष्टम् ।

### ५. अथ हकारः

हकारस्य स्थानं कण्ठः । व्याकरणशास्त्रे सर्वत्र तस्य कण्ठ्यत्वेन ग्रहणं प्रक्रियार्थम् । उच्चारणविधौ तु हकारस्य क्वचिदुरः स्थानम्, न तु कण्ठः । तदुक्तं पाणिनीयशिक्षायाम् -

*हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम् ।*
*उरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम् ॥* इति ।

अस्य अर्थः -

पञ्चमैः वर्गपञ्चमैः ङञणनमैर्युक्तं हकारं, तथा अन्तःस्थाभिः यरलवैः संयुतं युक्तश्च, उरस्यम् उरःस्थानभवं विजानीयात्, असंयुतं पूर्वोक्तवर्णैः असंयुक्तं हकारं कण्ठ्यं विजानीयात् इति । संयोगश्च हकारस्य एभ्यः पूर्वत्वेन, न तु परत्वेन । तदुक्तं शौनकशिक्षायाम् -

*हकारं पञ्चमैर्युक्तं अन्तःस्थाभिश्च संयुतम् ।*
*उरस्यं तं विजानीयात्परं चेत् पृथगुच्चरेत् ॥*

इति । यथा - रथान् हयाः वहन्ति । अत्र नकारात् परो हकारः इति तस्य कण्ठ्यत्वमेव । प्रकृते उरस्यं हकारस्य । इमानि उदाहरणानि - पूर्वाह्णः, मध्याह्नः, ब्रह्मा, ब्राह्मणः इति पञ्चमवर्णात् पूर्वस्य । ह्यः, सर्वो ह्ययं जनः,

आह्वानम्, आह्वयति, प्रह्लादः, आह्लादः, ह्रीः, ह्रदः इत्यन्तःस्थाभ्यः पूर्वस्य। स्यात् एतत्। उरसि भवस्य हकारस्य कथम् उच्चारणम्? 'उरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम्' इति वदता शिक्षाकारेण हकारयोः अनयोः उच्चारणे भेदः अस्ति इति स्पष्टीकृतम्। उरो नाम प्रकृते कण्ठस्थकाकलकात् अधस्तनः भागः। तत्र वायोः अभिघातस्य शिथिलत्वात् अत्यन्तशैथिल्येन हकारस्य उच्चारणम् उरसि भवस्य इति ब्रूमः। सम्प्रदायज्ञाः वैदिकाः अपि 'ब्रह्मविदाप्नोति परम्', 'सुब्रह्मण्योम्' इत्यादौ तथैव पठन्ति। किञ्च शषसहाः ऊष्माणः। ऊष्मणां, पञ्चमैः अनुनासिकैः अन्तःस्थाभिश्च योगे ऊर्णापिण्ड-सदृशः श्लथबन्धो भवति इति शौनकशिक्षायाम् उक्तम्।

*ऊष्माणः पञ्चमैर्युक्ता अन्तःस्थाभिश्च संयुताः।*
*ऊर्णापिण्डेन तत्तुल्यं श्लथबन्धाः प्रकीर्तिताः॥* इति।

यथा उर्णापिण्डे सूक्ष्माणि रोमाणि शैथिल्येन संयुक्तानि, तथा एतानि अक्षराणि संयुक्तानि भवन्ति - अह्ना, ब्रह्म, पूर्वाह्णे, ह्रदा इव इत्युदाहरणानि च 'हकारं पञ्चमैर्युक्तम्' इत्यस्य समुच्चित्य शिक्षायाम् एव दर्शितानि। ह्र, ह्ल इत्यादिसंयोगस्य शिथिलोच्चारणत्वादेव एतत्परकस्य ह्रस्वस्य पाक्षिकं लघुत्वं छन्दःशास्त्रे अभिहितम्। उदारहणञ्च शिशुपालवधे माघस्य -

प्राप्य नाभिह्रदमज्जनमाशु प्रस्थितं निवसनग्रहणाय।

नाभिह्रदमित्यत्र 'भि' इत्यक्षरं लघु। यदि नाभिह्रदम् इत्यत्र हकारः कण्ठ्यः उच्चार्यते तर्हि छन्दोभङ्गः एव। एवं च ब्रह्म, ब्राह्मणः, मध्याह्नः इति हकारं कर्णकठोरं पठन्तः पाठयन्तः च परास्ताः वेदितव्याः। तादृशोच्चारणस्य शिक्षाशास्त्रविरुद्धत्वात्, समस्तशिष्टवैदिकविद्वज्जनोच्चारणविरुद्धत्वात् च इति दिक्। कण्ठ्यत्व-तालव्यत्व-अनुनासिकत्वादयः धर्माः, उदात्तादिस्वराश्च व्यञ्जकध्वनिगताः, न तु व्यङ्ग्यवर्णगताः इति स्थितम्।

प्रसङ्गात् किञ्चन विषयान्तरं जिज्ञासया प्रस्तोतुम् इच्छामि। शब्दोच्चारण-ध्वनिः प्रतिपूरुषं भिद्यते। अस्मिन् लोके यावन्तो जनाः सन्ति तावन्तो ध्वनिभेदाः सम्भवन्ति कोटिशः। किञ्च ध्वनिवैलक्षण्यादेव उच्चारयिता जनोऽयं बालः तरुणः, वृद्धः, पुरुषः, स्त्री वेति शक्यते ज्ञातुम्। शब्दः अयं दूरे समुत्पन्नः, समीपे वा इत्यपि शक्यते विवेक्तुम्। शब्दस्य उत्पादने

स्थानप्रयत्नयोः साम्येऽपि कथम् एतादृशस्य भेदस्य वैलक्षण्यस्य च ध्वनौ सम्भवः ? अस्मिन् विषये परम्, आधुनिकध्वनिविज्ञानशास्त्रवेदिनो विद्वांसः यदि प्रकाशं कृपया वितरेयुः, तर्हि वयम् उपकृताः भविष्यामः ।।

★ ★ ★

## नित्यविद्यार्थिता

कदाचित् रा.गणेशवर्यः रङ्गनाथशर्मवर्यम् अपृच्छत् – ''भवान् तु महावैयाकरणः । भवता अपि कौमुद्यादिग्रन्थाः परिशीलनीयाः भवन्ति किम् ? कौमुदीस्थाः विषयाः तु भवद्बुद्धिगताः स्युः एव ननु ?'' इति ।

तदा रङ्गनाथशर्मवर्येण उक्तम् – ''सन्देहास्तु सदा भवन्ति एव ।

**शास्त्रं स्वधीतमपि तत् परिचिन्तनीयम्**
**प्रीतो नृपोऽपि सततं परिसेवनीयः ।**
**अङ्के स्थितापि तरुणी परिरक्षणीया**
**शास्त्रे नृपे च युवतौ च कुतो वशित्वम् ।।**

अतः नित्यविद्यार्थिता अवलम्बनीया विदुषा अपि । नास्ति अन्यः पन्थाः'' इति ।

# ८. संस्कृतव्याकरणस्य प्राशस्त्यम्

इह खलु जगति विविधेषु जनपदेषु जनैः उपयुज्यमाना भाषाः संख्यायाः अगोचराः । परःसहस्त्रम् उपलभ्यमानासु अमूषु प्रान्तभेदेन प्रदेशभेदेन रूपान्तरम् आपादिता क्वचिदेकाऽपि बहुधैव संलक्ष्यते । आरण्यकानामपि जनानां विना भाषां व्यवहारो न सिध्यति । नास्ति पृथिव्यां कोऽपि जनसमुदायः तादृशः, यो भाषां न उपयुङ्क्ते । यश्च भाषां न जानाति नासौ मनुष्यत्वभाक् । वर्णमयी खलु भाषा भवति भेदहेतुस्तिरश्चो मानवस्य । विना च भाषां मानवस्य ज्ञानं नाभिवर्धेत । व्यवहारो न प्रकल्पेत । स्वाभिमतं पुरुषान्तरे संक्रामयितुं नास्ति भाषातः परं साधनम् । आह च युक्ताभिधायी दण्डी -

**इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते** ।। इति ।

एषा च मानवानां सर्वातिशायिप्रयोजनानि आदधती कथम् एतेषु देशेषु प्रादुर्बभूव इति तु दुःशकं विभावयितुम् । विषयेऽस्मिन् भाषाशास्त्रिणां भवन्ति बहवः प्रवादाः, ये किल कृते तु विमर्दे नातीव तृप्तिं जनयन्ति विचक्षणानाम् । यथा मानवानाम् उत्पत्तिस्तथा भाषाणाम् अपि इति देवगुह्यमेतत् । यथार्था विराजते भर्तृहरेर्भारती -

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्** ।। इति ।

संस्कृतभाषापरनाम्नी देवभाषा सर्वासां भाषाणां जन्मभूरिति साम्प्रदायिकाः । यथा तथा वा अस्तु । सर्वासु भाषासु व्याकरणं नोपलभ्यते । यस्या वाङ्मयं काव्यशास्त्रादिभिर्न समृद्धं, यां भाषमाणाः न भवन्ति विद्वांसः, तस्याः व्याकरणं दुर्लभम् । व्याकरणशास्त्रमेव भवति समर्थो मानदण्डः कस्याश्चन भाषायाः सिद्धिं समृद्धिं च परिच्छेत्तुम् । स्थिते त्वेवं विमर्दसहे

विचारमार्गे संस्कृतभाषाव्याकरणशास्त्रं मूर्धन्यायते सर्वेषां व्याकरणानाम् इति निश्चितम् । ऐकस्वर्येण पाश्चात्त्यपण्डितैः अपि एवम् अभ्युपगतञ्च । संस्कृत-व्याकरणस्य प्राशस्त्ये किं निमित्तमिति किञ्चित् मीमांसामहे ।

व्याक्रियन्ते शब्दाः येन तद् व्याकरणम् । अपशब्देभ्यो विविच्य साधुशब्दाः येन ज्ञाप्यन्ते तद् व्याकरणम् । अथवा प्रकृतिप्रत्ययविभजनद्वारा साधुशब्दस्वरूपं येन आख्यायते तद् व्याकरणम् । यथा संस्कृतव्याकरणेन शब्दाः व्याक्रियन्ते न तथा अन्यभाषीयव्याकरणैः । नापि वा काचिद् वैज्ञानिकी पद्धतिः वर्णानां पदानां वा विभजने विवरणे वा तेषु आदृता, यथा संस्कृतव्याकरणशास्त्रे समादृता । तथाहि – लोकप्रसिद्धाम् अक्षरमालां तावत् परीक्षामहे । अ, आ, इ, ई इत्यादिना प्रथमं स्वराः परिगणिताः, स्वतन्त्राक्षरत्वात् तेषाम् । स्वरस्यापेक्षत्वात् उच्चारणे, व्यञ्जनानां पश्चात् परिगणनम् । तेष्वपि प्रथमं वर्गीयाणां पाठः, ततः परम् अवर्गीयाणाम् । तत्रापि कीदृशी शास्त्रीयपद्धतिः स्वीकृता इति तावदालोक्यताम् । अ, आ इत्यत्र प्रथमं ह्रस्वः तदुच्चारणस्य अल्पकालापेक्षत्वात् । ह्रस्वद्वयसंयोगजन्मनः दीर्घस्य ततः परं पाठः । अयमेव क्रमः इ, ई इत्यादिष्वपि स्वीकृतः । किञ्च वर्णानां स्थानानि अनुरुध्य प्रथमं कण्ठ्यः अकारः, ततस्तालव्यः इकारः, ततश्च ओष्ठ्यः उकारः । यद्यपि मूर्धन्यः ऋकारः उकारात् पूर्वं पठितुमर्हः तथापि नैषः शुद्धस्वरः इति उकारादनन्तरं निवेशितः । एवम् ऌकारोऽपि । इमौ रेफांशेन लकारांशेन च संयुक्तौ व्यञ्जनांशमिश्रस्वरौ । ततश्च अकारेकारसंयोगेन जायमानः एकारः, ततश्च तस्य वृद्धिरूपः ऐकारः । अयमेव क्रमः ओकारौकारयोरपि द्रष्टव्यः । इमे हि सन्ध्यक्षराः कथिताः । स्वरेभ्यः अनन्तरं वर्गीयव्यञ्जनानि पठितानि । तत्रापि कश्चिद् वैज्ञानिकः शास्त्रीयः क्रमः आदृतः, न तु यादृच्छिकः । यद्यपि सर्वे वर्णाः मुखे जायन्ते, तथापि मुखस्य कस्मिन् भागे केषु उपाङ्गेषु वर्णाः इमे जायन्ते इति सूक्ष्मं विचार्य निर्णीतं महर्षिभिः । तदनुरोधेन प्रथमं कण्ठ्यः कवर्गः पठितः । ततस्तालव्यः चवर्गः इति क्रमो द्रष्टव्यः । एकस्मिन् वर्गे पञ्च पञ्च वर्णाः निवेशिताः । तदपि निवेशनं नैव यदृच्छया, किन्तु न्यायानुसारेण । कचटतपाः खलु तत्तद्वर्गीयाणां मूलभूताः वर्णाः । प्रयत्नभेदेन हि एते वर्णाः महाप्राणात्मना मृदुवर्णात्मना नासिकासाहचर्येण च अनुनासिकात्मना विपरिणमन्ते । यथा – वाक् इत्यत्र श्रूयमाणः ककारः स्वरे

परे 'वागियम्' इत्यादौ गकारात्मना, 'वाङ्मयम्' इत्यादौ ङकारात्मना च विपरिणममानो दृष्टः । एवम् अन्यत्रापि अभ्यूहः शक्यो विचक्षणानाम् । तस्मात् वर्गे प्रथमं ककारः, स एव प्रयत्नभेदेन महाप्राणः खकारः । प्रयत्नशैथिल्येन गकारः । श्वासाधिक्येन घकारः । अन्ते च अनुनासिको ङकारः । कण्ठनासिकोभयजन्यत्वात् तस्य । एवं तवर्गादिष्वपि न्यायानुगृहीतो विभागो द्रष्टव्यः । वर्गीयेभ्यः परम् अवर्गीयाणि पठितानि इति युक्तः पन्थाः । तत्र च स्वरद्वयसंयोगेन जायमानानां यरलवानां प्रथमः पाठः । तत्रापि इकारात् यकारः, ऋकारात् रेफः, ऌकारात् लकारः, उकारात् वकारः इति न्यायतः संनिवेशः । यद्यपि यकारानन्तरं वकारः पाठम् अर्हतीति विभाव्यते, उकार-जन्यत्वात् तस्य, तथापि स्थानद्वयजन्यत्वेन तस्य अन्ते निवेशः कृतः । 'वकारस्य दन्तोष्ठम्' इति हि स्मर्यते । वकारस्य दन्त्यत्वात् ओष्ठ्यत्वाच्च लकारानन्तरमेव निवेशो युक्ततरः इति मन्तव्यम् । ततः परं शषसहाः पठिताः, येषु तालव्यादिक्रमः स्पष्टः । आदौ यकारस्य पाठस्तु स्वरद्वयजन्यत्वप्रदर्शनाय ।

अत्राह - "ननु च भोः, हकारः कण्ठस्थानकः श्रूयते । तस्य अन्ते निवेशे को हेतुः ?" इति । सत्यम् । हकारः सर्वत्र कण्ठस्थानको मन्यते व्याकरणे प्रक्रियार्थम् । किन्तु नासौ वस्तुस्थितिः । उरोऽपि तस्य स्थानं क्वचित् । तदुक्तम् -

**हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् ।**
**उरस्थं तं विजानीयात् कण्ठ्यमाहुरसंयुतम् ।।** इति ।

यदा अयं हकारः पञ्चमैः अनुनासिकैः युक्तः, यथा - मध्याह्नम् ब्रह्म इत्यादौ, यदा यरलवैः अन्तःस्थैः युक्तः, यथा - ह्यः ह्लदः आह्लादः आह्वानम् इत्यादौ, तत्र सः उरस्यः एव, न तु कण्ठ्यः । अत एव तत्र हकारोच्चारणम् अस्फुटम् । उरसि उच्चार्यमाणत्वात् । एतेन 'ब्राह्मणः' इत्यादौ साम्प्रदायिकोच्चारणं दूषयित्वा कर्णकर्कशं हकारस्य स्फुटोच्चारणं बोधयन्तो निरस्ताः वेदितव्याः । अत एव हकारस्य उभयस्थानकत्वेन सकारादनन्तरं निवेशः इति सर्वं सुस्थम् ।

अन्यदप्यस्ति कारणं साम्प्रदायिकम् । सुहृद्भावेन पृच्छामीति चेत् शृणु । ब्रह्मतत्त्वमेव शब्दरूपतया प्रतिभातीति शब्दशास्त्रविदां सिद्धान्तः । 'नामरूपे

व्याकरवाणि' इति श्रुतेः नामाख्यः शब्दो वर्णमयो ब्रह्मतत्त्वमेव इति युक्तरूपम् । 'वागेव विश्वा भुवनानि जज्ञे' इत्यादि श्रुतयोऽप्यत्र अनुकूलाः ।

**अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः ।**
**आद्यमन्त्येन संयोगादहमित्येव जायते ।।**

इत्युक्तदिशा सर्वोऽपि वाक्प्रपञ्चः 'अहम्' परमेश्वरः एव इति बोधयितुम् अन्ते हकारस्य निवेशः इति संक्षेपः । अत एव पाणिनीयवर्णसमाम्नाये 'हयवरट्' इत्यत्र पठितोऽपि हकारः पुनरपि 'हल्' इति अन्ते पठितः । तेन 'अहम्'प्रत्याहारसिद्धिः । तत्र हकारस्य द्विः पाठे व्याकरणप्रक्रियोपयोगीनि प्रयोजनान्तराणि सन्ति इति तु अन्यत् ।

ततः परं ळकारो दुःस्पृष्टः इत्यभिधीयमानः क्वचित् पठ्यते । लकारः एव किञ्चिदुच्चारणदोषयोगे ळकारो जायते । शाखाभेदेन वेदे क्वचिदेव उपलभ्यमानत्वात् अक्षरमालायाम् अन्ते क्वचित् प्रक्षिप्तः । क्ष, ज्ञ इति तु संयुक्ताक्षरद्वयं, नापूर्वौ वर्णौ । लिपिवैलक्षण्यात् वर्णान्तरत्वेन प्रतीयमानत्वात् देशभाषायाम् अक्षरमालायां प्रक्षिप्तौ वेदितव्यौ ।

एवं सर्वेऽपि वर्णाः येषु येषु स्थानेषु यैर्यैः प्रयत्नैश्च अभिव्यज्यन्ते इति सूक्ष्मदर्शिभिः भारतीयवैयाकरणैः कृतो विभागः । प्रयत्नाः खल्वपि आभ्यन्तराः बाह्याश्चेति द्वेधा विभक्ताः । तत्र आभ्यन्तरः स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात् चतुर्धा । विवारसंवारादिभेदात् बाह्यस्तु एकादशधा । एकैकस्यापि वर्णस्य किं स्थानं, कश्च प्रयत्नः इति सूक्ष्मं विभाव्य कृता व्यवस्था । किम् एतादृशः शास्त्रीयविचारः प्रवर्तते संस्कृतात् अन्यस्यां भाषायाम् ? ABCD इत्यादिप्रवृत्तायाम् आङ्ग्लाक्षरमालिकायां न कश्चित् क्रमः आदृतः । स्वरैः सह व्यञ्जनानि संमिश्रितानि । एकस्य वर्णस्य बहुधा उच्चारणम् अशास्त्रीयम् अव्यवस्थितञ्च । AEIOU इत्येवं मन्यमानाः स्वराः किं ह्रस्वाः, उत दीर्घाः ? उभयथापि बहुषु स्थलेषु व्यभिचारः । असंष्ठुलः अयम् आङ्ग्लभाषायाम् अक्षरविन्यासक्रमः । न कस्यापि वर्णस्य स्थानप्रयत्नो विचारितो क्वापि अन्यभाषाव्याकरणे ।

वर्णसमूहः पदम् । पदसमूहो वाक्यम् । वाक्यसमुदायो भाषा । वर्णपदवाक्यानां विभज्य अन्वाख्यानं व्याकरणस्य विषयः । तत्र वर्णानां

स्वरूपान्वाख्याने संस्कृतवैयाकरणानां कियती सूक्ष्मदर्शिता तलस्पर्शिता चेति किञ्चित् प्रदर्शितम् । इदानीं पदानां व्याक्रियायाम् एषां कौशलं किञ्चित् दर्शयिष्यते । सर्वाणि पदानि नामपदानि क्रियापदानि चेति द्वेधा । निपातास्तु नामपदेष्वेव अन्तर्भवन्ति । सर्वेषां पदानां पुनर्द्वेधा भवति अन्तर्विभागः - प्रकृतिः प्रत्ययश्चेति । तत्र नामप्रकृतेः प्रातिपदिकमिति, क्रियाप्रकृतेः धातुरिति च व्यवहारः । प्रातिपदिकञ्च निरूढं यौगिकञ्चेति द्वेधा । तत्र यौगिकं धातोरेव निष्पाद्यते पाणिनीये । निरूढमपि प्रकृतिप्रत्ययविभागेन उणादिषु निष्पादितं शाकटायनेन । यदाह - **नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्** ।। इति ।

अस्त्वेतत् । इदं सर्वभाषास्वपि समानम् । संस्कृते तु शब्दजालम् अनन्तप्रकारं च इति विशेषः । प्रातिस्विकरूपेण संस्कृतशब्दान् परिगणयितुं देवेन्द्रोऽपि न पारयामास । तदुक्तं भाष्यकारेण - *'एवं हि श्रूयते - बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, नान्तं जगाम । बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालः । न चान्तं जगाम, किं पुनरद्यत्वे ?'* इति ।

अनन्ताः शब्दाः इत्यत्र दिङ्मात्रम् इदानीमिदं प्रदर्श्यते । प्रायः सहस्रद्वय-संख्याकाः धातवः पाणिनीये पठिताः । ते च दशसु गणेषु विभक्ताः । एकैकस्य गणस्य विकरणप्रत्ययः तन्निमित्तकं कार्यञ्च भिद्यते । कालम् अर्थञ्च आश्रित्य एकस्मात् धातोः दश लकाराः उत्पद्यन्ते । वैदिकेन लेटा सह एकादश भेदा लकारेषु । एकस्य लकारस्य पुरुषवचनभेदेन अष्टादश प्रत्ययाः आदिश्यन्ते इति एकस्मिन् लकारे अष्टादश रूपाणि निष्पद्यन्ते । दशभिः लकारैः गुणिते एकेन धातुना १८० रूपाणि तावत् उत्पादितानि भवन्ति । तत्रापि परस्मैपदम्, आत्मनेपदम्, उभयपदम् इति भेदाः । ततश्च सेट्, अनिट्, विभाषितेट् इति त्रेधा भेदः । प्रत्ययानां धातूनाञ्च बहुधा विकाराः, यतश्च कर्तरि, कर्मणि, भावे च प्रयोगे रूपभेदाः । नैतावत् । सर्वाण्यपि रूपाणि णिच्-सन्-यङ्-यङ्लुक्षु प्रत्येकं गुणितानि भवन्ति । सर्वप्रातिपदिकेभ्यश्च आचाराद्यर्थे क्विपि, क्यचि, क्यषि चापरे सुब्धातवः सम्पद्यन्ते । भूयस्तेभ्यो लकाराः इत्येतानि क्रियापदरूपाणि सम्भवन्ति । एवं धातोः उत्पद्यमानाः कृत्प्रत्ययाः प्रातिपदिकेभ्यो विभिन्नार्थेषु विहिताः तद्धितप्रत्ययाः च बहवः

सन्ति । तथा सन्धि-समास-स्त्रीप्रत्ययादिभिः सम्भवतां विकाराणां गणने संस्कृतशब्दराशिः गणयितुम् इन्द्रेणापि अशक्यः एव इत्यहो भाषायाः विशालता गम्भीरता च ।

एतादृशस्य अतिमहतः शब्दराशेः कात्स्न्येन व्याकरणसूत्रैः व्यवस्थापनं मनुष्यमात्रस्य दुःशकम्, विना तपोबलम् । अत एव व्याकरणसूत्रकारः पाणिनिः आचार्यः मुनिः इति आख्यायते अस्माभिः । स खलु अष्टाध्यायीं चतुःसहस्त्रसूत्रात्मिकां महता यत्नेन निबबन्ध । आह च महाभाष्यकारः पतञ्जलिः – *'दर्भपवित्रपाणिराचार्यः प्राङ्मुख उपविश्य महता यत्नेन सूत्राणि प्रणयति स्म'* इति । काशिकाकारो जयादित्यश्च पाणिनेः प्रज्ञातिशयं प्रशंसन्नाह – 'महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य' इति । इदञ्च पाणिनीयं व्याकरणशास्त्रं कात्यायनपतञ्जलिभ्यां वार्तिककारभाष्यकाराभ्यां बहुधा परीक्ष्य शोधितं पोषितं वर्धितञ्च । ततश्च भर्तृहरिकैयटभट्टोजिनागेशादिभिः महावैयाकरणैः तर्ककर्कश-युक्तिभिः विचार्य विचार्य शब्दशास्त्रं विस्तारितम् । ईदृशविचारलेशोऽपि नान्यभाषाव्याकरणे इति सुधियो विभावयन्तु । अत एव –

**पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।**
**सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन ।।**

इत्यभियुक्तोक्तिः । अद्यापि सन्ति पुरुषायुषं नियोज्य पाणिनीयम् अधीयानाः भारतदेशे । साधु किल उक्तम् आनन्दवर्धनेन – 'प्रथमे हि विद्वांसो वैयाकरणाः' इति ।

किञ्च अर्थपुरस्कारेण शब्दानां निर्वचनमिति प्रसिद्धमेतत् । विना ह्यर्थं न कोऽपि शब्दः साधुरसाधुर्वा । यथा – अस्वशब्दो निर्धने साधुः अश्वे तु असाधुः । एवं सर्वत्र । अर्थं पुरस्कृत्य प्रत्ययाः विधीयन्ते । 'चैत्रेण पच्यते' इति वाक्यं साधु, 'चैत्रं पच्यते' इति असाधु । तत्र कः प्रकृत्यर्थः ? कश्च प्रत्ययार्थः ? वाक्ये पदार्थद्वयस्य कः सम्बन्धः ? कथम् अन्वयः तयोः ? कश्च वाक्यार्थः ? कथं शाब्दबोधः ? शब्दस्य अर्थबोधने का शक्तिः ? तत्स्वरूपञ्च कीदृशम् ? शाब्दबोधोपयोगिन्यः सामग्र्यश्च काः ? इत्येतत्सर्वं व्याकरणशास्त्रस्य विषयः । तदेतत्सर्वं संस्कृतव्याकरणशास्त्रे समीचीनतया परीक्षितम् । 'दशरथस्य पुत्रः' इत्यत्र जन्यजनकभावः षष्ठ्यर्थः । 'वृक्षस्य

शाखा' इत्यत्र अवयवावयविभावः । 'चैत्रस्य गृहम्' इत्यत्र स्वस्वामिभावः इत्येवंप्रकारेण एकशतं षष्ठ्यर्थाः इति भाष्यकारः । 'धातोः अर्थद्वयम् - फलं व्यापारश्च । तत्र फलं कर्मनिष्ठं, व्यापारः कर्तृनिष्ठः । 'चैत्रो ग्रामं गच्छति' इति वाक्ये तिङ्प्रत्ययार्थः कर्ता । प्रथमान्तस्य अभेदेन तिङर्थे कर्तरि अन्वयः । धातोः संयोगानुकूलव्यापारः अर्थः । संयोगः फलम् । तस्य कर्मणि ग्रामे अन्वयः । तथा च - 'चैत्राभिन्नकर्तृनिष्ठः ग्रामनिष्ठ-संयोगानुकूलो व्यापारः इति शाब्दबोधः' इत्येतादृशी विचारपरम्परा समुद्र-वीचिरिव उल्लसति । किम् एतादृशविमर्शनपरिपाटी क्वापि अन्यस्मिन् लोकभाषा-व्याकरणे दृष्टा श्रुता वा ?

किञ्चान्यत् । व्याकरणशास्त्रमिदं वेदाङ्गत्वेन दर्शनत्वेन च प्रथितम् । 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इति व्याकरणस्य वेदाङ्गत्वे प्रयोजनानि दर्शितानि । सर्वदर्शनसङ्ग्रहे 'पाणिनीयदर्शनं' सायणाचार्यैः समासेन निरूपितम् । विस्तरेण तु भगवान् भर्तृहरिः स्वकीये वाक्यपदीये प्रत्यपादयत् । 'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति' इति सिद्धान्तवचनम् । व्याकरण-शास्त्रं परमपुरुषार्थसाधनतया अध्येतव्यमिति निर्णयो दर्शितः । अत्र तु विस्तरभयात् अस्माभिः तद्विवरणाय आत्मा न व्यापार्यते ।

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ।।**

इति वाक्यपदीयवचनं केवलम् उदाहरामः । एवञ्च -

**विशालत्वाद् गभीरत्वात्तलस्पर्शिविमर्शनात् ।**
**दर्शनत्वाच्च गैर्वाण्याः शब्दशास्त्रं प्रशस्यते ।।**

इति संक्षेपः ।।

★ ★ ★

# १. संस्कृतं नाम दैवी वाक्

**सम्प्रदायविदो नत्वा गुरून् शब्दार्थपारगान् ।**
**देववाण्या अपूर्वोऽयमलङ्कारो विधीयते ।।**

भाषा नाम मनुष्यस्य अयाचितम् अनर्घं धनम् । मातुः उत्सङ्गे एव शिशुः अयत्नेन भाषाम् अभ्यसितुम् आरभते । सर्वोऽपि लौकिको वैदिकश्च व्यवहारो विना भाषां दुष्करः इति स्फुटम् । 'ज्ञानेन हीनः पशुभिः समानः' इत्युक्त्या पशुमानवयोः व्यवच्छेदकं यज्ज्ञानं सङ्कीर्तितं तत् भाषाधीनम् एव । व्यक्त-वर्णोच्चारणात्मिकया वाचा सम्पद्यमाना वर्धमाना च या पौरुषेयी धीशक्तिः, सेयं मनुष्याणां परमेश्वरेण कारुण्यकल्पितं वरम् ।[१]

यदि व्यक्तवर्णोच्चारणेषु पशुरिव मानवोऽपि असमर्थः अभविष्यत् तर्हि इदं जगत् कीदृशं समपत्स्यत इति मनसा विभावनीयम् । आह च दण्डी काव्यादर्शे -

**इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ।।**

प्रथमं भाषा, ततो लिपिः, ततः सामान्यग्रन्थरचना, शास्त्रकाव्यसमुत्पत्तिः, संस्कृतिश्चेति क्रमः । शास्त्रादीनांश्च विकसनावसरे भाषागतशब्देषु वाक्य-रचनाक्रमेषु च नैकविधाः परिणामाः शक्त्योत्प्रेक्षाः दुरपह्नवाश्च इति सम्मतमेव विदुषाम् ।

भाषा तावत् कथं प्रथमम् आविर्बभूव ? कथं वा जनाः एकपदे एव

---

१. इष्टवाची वरशब्दोऽत्र क्लीबे । 'मनागिष्टं वरं क्लीबम्' इति मेदिनी । 'वरं विरोधोऽपि समं महात्मभिः' - (किरा.१.८)

विविधानि नामपदानि क्रियापदानि अव्ययानि च नानार्थगोचराणि प्रयोक्तुं समर्थयन्ते ? इति शङ्का तु जीवत्येव । इह हि लोके सन्ति बहुस्वरूपाः असङ्ख्याताः भाषाः, यासां परिगणना अपि दुष्करा । आधुनिकभाषाशास्त्रविदः तु निखिलभाषासमुदायं चतुर्धा पञ्चधा वा विभज्य तदुत्पत्तौ नानाप्रकारान् वादान् पुरस्कुर्वन्ति । तत्र भाषाणां वर्गीकरणक्रमः, वर्णव्यत्ययनियमः, शब्दार्थयोः परिवर्तनविधिः इत्यादयो बहवो विषयाः समूहिताः भाषाशास्त्रविदां महद्वैदुष्यम्, असाधारणं शब्दार्थकौशलञ्च प्रकटयन्तीति सत्यम् । परन्तु कथं नाम भाषायाः प्राथमिकः समुत्पादः इत्यत्र समस्ति विप्रतिपत्तिः अस्माकम् ।

अमी खलु भाषाशास्त्रिणो विपश्चितः कांश्चन शब्दार्थपरिवृत्तिनियमान् विरचय्य, संस्कृतभाषायाः अपि काचन मूलभाषा बभूव इति तर्कयन्ते । तस्याश्च 'इण्डोयूरोपियन्' इति नामकरणं विधाय स्वशास्त्रं प्रवर्तयन्ति । सिद्धे च मूलभाषायाः अस्तित्वे शब्दार्थपरिवृत्तिनियमाः युज्यन्तेतराम् । लक्ष्यं दृष्ट्वा लक्षणप्रणयनं लोके दृष्टम् । न हि लक्षणं कृत्वा लक्ष्यं गवेष्यते । पथि हस्तिपदानि समीक्ष्य मार्गेणानेन कोऽपि हस्ती यातः इति शक्यते तर्कयितुम् । इह तु स्वयमेव हस्तिपदानि रेखया चित्रयित्वा हस्तिगमनम् उत्प्रेक्ष्यते इति विलक्षणः तर्कस्य पन्थाः । किञ्च अस्मिन् विषये भाषापण्डितैः प्रदर्शिताः अनुमानहेतवः सर्वेऽपि आभासयितुं शक्यन्ते इति न किञ्चिदेतत् । कथं नाम सा मूलभाषा विनष्टा सर्वात्मना, कर्पूरदाहं दग्धा यस्याः भस्मलेशोऽपि नोपलभ्यते? केन वा निमित्तेन ? सेयं मानसी मूलभाषा पालिभाषा इव ग्रन्थमात्रेणापि नावशिष्यते । यदि च तदानीन्तनं लिपेः अभावं तत्र कारणं ब्रूषे, वेदः इव श्रौतोऽपि किञ्चित् तर्हि लभ्येत, न च लभ्यते ।

इमे च भाषाशास्त्रिणः पाश्चात्त्याः पण्डिताः तदनुसारिणश्च पौरस्त्याः, डार्विन्महाशयेन कल्पितं विकासवादम् उररीकृत्य, विकासवादं च सिद्धान्तपक्षे स्थापयित्वा, भाषाशास्त्रीयमपि विचारं प्रवर्तयन्ते, ग्रन्थजालञ्च विस्तृतं वयन्ति । न च विकासवादे भवति अस्माकम् अभ्यसूया । न हि गुणेषु दोषाविष्करणं शोभते कस्यापि । संस्कृतभाषाम् अधिकृत्य तु प्रवृत्ताः पल्लविताश्च तेषाम् अभिप्रायाः न क्षोदक्षमाः, न च प्रमाणपदवीम् आरोढुम् अलम् इति भवति अस्मदीयं मतम् । तथाहि - संस्कृतं हि नः प्रकृतम् । यस्य कृतः संस्कारः तदुच्यते संस्कृतमिति । उक्तञ्च आदिकविना -

**संस्कारक्रमसम्पन्नामद्रुतामविलम्बिताम् ।**
**उच्चारयति कल्याणीं वाचं हृदयहारिणीम् ।।**

- किष्किन्धा. - 3 - 32

हनूमतो वाचम् आलक्ष्य श्रीरामचन्द्रस्य सूक्तिरियम् ।

**यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।**
**रावणं मन्यमाना सा सीता भीता भविष्यति ।।**

- सुन्दर. - 30 - 17

सीतां प्रति कया भाषया वदिष्यामि इति हनूमतः स्वयं वितर्कः । एवञ्च संस्कारक्रमसम्पन्नत्वात् संस्कृतमिति व्यवहारः इति स्पष्टम् ।

कस्य पुनः संस्कारः ? का च मूलप्रकृतिः, यस्याः संस्कारः क्रियते ? कश्च संस्कर्ता ? इत्यादि विचारणीयम् । वैदिकी भाषा मूलप्रकृतिरिति ब्रूमः । तथाहि -

तत्रभवान् महाभाष्यकारः पतञ्जलिः ग्रन्थारम्भे 'अथ शब्दानुशासनम्' इति प्रकृत्य 'केषां शब्दानाम् ? लौकिकानां वैदिकानाञ्च । तत्र लौकिकाः तावत् - गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इति । वैदिकाः खल्वपि शन्नो देवीरभिष्टये । इषे त्वोर्जे त्वा । अग्निमीळे पुरोहितम् । अग्न आयाहि वीतय इति' इत्याह । शब्दानां लौकिकत्वेन वैदिकत्वेन च द्वेधा विभागः कृतो महाभाष्यकारेण । तत्र लोके विदिताः भवाः वा लौकिकाः । वेदे विदिताः भवाः वा वैदिकाः इति व्युत्पत्तिप्रदर्शनेन अनयोः विभाजकोपाधिः स्पष्टीकृतः कैयटेन । परन्तु ये खलु गौरश्वः पुरुषो हस्ती इत्यादयो लौकिकत्वेन सम्मताः ते वेदेऽपि दृश्यन्ते । वैदिकत्वेन उदाहृतेष्वपि 'नः, त्वा, अग्निं, पुरोहितम्, आयाहि' इत्येते लोकेऽपि कामं प्रयुज्यन्ते । एवम् उभयेषां साङ्कर्यं प्राप्तमिति चेत्, अत्राह कैयटः - 'वैदिकानां लौकिकत्वेऽपि प्राधान्यख्यापनाय पृथगुपादानम् । यथा ब्राह्मणाः आयाता वसिष्ठोऽप्यायात इति वसिष्ठस्य । तेषान्तु प्राधान्यं यत्नेनापभ्रंशपरिहारात् । अथवा भाषाशब्दानामेव लौकिकत्वम् इति भेदेन निर्देशः' इति । तदिदं पुनर्विवृतं प्रदीपोद्योते - 'भाषा प्रयोज्यप्रयोजक-वृद्धव्यवहारः । तत्र प्रयुज्यमानाः भाषाशब्दाः । एवञ्च वेदमात्रान्तर्गत-'कर्णेभिर्देवासोगृभ्णामि'इत्याद्यतिरिक्तपरता लौकिकशब्दस्य, तैः तद्व्यवहार-

दर्शनात् । अत एव गौरश्व इत्यादीनां लौकिकोदाहरणत्वसङ्गतिः । लोके स्वरानादरात् वेदे तदादराच्च स्वरविशिष्टानां वेदमात्रविषयताम् अभिप्रेत्य 'शं नः' इत्यादीनां वैदिकोदाहरणत्वसङ्गतिः' इति । वेदमात्रप्रयुक्ताः विशिष्ट-स्वरूपाः उदात्तादिस्वरसहिताः शब्दाः वैदिकाः । वेदप्रयुक्ताः अपि उदात्तादि-स्वरानादरेण लोके प्रयुज्यमानाः वेदेषु अदृष्टाः अपि शिष्टव्यवहारगोचराश्च शब्दाः लौकिकाः इति मथितार्थः । ननु गावी, गोणीत्यादयः अपभ्रंशाः अपि लोके विदिताः इति तेषामपि व्याकरणशास्त्रे अनुशासनप्रसङ्गः इति चेत्, अत्राह पदमञ्जरीकारो हरदत्तः - 'नैते सर्वलोकविदिताः । प्रतिदेशं भिन्नत्वात् अपशब्दानाम् । लोकशब्दश्चायं सर्वलोके वर्तते । सङ्कोचे प्रमाणाभावात्' इति ।

अत्र इदमवधेयम् । भाषणात् भाषा इति संज्ञा । 'भाष' (व्यक्तायां वाचि) इति धातोः 'गुरोश्च हलः' इति 'अ'प्रत्ययः । व्यक्ता च वाक् वर्णात्मिकैव । भाषा नाम प्रकृते, लोके प्रयोज्यप्रयोजकवृद्धैः आश्रीयमाणः साधुशब्दात्मको व्यवहारः । स एव च 'भाषायां सदवसश्रुवः' इत्यादौ भाषाशब्देन विवक्षितः पाणिनेराचार्यस्य । वेदस्तु मन्त्रद्रष्टृऋषिमात्रव्यवहारगोचरः इति तद्भाषा वैदिकी, न तु लौकिकी । वेदगोचरः शब्दस्तु 'छन्दसि, निगमे' इत्यादिशब्दैः विभागेन अनुशिष्यते पाणिनिना । यत्र तु 'भाषायां, छन्दसि' इत्यादिविभाजकशब्दो न उपदिश्यते तत्र उभयेषामपि अनुशासनविषयता । साधुशब्दत्वात् तेषाम् । प्राकृतभाषा, कन्नडभाषा, आङ्ग्लभाषा इत्यादौ भाषाशब्दस्तु शास्त्रदृष्ट्या गौणः एवेति ।

तत्र वैदिकशब्दाः नैकस्वरूपाः अत्यन्तदुरवगाहाः भवन्ति । ऋचि, यजुषि, साम्नि, मन्त्रब्राह्मणयोः सन्धिकार्याणि क्वचिद्विशिष्यन्ते । शब्दास्तत्र निरङ्कुशाः इव प्रवृत्ताः 'इदमित्थम्' इति व्यवस्थापयितुं दुःशकाः । लौकिकशब्दानुशासन-प्रसङ्गे अप्रतिहता कूलङ्कषा स्वैरगतिरपि पाणिनेः आचार्यस्य मतिः वैदिक-शब्दविषये कुण्ठिता इव संलक्ष्यते । यदयं 'बहुलं छन्दसि' इति सूत्रं द्वादशकृत्वः प्रणिनाय । 'विभाषा छन्दसि', 'व्यत्ययो बहुलम्' इत्येवञ्जातीयकानि सूत्राणि विपुलानि अष्टाध्याय्याम् उपलभ्यन्ते । ततः परम् उदात्तानुदात्तादिस्वरविधौ सिंहगतेः अपि आचार्यस्य सूत्रेषु विद्वांसोऽपि मुह्यन्ति । एवं छन्दसि

दृष्टानुविधिरिति पर्यवसानं भवत्याञ्जसम् । यदुक्तम् -

**सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।**
**व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन ।।** इति ।

एवं शाखाचङ्क्रमणेन वैदिकशब्दानां दुरवगाहत्वप्रतिपादनं किमर्थमिति चेत्, इदमर्थम् । एतादृशशब्दैः लोकव्यवहारो दुःसम्पादो मानुषाणां सर्वथा सर्वत्र सर्वकालेषु । तस्माद्यत्नः कर्तव्यः भाषायाम् । कोऽसौ ? वेदेभ्यः शब्दानां पृथक्करणम् । कृतश्च पृथक्करणं शब्दानां, यान् इमे लोकाः उपयुञ्जते व्यवहारकालेषु । ते इमे शब्दाः लौकिकाः गीयन्ते । पृथक्करणञ्च अपोद्धारदृशा इति मन्तव्यम् ।

स्वाभिप्रायप्रकटनार्थं ये शब्दाः भाषायाम् आवश्यकाः जनानां, येषाञ्च रूपाणि प्रायेण सदृशानि व्यवस्थापयितुं शक्यन्ते, ते शब्दाः वेदेभ्यः एव भाषायाम् अवतीर्णाः । ये खलु शब्दाः दैनन्दिनं व्यवहारपथम् अवतरन्ति तेषाम् अपभ्रंशनं स्वाभाविकम् । स्वभावो हि मनुष्याणां यत् साधुत्वानवधारणेन म्लेच्छनम् । अविद्यावद्विषयत्वात् व्यवहारस्य । पांसुलपादैरपि भाषायाः उपयुज्यमानत्वात् । तच्च म्लेच्छनं प्रायेण साधुत्वानवधारणात्, आलस्यात्, करणापाटवाद्, अनादराच्च सम्भवति । तदिदम् अपभ्रंशनम् असहमानैः साधुशब्दानाम् अभ्यर्हितत्वं मन्यमानैः परमर्षिभिः प्रकृतिप्रत्ययादिव्युत्पादनपूर्वकं शब्दस्वरूपसंरक्षणार्थं शब्दानुशासनं कृतम् । तस्य च 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इति भाष्योक्तदिशा अन्यानि अपि प्रयोजनानि भवन्त्येव, यद्विवरणं प्रकृते नातीवोपयुज्यते । व्याकरणशास्त्रेण शब्दानां व्याकृतिः कृता साधुशब्द-संरक्षणार्थं लोके । केवलवैदिकशब्देभ्यः पृथक्करणपूर्विका व्याकृतिः संस्कारः । संस्क्रियते इति संस्कृतम् । संस्कारवती च संस्कृतभाषा । वेदः प्रकृतिः, व्याकृतिः संस्कारः, व्याकरणशास्त्रकर्ता संस्कर्ता इति सर्वं सुस्थम् । ऋषिश्च वेदयते (ऋक्-मं -१०-७१-२) -

**सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।**
**अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि ।।** इति ।

अस्य अर्थम् आहुः प्रदीपोद्योते नागेशभट्टाः - 'ये यत्र व्याकरणे धीरा ध्यानवन्तः सन्तस्तितउना सक्तुमिव ध्यानयुक्तमनसा तत्करणकज्ञानेन वाचमक्रत

अकृषत असाधुभ्यो विविक्तां कृतवन्तस्ते तत्करणेन शुद्धचित्ता अत्र ब्रह्म-प्रतिपादकशब्दे शब्दार्थयोरभेदबुद्ध्या सखायः समानख्यातयः समानज्ञानाः । तच्छब्दे ब्रह्मैकत्वज्ञानवन्तस्तेनैव दृष्टान्तेन सर्वपदार्थेषु ब्रह्मनिरूपिताभेदज्ञानवन्तः सख्यानि सायुज्यानि जानते प्राप्नुवन्तीत्यर्थः । यत एषां वाचि भद्रा लक्ष्मीः स्वप्रकाशब्रह्मरूपा अपि अधिकं निहिता स्थिता भवतीति ऋगर्थः' इति ।

तैत्तिरीयसंहितायां 'वाग्वै पराच्यव्याकृतावदत् । ते देवा इन्द्रमब्रुवन् । इमां नो वाचं व्याकुर्विति । ........तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्' (६.४.७) अत्र 'तामखण्डां वाचं मध्ये विच्छिद्य प्रकृतिप्रत्ययविभागं कृतवान्' इति सायणभाष्यम् । एवं 'चत्वारि शृङ्गा त्रयोऽस्य पादाः' 'चत्वारि वाक्परिमिता पदानि' इत्यादि ऋगन्तरेषु, 'ओंकारं पृच्छामः, को धातुः, किं प्रातिपदिकम्, किं नामाख्यातम्' इत्यादिगोपथब्राह्मणे (पू १ - ३०) अन्यत्र च व्याकरण-प्रस्तुतिः द्रष्टव्या । शब्दानुशासनेन वैदिकशब्दोऽपि संस्कृतः इति वैदिकी संस्कृतभाषा इति व्यवहारोऽपि आञ्जसः एव । 'प्रथमायाश्च द्विवचने भाषायाम्' इत्यादिना भाषायामेव केषाञ्चिद्रूपाणां व्युत्पादनन्तु उपलभ्यमानवेदेषु तेषाम् अदर्शनम् इत्येतत्तात्पर्यकम् । अनुपलभ्यमानवेदेषु तत्पाठस्य दुरपह्नवत्वात् । 'अनन्ता वै वेदाः' इति हि श्रूयते । छन्दसि विहितं कार्यन्तु छान्दसानामेव इति व्यवस्था ।

ननु भाषायां त्रैस्वर्येण शब्दोच्चारणं न दृश्यते । उदात्तानुदात्तस्वरितानां सर्वथा परित्यागः कृतो लौकिकशब्देषु । तथा च एतेषाम् अपशब्दत्वं प्राप्तम् । नहि स्वरविधौ 'छन्दसि' इत्यधिकृतमिति चेन्न । एकश्रुतेरपि विधानात् । तथाहि - 'विभाषा छन्दसि' (१.२.३६) इति पाणिनीयं सूत्रम् । तदनन्तरपूर्वमेव 'उच्चैस्तरां वा वषट्कारः' इति पठितम् । तत एव वाग्रहणानुवृत्तिसम्भवे सूत्रेऽस्मिन् विभाषाग्रहणं किमर्थम् ? अन्यार्थम् । सूत्रम् आवर्तते । आवृत्ते च सूत्रे 'विभाषा अच्छन्दसि' इति पदच्छेदः । एकश्रुतिरित्यनुवर्तते । अच्छन्दसि - भाषायां सर्वत्र विभाषया एकश्रुतिः भवतीति सूत्रार्थः । स्वराणाम् उदात्तादीनाम् अविभागेन अवस्थानम् एकश्रुतिः । स्वराविवेकेन उच्चारणमिति यावत् । त्रैस्वर्यप्रत्यवसायः एकश्रुतिरिति कैयटाशयः । प्रत्यवसायस्त्यागः । 'एकश्रुतिः स्वरसर्वनाम' इति दाण्डिनायनेतिसूत्रे भाष्यकृतः । सर्वेषां नाम सर्वनाम ।

यथा सर्वनामशब्दाः तदादयः सर्वेषां पदानां स्थाने प्रयुज्यन्ते, सर्वार्थबोधकाश्च भवन्ति, एवं सर्वस्वरस्थाने एकश्रुतिः प्रयोक्तव्या इति भाष्यार्थः । सर्वनामशब्दः अत्र भाष्ये तत्सदृशे वर्तते । यथा सर्वनाम्नः सर्वपदार्थपरामर्शार्थं प्रयोगः तथा अस्याः एकश्रुतेरपि सर्वस्वरस्थाने प्रयोगः इति तात्पर्यम् । अनेन त्रैस्वर्यस्य एकश्रुतेश्च ऐच्छिकविकल्पविषयत्वं स्पष्टम् । लौकिकशब्देषु उदात्तादिस्वरस्य अविवक्षया एव पस्पशान्ते भाष्ये 'वाक्यानि द्विष्ठानि भवन्ति । श्वेतो धावति, अलम्बुसानां याता' इत्युक्तम् । तत्र 'कः कीदृशो धावति' इति प्रश्ने 'श्वेतः' इत्युत्तरम् । 'श्वा इति' इति च्छेदेन 'कः ?' इत्यस्य उत्तरम् । 'श्वेतः' इति च्छेदेन 'कीदृशः ?' इत्यस्य उत्तरम् । एवं 'केषां जनपदानां गन्ता', 'को वा समर्थः' इति प्रश्नस्य उत्तरम् 'अलम्बुसानाम्' इति । अलम्बुसाः देशविशेषाः । 'अलम्बुसानां याता गन्ता', 'बुसानां सम्पदा पलालानां वा याता प्राप्तिमान् अलं समर्थः' इति च अर्थः । अत्र हि पदभेदेन स्वरभेदे कथं नाम द्व्यर्थकमेकं वाक्यं भवेत् ? तस्मात् अत्र एकश्रुतिरेव आश्रिता । अत एव महाकवीनां वाक्येषु विरुद्धस्वरकतत्पुरुषबहुव्रीहिसमासाद्याश्रयणेन श्लेषप्रयोगः सङ्गच्छते । यथा –

**अहश्च त्वं च राजेन्द्र लोकनाथावुभावपि ।**<br>
**बहुव्रीहिरहं राजन् षष्ठीतत्पुरुषो भवान् ।।**

किं बहुना ? 'छन्दस्यपि ऐच्छिकमैकश्रुत्यमाह वृत्तिकारः । अद्यापि केचिद् ऐकश्रुत्येन वेदमधीयते शिष्टाः । 'त्रैस्वर्येणैव वेदोऽध्येतव्य इति श्रद्धाजाड्येनेति' शेखरकृतः । विस्तरस्तु प्रकरणेऽस्मिन् लघुशब्देन्दुशेखरे प्रदीपोद्योतयोश्च द्रष्टव्यः । एवञ्च स्वरराहित्येन लौकिकशब्दानां प्रयोगो न दोषाय । न च एतेषाम् अपशब्दत्वम् इति सिद्धम् ।

अत्र इदमवधेयम् । त्रयः स्वराः इति वाचोयुक्तिः प्राधान्येन । अन्तर्गतभेदास्तु बहवः । उदात्तः, उदात्ततरः, अनुदात्तः, अनुदात्ततरः, स्वरितः, स्वरिते यः पूर्वांशः उदात्तः सोऽनुदात्तेनोपस्कृतश्च इति । ततश्च स्वरितस्य जात्यः, अभिनिहितः, क्षैप्रः, प्रश्लिष्टः इत्यादयः अष्टौ भेदाः । एतेषाम् उच्चारणविधिः गुरूपदेशम् अन्तरा नैव शक्यते विज्ञातुम् । उत्सर्गापवादजटिला च स्वर-प्रक्रिया । अनधीतव्याकरणशास्त्राणाम् अनालोडितप्रातिशाख्यानाञ्च दुरधिगमः

स्वरसञ्चारक्रमः । प्रत्ययसमासादिभेदाच्च भिद्यते स्वरः । अपि च विभिन्न-स्वरादिकेषु शब्देषु परेषु पूर्वपदस्य अन्यः स्वरः आदिश्यते । न च नियता लोकेषु शब्दानुपूर्वी वाक्यानाम् । प्रतिपुरुषं प्रतिवाक्यञ्च शब्दानुपूर्व्याः भेदात् । एवं स्थिते कथङ्कारं त्रैस्वर्येण लोके भाषायां शब्दव्यवहारः सम्भवेत्, यत्र विपश्चिदपश्चिमोऽपि मुह्यति ? वेदे तु नियता पदानुपूर्वी । नियतश्च स्वरविन्यासः । सम्प्रदायेन समधीतवेदो गुरुः तथैव त्रैस्वर्येण शिष्यं वेदम् अध्यापयति इति न चित्रम् । किञ्च यमादयः अन्ये अपि वर्णाः वेदेषु विद्यन्ते । तस्माद् भाषायां स्वरविधिः क्रमेण क्षीणताम् आपद्य परित्यक्तः इति निश्चीयते । आश्रितश्च ऐकश्रुत्यम् । न च एतेन संस्कृतशब्दानाम् अपभ्रंशत्वम् इति प्रतिपादितम् अधस्तात् । इदञ्च स्वरविधानं संस्कृतजन्यासु ग्रीक्-जर्मन्प्रभृतिषु भाषासु कञ्चित्कालम् अन्ववर्तत इति भाषाशास्त्रविदः ।

अत्रैते श्लोका भवन्ति –

**वैदिका लौकिकाश्चेति शब्दभेदो गुणाश्रयः ।**
**संस्काराद्वैदिकाः शब्दाः भाषायां लौकिकाः स्मृताः ।। १ ।।**
**वेदाम्बुधेः समुद्धारं संस्कारं परिचक्षते ।**
**संस्कारः शब्दशास्त्रेण, नृणां स क्लेशहानये ।। २ ।।**
**त्रैस्वर्यञ्च परित्यक्तं भाषायां तदसम्भवात् ।**
**ऐकश्रुत्येन वैधेन व्यवहारो न दुष्यति ।। ३ ।।**

एवञ्च वेदमात्रप्रसिद्धाः 'कर्णेभिः, देवासः, गृभ्णामि' इत्यादयो वैदिकाः शब्दाः, प्रयोज्यप्रयोजकवृद्धव्यवहाररूपभाषायां प्रसिद्धाः लौकिकाः इति विभागः । सर्वदा सर्वलोकेषु चैकरूप्येण शिष्टैः प्रयुज्यमानाः शास्त्रविषयाः शब्दाः संस्कृतशब्दाः । तेन अपभ्रंशानां तत्तद्देशीयशब्दानाञ्च व्यावृत्तिः ।

सेयं संस्कृतभाषा अनादिः नित्या देववाणी सर्वदेशभाषाणां मूलभूता इति विज्ञेयम् । तथाहि – अनादिरयं संसारः इति सर्वे दार्शनिकाः आस्तिकाः नास्तिकाश्च प्रतिपन्नाः । डार्विन्महोदयोपज्ञे विकासवादेऽपि जगतः अनादित्वं नैव शक्यम् अपह्नोतुम् । कतिपयकोटिभ्यो वर्षेभ्यः प्राक् जगदिदम् उत्पन्नमिति पक्षेऽपि जगदुत्पत्तेः प्राक् किं कथमासीदिति प्रश्नो निर्बाधः तिष्ठत्येव, कालस्य अनादित्वात् नित्यत्वाच्च । सृष्टेः प्राक्कालोऽपि नासीदिति कालस्य प्रागभावं

कोऽपि मतिमान् नाङ्गीकुर्यात् । कालपरिच्छेदकक्रियाश्रयो द्रव्यं नासीदिति यदि ब्रूषे, तर्हि शून्यात् पदार्थोत्पत्तिः प्रसज्येत । शून्यात् पदार्थोत्पत्तिस्तु न कस्यापि सम्मता । वस्ततस्तु विकासवादोऽपि वैदिकानाम् अंशेन सम्मतः एव । तैत्तिरीयोपनिषदि 'आत्मन आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात्पुरुषः' इति हि श्रूयते । 'अन्नात्कपिः, कपेः पुरुषः' इति तु न श्रुतम् । अतो हेतोः अंशेन इत्युक्तम् ।

यथा तथा वा अस्तु । संस्कृतभाषा तावत् अपौरुषेयी देववाणी सर्वभाषामूलम् इति इदानीं प्रतिपिपादयिषितम् । वेदानाम् अपौरुषेयत्वे सर्वमिदं स्वतः सिद्ध्यति । वेदाः अपौरुषेयाः इति सर्वेषाम् आस्तिकदर्शनानां निर्णयः । तेषाञ्च नित्यता कूटस्थनित्यता वा अस्तु, ईश्वरनिर्मितत्वेन विश्वस्येव परम्परानित्यता वा अस्तु, नास्माकं हानिः । पौरुषेयाः वेदाः इति वादिनो नैयायिकाः अपि ईश्वरप्रणीतत्वम् अङ्गीकुर्वन्ति वेदानां, न तु अस्मत्सदृशपुरुषनिर्मितत्वम् । तेषां मते पौरुषेयः इत्यत्र पुरुषशब्देन ईश्वरो गृह्यते । अस्मात् पदार्थात् अयमर्थो बोद्धव्यः इति ईश्वरसङ्केतः शक्तिः इति तेषां मतम् । सङ्केतविषयाः सर्वे संस्कृतशब्दाः ईश्वरबोधिताः इति तेषाम् अनादित्वं सिद्धम् । अपभ्रंशेषु तैः ईश्वरसङ्केतः न अङ्गीक्रियते इत्यपि स्मर्तव्यम् । एवञ्च सर्वेषां मते वेदानां समस्तलौकिक-भाषोत्पत्तेः पूर्वम् अवस्थितिः निर्बाधा । अस्मदादिपुरुषकर्तृकत्वञ्च वेदानां न शक्यते कल्पयितुम् । अत्र इमे हेतवः परिशीलनीयाः विद्वद्भिः –

१. वेदे जगत्यादिच्छन्दांसि सन्ति इति न अविदितम् । छन्दांसि च नियत-लक्षणानि वर्णैर्घटितानि । इमानि छन्दांसि प्रथमं केन दृष्टानि ? कं वा ग्रन्थम् अवलोक्य छन्दांसि अनुकृतानि ? न हि वेदात् प्राचीनः कोऽपि ग्रन्थः अस्माभिः प्राप्तः ।

२. लोके व्यावहारिकभाषायां प्रयुज्यमानाः एव शब्दाः ग्रन्थेषु प्रयुज्यन्ते । वैदिकाः शब्दास्तु नैव लोके दृष्टाः । कथमेते संस्कृतभाषायाम् अदृष्टाः शब्दाः वेदेषु उपनिबद्धाः इति चिन्तनीयम् । न केवलमेतत् । कौत्सादिभिः प्राचीनमहर्षिभिः अपि अविज्ञातार्थकाः शब्दाः वेदेषु विद्यन्ते । यास्कादिभिस्तु तेषां क्लिष्टानां शब्दानाम् अर्थो विवृतः इत्यन्यत् । यथा –

**सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरीपर्फरीका ।**
**उदन्यजेव जेमना मदेरू तामे जराप्वजरं मरायू ।।**

(- ऋक्सं/८-६-२)

इदं काश्यपस्य आर्षं त्रैष्टुभम् अश्विदैवत्यम् । अत्र जर्भरीत्यादीनाम् अर्थो दुरूहः आसीत् कौत्सादीनामपि इति यास्कनिरुक्तात् महाभाष्याच्च विज्ञायते । किञ्च वेदे 'शुनासीरा'शब्दस्य कोऽर्थः ? शुनो वायुः, सीरा सूर्यः इति बृहद्देवताकारः शौनकः । शुनासीरा इन्द्रः इति यास्कः । शुनः सूर्यः, सीरा इन्द्रः इति शाकपूणिः । एवं वेदविदुषामेव शब्दार्थनिर्णये विवादोऽस्ति । तस्मात् एतादृशाः शब्दाः नैव मानुषेषु प्रसिद्धाः बभूवुः इति अङ्गीकरणीयम् ।

**३.** वेदेषु यथा त्रैस्वर्येण शब्दप्रयोगः तथा लोकेऽपि स्वरसहितप्रयोगो बभूव इत्यत्र नास्ति किञ्चित्प्रमाणम् । लोके जनैः स्वरसहिताः शब्दाः प्रायुज्यन्त इति ऊहितुमपि अशक्यम् । न हि स्वरसहितो वेदेभ्यः अन्यः ग्रन्थः क्वचिदपि उपलब्धः । तस्मात् वेदो न मानुषी कृतिः इति अभ्युपगन्तव्यम् । अस्मिन्नर्थे कुमारिलभट्टपादानाम् इमे श्लोकाः ध्यानमर्हन्ति -

आदिमात्रमपि श्रुत्वा वेदानां पौरुषेयता ।
न शक्याऽध्यवसातुं हि मनागपि सचेतनैः ।।
दृष्टार्थव्यवहारेषु वाक्यैर्लोकानुसारिभिः ।
पदैश्च तद्विधैरेव नराः काव्यानि कुर्वते ।।
प्रपाठकश्चतुष्षष्टिनियतस्वरकैः पदैः ।
लोकेष्वप्यश्रुतप्रायैः ऋग्वेदं कः करिष्यति ।।
अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातममित्येतन्नवचः कथम् ।।
किमालोच्य क्व वा दृष्ट्वा वाक्प्रतिच्छन्दमीदृशम् ।
रचयेत्पुरुषो वाक्यं किञ्चोद्दिश्य प्रयोजनम् ।।
अग्नेः पुरोहितत्वञ्च क्व दृष्टं येन कीर्त्यते ।
ईळेशब्दप्रयोगश्च क्व दृष्टः श्रोत्रगोचरः ।।
देवत्वञ्चास्य यज्ञस्य विहितं क्वोपलक्षितम् ।
विधिनैव हि देवत्वं प्रति कर्मावधार्यते ।। इति ।

इमे श्लोकाः निगदव्याख्याताः ।

**४.** किञ्च सामवेदे खल्वासाम् ऋचाम् अग्राई, आश, ऊश, इत्यादयो नानाविधाः गीतयो विभिन्नकालिकाः नियताः सन्ति । गुरूपदेशम् अन्तरा तेषां स्वरूपं नैव शक्यम् अध्यवसातुम् । को नु खल्वमूढः पुरुषः एतासां गीतीनाम् उच्चारणव्यवस्थां लोके अदृष्टपूर्वां कल्पयेत् ? किमर्थञ्च ? तस्मात् वेदाः अपौरुषेयाः इति ईश्वरनिर्मिता वा इति अवश्यम् अभ्युपगन्तव्यम् । तथापि वेदेषु किमर्थमिदं वैचित्र्यमिति चेत् । 'लोकवत्' इत्युत्तरम् । लोको हि अचिन्त्यवैचित्र्यरचनात्मको दृष्टिगोचरः । नानाविधाकृतिगुणस्वभावचेष्टा-विशिष्टाः पुरुषाः, स्त्रियः, पशुपक्षिमृगकीटादयो भूचराः जलचराः उभयचराश्च प्राणिनः रविचन्द्रनक्षत्रादीनि ज्योतींषि च वरीवृत्यन्ते । एतेषाम् इयत्ता नैव मानुषेण शक्यावधारणा । किमर्थम् एषा विचित्रा पदार्थसृष्टिः इति समानः अनुयोगः । यथा पदार्थसृष्टिः तथा पदानां पदघटितवाक्यानाञ्च इत्यवेहि । पदार्थे वैचित्र्यं प्रकृतेः स्वभावः, ईश्वरस्य लीला वेति चेत् । पदेष्वपि तदेव वैचित्र्यस्य समाधानम् ईक्ष्यताम् ।

**५.** किञ्च कश्यपविश्वामित्रादयो मन्त्रद्रष्टारः इति सर्वत्र संस्मर्यते, न तु कर्तारः इति । 'ऋषिर्दर्शनात्' इति यास्काचार्यः । समाध्यवस्थायां कश्यपादिभिः मन्त्राः दृष्टाः, न तु रघुवंशादिकाव्यग्रन्थाः कविभिरिव कृताः । तस्मात् वेदो न मानुषनिर्मितः ।

**६.** शौनकमहर्षिः बृहद्देवताख्यं ग्रन्थम् आरभमाणः 'मन्त्रदृग्भ्यो नमस्कृत्वा समाम्नायानुपूर्वशः' इति मन्त्रदृशो नमस्करोति । वेदप्रतिपाद्याः बह्वीः देवताः कीर्तयति । पृथिवीस्थानाः, अन्तरिक्षस्थानाः, द्युस्थानाः इति देवताः त्रेधा विभजते । बृहस्पतिः, ब्रह्मणस्पतिः, विश्वेदेवाः, अश्विनौ इत्यादिबहुसंख्याक-देवताः विभिन्नायुधवाहनगुणस्वभावविशिष्टाः स्तूयन्ते वेदेषु । एताः देवताः केन पुरुषेण क्व दृष्टाः, येन एवं प्रत्यक्षाः इव स्तूयेरन् ?

**७.** अपि च अत्यन्तगहनो गभीरश्च दार्शनिकसिद्धान्तः श्रुतिषु निबद्धः । 'पुरुष एवेदं सर्वम्, सर्वं खल्विदं ब्रह्म, ऐतदात्म्यमिदं सर्वम्' इत्यादिवाक्यैः समस्तस्य विश्वस्य ब्रह्मात्मकतां प्रतिपादयन्ति श्रुतयः । भारतीयेन विदेशीयेन वा केन खलु तत्त्वचिन्तकेन एतादृशः अर्थो निश्चितधिया धीरया वाण्या

निरूपितः । 'अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैः..., अहं मनुरभवं सूर्यश्च, वेदाहमेतं पुरुषं महान्तम्' इत्यादिवाक्यानि मनसापि अकल्पनीयार्थकानि केन खलु दार्शनिकेन वक्तुं शक्यानि मानुषेण ? 'तत्त्वमसि', 'अहं ब्रह्मास्मि' इत्येवं जीवब्रह्मणोः ऐक्यं केन खलु मानुषेण विकत्थनेनापि दार्शनिकेन ऊहितुमपि पार्यते । योऽयमर्थः सर्वज्ञेन सर्वशक्तेन परमेश्वरेणैव पार्यते वक्तुम् । 'धर्मब्रह्मणी वेदैकवेद्ये' इति सिद्धान्तः । तस्माद् अनसूयुना सत्यान्वेषकेण पुरुषेण वेदो न मानुषनिर्मितः इति अवश्यम् अङ्गीकरणीयं भवति । विस्तरस्तु पूर्वमीमांसाशास्त्रस्य प्रथमाध्यायस्य प्रथमद्वितीयपादयोः जैमिनिमहर्षिणा, ऋग्वेदभाष्यभूमिकायां सायणाचार्येण च सम्यक्प्रतिपादितस्तत एव द्रष्टव्यः । सिद्धे च वेदराशेः नित्यत्वे अकृतकत्वे च तदीयशब्दानां नित्यता अकृतकता च स्वतः एव सिद्ध्यति । 'व्याप्तिमत्वात्तु शब्दस्य' इति शब्दनित्यतां यास्कः स्थापयामास, जैमिनिश्च 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इत्यादिना । स्फोटवादिनो वैयाकरणाः शब्दनित्यतां सर्वात्मना प्रतिपादयन्तीति 'सिद्धे शब्दार्थसम्बन्धे' इति वार्तिके महाभाष्ये च स्पष्टम् । चन्द्रतारकवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः इति भाष्यव्याख्यानावसरे 'ब्रह्मतत्त्वमेव शब्दस्वरूपतया भाति' इति प्रत्याहाराह्निके कैयटः । उक्तश्च हरिणा –

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ।।** इत्यादि ।

योगिनश्च शाब्दिकाः इव स्फोटम् अङ्गीकुर्वन्ति इति शब्दनित्यतावादः तेषां सम्मतः एव । ये तु नैयायिकाः 'शब्दोऽनित्यः कृतकश्च' इति ब्रुवते, तेषामपि मते शब्दसदृशशब्दोच्चारणम् इत्येतावता, अत एव अस्माच्छब्दादयमर्थो बोद्धव्यः इतीश्वरसङ्केतः शक्तिरिति तन्मतं सङ्गच्छते । 'तस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वणवेदः' इति श्रुतिः । महतो भूतस्य परमेश्वरस्य इत्यर्थः ।

अन्या च एवञ्जातीयका प्राचीनोक्तिर्यथाकथा च आस्ताम् । नवीनाः पुनर्विचारवादित्वेन आत्मानं ख्यापयन्तो विद्वांसः सर्वमप्येतत् श्रद्धाजाड्यकुक्षौ निक्षिपेयुः । संस्कृतभाषा किञ्चिन्मूलभाषाम् अवलम्ब्य विकसिता क्रमेणेति ब्रूयुः । एते हि कस्याश्चिदपि भाषायाः अनादित्वं दैवनिर्मितत्वं वा सर्वथा

नाभ्युपगच्छन्ति । तेषां मुखबन्धनं कथं शक्यं विधातुम् ? अत्रोच्यते -

एते नवीना द्विविधाः आस्तिकाः नास्तिकाश्चेति । तत्र आस्तिकान् पृच्छामः । ईश्वरः प्रथमं कस्यां भाषायां व्यवहरति स्म । न चासौ मूकः इति शक्यते वदितुम् । तथा हि सति असर्वज्ञत्वम् असर्वशक्तत्वञ्च तस्य प्रसज्येत । न च एतदिष्टं कस्यापि । 'नामरूपे व्याकरवाणि, स भूरिति व्याहरत् । स भूमिमसृजत' इत्येवं शब्दपूर्विका सृष्टिः श्रूयते । सर्वो हि जनः प्रथमं शब्दपूर्वकं मनसा किञ्चिद् उल्लिख्य इदं करोमीति, ततः कार्ये प्रवर्तते । अत एव शब्दार्थयोः नित्यसम्बन्धः स्वीकृतः प्राज्ञैः । न खलु मूकेन सता ईश्वरेण मनसापि अचिन्त्यरूपम् इदम् अत्यद्भुतं जगन्महायन्त्रं शक्यं स्रष्टुम् । न वा स्वतः एव शब्दोच्चारणसामर्थ्यम् आधातुं शक्यम् । न वा 'मानुषा व्यक्तवागुच्चारणसमर्थाः भवन्तु । ताश्च वाचः सर्वेन्द्रियागोचराः एव सत्यः सर्वतः प्रसरन्त्यः श्रोतॄणां श्रवणपुटे अभिव्यज्यन्ताम् । श्रवणेन्द्रियाणि शब्दग्राहकाणि स्युः' इति अभिसन्धातुम् । तस्मात् 'ईश्वरः शब्दान् सृज्यमानार्थांश्च सम्यक् जानाति । कयाचिद्भाषया व्यवहरति । तां च भाषां स्वसृष्टप्राणिभ्यः प्रथममुपदिशति' इति निखिलतार्किकशिरोमणिभिः अपि आस्तिकैः अभ्युपगन्तव्यमेव । नास्त्यत्र गतिः अन्यथा । सेयम् ईश्वरेण व्यवहृता भाषा वैदिकी, या तु पश्चाद् अभियुक्तैः संस्कृत्य संस्कृतभाषा इति व्यपदिष्टा । इयं संस्कृतभाषा समस्त-प्राकृतादिभाषाणां जन्मभूः । तस्माद् एषा देवभाषा इति लोकप्रसिद्धिः । आह च भगवान् भर्तृहरिः -

**दैवी वाग्व्यवकीर्णेयमशक्तैरभिधातृभिः ।**
**अनित्यदर्शिनां त्वस्मिन्वादे बुद्धिविपर्ययः ।।** इति ।

दण्डी च 'संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः' इति, 'देवीं वाचमजनयन्त देवाः' इति प्राह भगवती श्रुतिः ।

यथा खलु सर्वज्ञेन सर्वशक्तेन च ईश्वरेण सृज्यमानप्राणिनाम् उपकाराय चक्षुः-श्रोत्र-कर-चरण-दंष्ट्रा-पक्षत्यादिघटितं, तत्तच्छरीरनामकं महद्यन्त्रं निर्मितं, यथा च तज्जीविकायै व्रीहियवतृणाद्यन्नजातं कल्पितम्, तथा व्यवहारसिद्ध्यर्थम् उपकाराय भूयसे भाषापि काचिद् उपदिष्टा इति किम् अनुपपन्नम् ?

अत्र कश्चित् प्रत्यवतिष्ठेत - बाढम् उपदिष्टा भवेद् ईश्वरेण काचन भाषा,

सा तु संस्कृतभाषा एव इत्यत्र किं मानम् ? इति ।

सत्यम् । अवश्यम् अस्माभिः काचन भाषा मनुष्यजातेः उपकाराय परमेश्वरेण उपदिष्टा इति ऊरीकर्तव्यम् । सा च प्राचीनतमा भवितुम् अर्हति, या सर्वशब्दसमृद्ध्या यथेष्टं, नूतनशब्दनिर्माणसामग्र्या च सम्पुष्टा भवितुम् अर्हति । एवं किल ईश्वरसृष्टिः भवति उपकाराय मनुजानाम् । सा च संस्कृतभाषा एव, नान्या । ननु एसुक्रिस्तः, महम्मद्पैगम्बरश्च प्रवादिनौ हिब्रूभाषया, अरब्बीभाषया च ईश्वरेण सम्भाषितवन्तौ इति तन्मतीयाः वदन्ति । तस्मात् तयोरपि देवभाषात्वं सम्मन्यतामिति चेत्, ईश्वरस्य सर्वज्ञत्वेन हिब्रू-भाषादिज्ञानम् अस्ति एव इति नेदं भवति चोद्यम् । तयोः प्रवादिनोः अर्वाचीनत्वेन तद्भाषयोः नैव प्राचीनतमत्वम् अस्ति, न वा सर्वशब्दसमृद्धिः । न हि ईश्वरेण लोकोपकारप्रवृत्तेन न्यूनतादोषयुक्ता भाषा समुपदिश्यते । किञ्च तयोरपि भाषयोः संस्कृतजन्यत्वं शक्यं प्रतिपादयितुम् इति न किञ्चिदेतत् । किञ्च यदि तौ प्रवादिनौ उभौ अपि ईश्वरेण साक्षात् उपदिष्टौ तर्हि कुतः तदुपदेशयोः भूयान् मतिभेदः ? उभावपि मानुषौ इतिहासगोचरौ तत्तन्मतस्य प्रवर्तयितारौ इति प्रसिद्धं लोके । नेयं कथा वेदेषु । अतिविस्तृतेष्वपि वेदेषु उपनिषत्सु च एकवाक्यता वरीवर्ति । भूयांसश्च मन्त्रद्रष्टारः । यद्येते ऋषयो मन्त्रकर्तारः अभविष्यन्, तर्हि 'मुण्डे मुण्डे मतिर्भिन्ना' इति न्यायेन तदुपदेशाः अपि नानात्वेन अभेत्स्यन्त । यदिदानीन्तनपरिशोधकवाचस्पतिभिः वेदेषु अपि तात्त्विकमतभेदो दृश्यते इति आख्यायते, तत्सर्वं प्राचीनैः अर्वाचीनैश्च भारतीय-विपश्चिद्भिः दूषितम् एवेति अन्यत्र स्पष्टमिति नेह तन्यते ।

ये तु ईश्वरं न अभ्युपगच्छन्ति, तेषामेवं भवति विचारसरणिः । आदौ मानवजातिः अनागरिकी असंस्कृता बर्बरप्राया च बभूव । क्रमेण मानवानां बुद्धिविकासः अजनि । यदा विकासावस्थायाम् अन्नवस्त्रगृहनिर्माणादयः क्रियाः प्रगतिपथं प्राप्नुवन्, तदा व्यवहारसौकर्याय जनाः शब्दान् निर्माय विवक्षितार्थबोधनाय उपायुञ्जत । ततश्च काले गते शब्दैः वाक्यरचना निरूपिता । लिपिश्च आविष्कृता । तदुपरि लेखनसामग्री । इत्येवंक्रमेण सर्वविधं वाङ्मय-साहित्यं निर्मितम् इति ।

अत्र ब्रूमः । सर्वे जनाः सुखम् अपेक्षन्ते इति लोकसिद्धमेतत् । सुखप्राप्त्यर्थम्

आरभ्यमाणक्रिया अपि सुखावहा भवेदिति स्वभाविकी मानवप्रवृत्तिः । व्यवहारसौकर्यार्थं निर्मीयमाणे शब्देऽपि सुखोच्चारणं कामयते मनुष्यः, न तु कण्ठताल्वादिनिष्पीडनेन प्रभूतं क्लेशं सोढुम् । नखच्छेद्ये वस्तुनि न कोऽपि प्रेक्षावान् परशुना प्रहरति । न वा पादचारेण सुखप्राप्यं देशम् अश्वम् आरुह्य गच्छति । न च भूमौ लुठन् प्रयाति । 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' इति न्यायः सर्वत्र जागर्ति । एवं स्थिते किमर्थं जिह्वादिनिष्पीडनेन क्लिष्टोच्चारणान् शब्दान् निरमिमीत पुरुषः ? वेदे संस्कृतभाषायाञ्च प्रयुज्य-मानाः प्रभूताः शब्दा नैव सुखोच्चारणाः । महाप्राणानां ख-ध-छ-झ-प्रभृतीनाम् ऊष्मणां च उच्चारणं कस्य सुखावहम् ? तथा जिह्वामूलीयोपध्मानीययोश्च । अननुरूपसंयुक्तहल्घटितपदानाञ्च । जर्भरी, तुर्फरीतु, स्वच्छन्दोच्छलदच्छकच्छ, क्षपाः क्षपयति, हूर्च्छनम्, कात्स्न्र्यम् इत्यादीनाम् असंख्यातपदजातानाम् उच्चारणं प्रौढानामपि क्लेशदम् । किमुत बालानां बालिशानाञ्च ? अत एव खलु एषाम् उच्चारणासमर्थैः प्राकृतभाषाः प्रवर्तिताः ।

संस्कृतयोनयः किल प्राकृताः अपभ्रंशाश्च शब्दाः । देशभेदेन समाजभेदेन च शब्दाः इमे नानारूपाः समजायन्त ।

किञ्च वेदेषु त्रैस्वर्यम् अस्तीति पूर्वं निवेदितम् । तच्च त्रैस्वर्यं नियमबद्धम्, न तु याथाकथाचम् । किमर्थम् आदिमानवोऽसौ शब्देषु स्वरितादित्रैस्वर्यं प्रायोजयत् ? कथं वा पदानाम् अर्थभेदेन समासभेदेन च स्वरभेदम् अकल्पयत् ? स्वरभेदे च विवक्षितार्थस्य अप्रतिपत्तिः, विपरीतार्थप्रतिपत्तिश्च इति विदितमेव 'स्वाहेन्द्रशत्रुर्वर्धस्व' इति गाथां विजानताम् ।

किञ्च शब्दानां पुंलिङ्गादिव्यवस्था अर्थानुसारिणी लोकप्रसिद्धा । किमर्थं पुनः सुलभाम् इमां व्यवस्थाम् अतिक्रम्य शाखाशिलादिशब्दानां स्त्रीलिङ्गता, घटपटादीनां पुंलिङ्गता, मित्रकलत्रादीनां नपुंसकता च प्रकल्पिता ? तटादीनां त्रिलिङ्गता ज्वालादीनां द्विलिङ्गता च किमर्था ? न च वैयाकरणकल्पिता एषा व्यवस्था, नात्र मानवाः अपराध्यन्ति इति शक्यं वदितुम् । 'लोकाश्रयत्वात् लिङ्गस्य' इति व्याकरणशास्त्रे जोघुष्यमाणत्वात् । अत एव 'तदशिष्यं संज्ञाप्रमाणत्वात्' इति लिङ्गानाम् अशिष्यत्वमाह पाणिनिराचार्यः । कुम्भकाराः घटानिव नहि वैयाकरणाः शब्दान् कुर्वन्ति । यान् शब्दान् यथा लोकाः

प्रयुञ्जते तानेव तथा शास्त्रेण अनुविदधते वैयाकरणाः । शाखा पुष्पिता, शिलायाम् उपविष्टः, घट आनीतः, पटो निष्पादितः, सुग्रीवो रामस्य मित्रम्, सीता रामस्य कलत्रम् इत्येवं लौकिकप्रयोगान् दृष्ट्वा तत्तद्रूपसिद्ध्यर्थं कश्चन स्वकृतान्तः आस्थीयते शब्दशास्त्रे । आह च महाभाष्यकारः – 'इह कश्चित् कुम्भकारकुलं गत्वाह कुरु घटम्, उपयोक्ष्ये इति । एवं न कश्चित् वैयाकरणकुलं गत्वाह कुरु शब्दम्, प्रयोक्ष्ये इति' । संस्कृतशब्दानां लिङ्गव्यवस्था नास्माकं शक्या विज्ञातुं विना कोशादिकम् । किमर्थमेषा शिला निपातिता आदिमानवेन आत्मनः शिरसि ? सत्यपि समाने लिङ्गे पदानां विभिन्नो रूपभेदः । यथा रामशब्दः, न तथा सर्वशब्दः, न तथा पूर्वशब्दः । यथा राजन्, न तथा आत्मन् । यथा आत्मन्, न तथा युवन् । यथा लक्ष्मीः, न तथा श्रीः । यथा कर्मन्, न तथा अहन् । इत्यलं प्रपञ्चेन ।

किञ्च समासान्तेन रूपभेदः । नकारान्तो राजशब्दः समासे महाराजो भवति । सखिशब्दः प्रियसखो भवति । सुगन्ध इति कर्मधारये । सुगन्धिरिति बहुव्रीहौ । इमे सर्वे च आक्षेपाः स्त्रीप्रत्यये, कृति, तद्धिते च यथायथं योज्याः । एतादृशो दुर्बोधो रूपभेदः शब्दानां किमर्थम् अकारि भाषानिर्मात्रा ?

किञ्च, क्रियापदानां रूपाणि दुरूहाणि पण्डितानामपि । तत्र दश लकाराः कालबोधकाः अर्थबोधकाश्च । लेट् च अधिको वेदेषु । धातवश्च सहस्रशः सन्ति दशधा विभक्ताः । ते च सेटः अनिटः वेटश्च इति त्रिधा । पुनश्च परस्मैपदिनः, आत्मनेपदिनः, उभयपदिनश्च इति त्रिधा । उपसर्गवशात् अर्थभेदाच्च परस्मैपदादिकं भिद्यते । सर्वलकारेषु धातूनां महान् रूपभेदः । एकस्मिन्नेव लुङि सिच्-चङ्-क्सः-इत्यादिप्रत्ययभेदाः । पुनरपि सन्-यङ्-णिजादिषु नानारूपाणि परस्परम् असदृशानि । किमर्थम् एषः महान् भारः स्कन्धे स्वयम् आरोपितो भाषानिर्मात्रा मानवेन ? कथञ्च तेन क्वापि अदृष्टचरं गड्डुभूतं द्विवचनं प्रवेशितं संस्कृतभाषायाम् ?

यदि व्यवहारार्थं नूत्नतया शब्दनिर्माता भवेन्मनुष्यः तर्हि अर्थबोधनाय एकस्य अर्थस्य एकैकं शब्दं निर्मिमीत । यदि वा देशकालयोः पुरुषाणाञ्च नानात्वेन पर्यायशब्दाः अपि सृष्टाः भवन्ति, तदा द्वित्राः पर्यायशब्दाः क्वचिद्भाषायां सत्तां लभेरन्, न तु प्रभूताः, नापि सर्वत्र पर्यायशब्दाः कल्प्येरन् ।

तादृशकल्पनायाः अन्यभाषासु हि वैरल्यमेव । नेयं परिपाटी संस्कृतभाषायाम् । एकस्य वस्तुनो बोधनाय विपुलाः सम्भवन्ति शब्दाः । तथाहि – यास्काचार्य-व्याख्याते वैदिकनिघण्टौ शब्दसमाम्नायः समाम्नातः । तत्र यास्कवचनानि कानिचित् –

१. उदकनामान्युत्तराण्येकशतम् (१०१)
२. रात्रिनामान्युत्तराणि त्रयोविंशतिः (२३)
३. उषोनामान्युत्तराणि षोडश (१६)
४. मेघनामान्युत्तराणि त्रिंशत् (३०)
५. वाङ्नामान्युत्तराणि सप्तपञ्चाशत् (५७)
६. अश्वनामान्युत्तराणि षड्विंशतिः (२६)
७. कर्मनामान्युत्तराणि षड्विंशतिः (२६)
८. मनुष्यनामान्युत्तराणि पञ्चविंशतिः (२५)
९. अङ्गुलिनामान्युत्तराणि द्वाविंशतिः (२२)
१०. अन्ननामान्युत्तराणि अष्टाविंशतिः (२८)
११. गृहनामान्युत्तराणि द्वाविंशतिः (२२)
१२. क्षिप्रनामान्युत्तराणि षड्विंशतिः (२६) इत्यादीनि ।

अस्मिन् निघण्टौ अदृश्यमानान्यपि बहूनि पर्यायपदानि कोशेषु उपलभ्यन्ते । केन निमित्तेन किं वा प्रयोजनम् उद्दिश्य पर्यायपदानि एतानि सृष्टानि मानवेन ? किञ्च इतरभाषासु उपलभ्यमानाः शब्दाः शृङ्गग्राहिकया परिगणयितुं शक्याः । परिगणिताश्च कोशेषु । नैवं संस्कृतभाषायाम् । संस्कृतशब्दानाम् इयत्ता एव नास्ति । अनन्ताः हि शब्दाः । यथाह महाभाष्यकारः पस्पशाह्निके – 'अनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः । एवं हि श्रूयते – बृहस्पतिरिन्द्राय प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच । नान्तं जगाम । बृहस्पतिश्च प्रवक्ता । इन्द्रश्चाध्येता । दिव्यं वर्षसहस्त्रमध्ययनकालः । न चान्तं जगाम । किं पुनरद्यत्वे । यः सर्वथा चिरं जीवति वर्षशतं जीवति । चतुर्भिश्च प्रकारैः विद्योपयुक्ता भवति – आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति । तत्र चास्यागमकालेनैवायुः कृत्स्नं पर्युपयुक्तं स्यात् । तस्मादनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठः' इति ।

सर्वदा सर्वकार्येषु लाघवेन इष्टसिद्धिम् अपेक्षमाणः सुखबोधं च कामयमानः पुरुषः किमर्थम् एवम् असंख्यातान् पर्यायशब्दान् अन्यांश्च अनन्तान् शब्दान् निर्मितवान् इत्यनुयोगे किमुत्तरम् ? अनुत्तरमेव उत्तरम् । तस्मात् अयम् अपारः शब्दसमुदायो मानवेन नैव निर्मितः इति अकामेनापि अभ्युपगन्तव्यं भवति । मानुषः खलु परिमितस्वरूपाणि भवनानि यन्त्राणि अन्यानि च वस्तूनि स्रष्टुं प्रभवेत्, न तु पर्वतान्, समुद्रान्, सूर्यादिग्रहनक्षत्राणि च । एतेन या प्राचीनोक्तिः 'नित्यः शब्दः' इति, सापि समर्थिता भवति ।

ननु च भोः ! वैदिकशब्दानां दुर्बोधत्वात् व्यवहारसौकर्याय परिष्कृता संस्कृतभाषा इति पूर्वम् उक्तम् । इदानीं संस्कृतशब्दानामपि दुर्बोधत्वं यत्नेन प्रतिपाद्यते इति चेत् । सत्यम् । अनन्ताः हि वैदिकाः शब्दाः लक्षणैः लक्षयितुम् अशक्याः बाहुलकविषयाः । तेषां केचन शब्दाः गृह्यादिव्यवहारेषु उपयुक्ताः । ते च शिष्टैः प्रयुज्यमानाः अन्ववर्तन्त । मानवसहजदौर्बल्यात् पदानाम् अन्यथोच्चारणेन विक्रियमाणताम् अवलोक्य शब्दविकारम् असहमानैः पाणिन्यादिभिः आचार्यैः लक्षणानि प्रणीय पदस्वरूपं व्यवस्थापितम् । एषा व्यवस्था एव संस्कारः । संस्क्रियते इति संस्कृतम् इति प्राग् अवोचाम । त्रैस्वर्यपरित्यागेन लोके प्रयुज्यमानपदस्य रूपनिर्धारणेन च लघूकृतो महान् भारः इति अस्मदाशयः । एवमप्यकृतविद्यानां कृषीवलादीनां पामराणां क्लेशः अवशिष्टः एव । अनभिज्ञैः प्राकृतजनैः इयमेव भाषा नित्योपयोगेन दूष्यमाणा प्राकृतात्मना पर्यणंस्त । कालदेशादिभेदेन प्राकृतभाषा एव महाराष्ट्री शौरसेनी इत्याद्युच्चावचभेदान् अवाप । ततः प्रतिष्ठितप्राकृत-भाषया अपभ्रंशाः जाताः इति नानाविधभाषासाङ्कर्यबाहुल्यम् उन्नेयम् ।

इयं देववाणी समस्तजगद्व्यापिनी बभूव इति महाभाष्याद् अवसीयते । पस्पशाह्निके 'सर्वे देशान्तरे' इति वार्तिकव्याख्यानावसरे प्रोक्तम् 'महान् शब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यं, नवधाऽथर्वणवेदः, *वाकोवाक्यमितिहासः पुराणम्

---

* 'वाकोवाक्य'शब्देन उक्तिप्रत्युक्तिरूपो ग्रन्थविशेषः गृह्यते । यथा - 'किं स्विरदावपनं महत् । भूमिरावपनं महत्' इति । प्रश्नोत्तरमालिकादि च ।

वैद्यकमित्येतावान् शब्दस्य प्रयोगविषयः । एतावन्तं शब्दस्य प्रयोगविषयम् अननुनिशम्य 'सन्त्यप्रयुक्ताः' इति वचनं साहसमात्रमेव' इति । नेदं परिगणनम् । किन्तु दिक्प्रदर्शनम् । तेन कल्पसूत्र-धनुर्वेद-गान्धर्ववेदादीनां काव्यनाटकादीनाञ्च सङ्ग्रहः ।

अत्र च त्रयो लोकाः संस्कृतशब्दप्रयोगविषयत्वेन उत्कीर्तिताः । तेन संस्कृत-भाषायाः देववाणीत्वं भाष्यकारसम्मतम् इति नास्ति सन्देहलेशोऽपि । किञ्च शब्दानाम् एषां कालक्रमेण विभिन्नजनपदेषु अर्थविपर्ययो जातः इत्यपि महाभाष्यात् विज्ञायते । एवं हि आह भाष्यकृत् – 'एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते । तद्यथा शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति । विकार एवैनमार्या भाषन्ते शव इति । हम्मतिः सुराष्ट्रेषु रंहतिः प्राच्यमध्यमेषु, गमिमेव त्वार्याः प्रयुञ्जते । दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु' इति । यथा हि अर्थविपर्ययः तथा शब्दाकृतिविपर्ययोऽपि जायते इति न चित्रम् । आकृतिविपर्यये शब्दानाम् अपभ्रंशता । 'एकैकस्य शब्दस्य बहवोऽपभ्रंशाः । तद्यथा गौरित्यस्य गावी गोणी गोता गोपोतिलिका इत्येवमादयो बहवोऽपभ्रंशाः' इति भाष्यम् । संस्कृतशब्दाः बहुधा रूपान्तराणि आपद्य असंख्यातभाषाजनने कारणानि बभूवुः । प्राच्यप्रतीच्यभाषागतशब्दानां सूक्ष्मया दृशा परिशीलने कृते मूलभूतसंस्कृतशब्दानां प्रत्यभिज्ञानं न दुष्करं विदुषाम् । सोऽयं प्रकारः सम्यग्विज्ञातः एव भाषाशास्त्रविदाम् । न केवलम् आकृतिसाम्यम्, अपि तु शब्दव्युत्पत्तिः, ध्वनिः, पूर्वेतिहासः, तत्तद्भाषाप्रचुर-देशसामीप्यम् इत्यादिकमपि परिगणय्य काचिद्भाषावर्गीकरणव्यवस्था समाद्रियते भाषाशास्त्रे । सर्वेयं विचारसञ्चारशैली शास्त्रस्य अलङ्करणम् । नास्माकं तत्र विवादः ।

यस्तु वैदिकभाषायाः अपि मूलभूता काचिदन्या भाषा बभूव इति बहुभाषते स तावदेवं प्रष्टव्यः । स बहुदृश्वा बहुवेदी नानाशास्त्राभिज्ञः अपास्तश्रद्धाजाड्यः कुशलश्च इतिहासेषु निपुणश्च ऊहापोहेषु एवं पृष्टः आचष्टाम् ।

**१.** ये एते वेदेषु बहुरूपाः अनन्ताः शब्दाः, एकार्थस्य विपुलाः पर्याय-शब्दाश्च बभूवुः इति पूर्वम् उपपादिताः, ते सर्वे शब्दास्तावदभिमतायां मूलभाषायां बभूवुः उत न ? यदि प्रथमः पक्षः, तर्हि सा भाषा साहित्यवैद्यक-

ज्यौतिषादिशास्त्रसम्पुष्टा वृद्धतमा प्रशस्ता भवितुम् अर्हति । तादृशी भाषा कथम् एकपदे मशकनाशं नष्टा ? किम् एतादृशः सर्वनाशो भाषायाः क्वापि दृष्टः ?

**२.** तस्याश्च मूलभाषायां स्वरितादि त्रैस्वर्यम् आसीन्न वा ? यदि आसीत् किमर्थं तत्कल्पितम् ? किं त्रैस्वर्येण लौकिको गृह्यादिनित्यव्यवहारः शक्यो जनानाम् ? यदि त्रैस्वर्यं नासीत्, कथं तर्हि वेदेषु गड्डुभूतं नूतनतया तत्कल्पितम् ?

**३.** यदि तु केचिदेव व्यवहारार्थं मूलभाषायां मानवैः कल्पिताः शब्दाः नतु सर्वे इति द्वितीयः पक्षः, तर्हि कथम् अनन्तशब्दसङ्घातजुष्टायाः संस्कृत-भाषायाः तज्जन्यत्वं ब्रूषे ? नहि धनिको भिक्षुकेन उपजीव्यते ? मूलभाषायाः कतिपयशब्दमात्रघटितत्वे च भरतखण्डे पारसीकादिदेशेषु शर्मण्यदेशे ग्रीस्प्रभृतिषु युरोप्देशेषु च सर्वतोमुखेन प्रसर्तुं सा नैव शक्नुयात् । काकपेयजला काचित् कुल्या कियद्दूरं प्रवहेत् ?

**४.** वेदानां खलु श्रेष्ठता, महत्ता, पवित्रता, अभ्यर्हितता च सर्वैरपि महर्षिभिः अस्मदीयैः अनपवादम् अङ्गीकृता । यदि मूलभाषया जनिता वेदाः, कथं तेषां तादृशप्राशस्त्यं प्रेक्षावान् अङ्गीकुर्यात् ? कथन्तरां प्रत्येक-वर्णस्य, स्वरस्य, आनुपूर्व्याश्च महता यत्नेन पदघनजटादिकल्पनेन रक्षणं कुर्यात् ? कथन्तमां च वेदरक्षणार्थं वेदाङ्गानि प्रातिशाख्यादीनि च प्रणयेत् ? 'वेदोऽखिलो धर्ममूलम्' इति च ब्रूयात् ?

**५.** कथं नाम कृतकशब्दानां तद्भवस्वरूपाणां शब्दब्रह्मता प्रोक्ता प्राचीनैः ? 'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति' इति को वा मतिमान् वेदम् अधिकृत्य अभिदधीत ?

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥**

इति निःशङ्कम् उद्घोषयन् वाक्यपदीयकारो भर्तृहरिः किं मूढकोटौ प्रक्षिप्यते ?

**६.** ओङ्कारस्य प्रणवस्य गायत्र्यादिमन्त्रस्य च भारतीयाभ्युपगता महत्ता अलौकिकफलदायिता च न स्यात् मनुष्यकल्पितत्वे । 'ओमित्येकाक्षरं ब्रह्म' 'ओमिति सामानि गायन्ति' इत्यादिश्रुतयः किं भ्रान्तिविलसिताः ?

**७.** वेदानाम् अस्मादृशमनुष्यनिर्मितत्वे तेषाम् अप्रामाण्यं शिरसि पतितम् ।

किमर्थं तर्हि जैमिनिः श्रुतेः सर्वतः प्रामाण्यम् अङ्गीकुर्वन् पूर्वमीमांसासूत्राणि बहुना परिश्रमेण जग्रन्थ ? किमर्थं वा बादरायणः प्राचीनाचार्यशिरःशेखराणि शारीरकसूत्राणि प्रणिनाय ?

८. चत्वारि शृङ्गा त्रयो अस्य पादाः द्वे शीर्षे सप्तहस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यागँ् आविवेश ।।

इति ऋङ्मन्त्रं व्याचक्षाणो महाभाष्यकारः – 'चत्वारि शृङ्गाणि । चत्वारि पद-जातानि नामाख्यातोपसर्गनिपाताश्च । त्रयो अस्य पादाः । त्रयः कालाः भूतभविष्यद्वर्तमानाः । द्वे शीर्षे । द्वौ शब्दात्मानौ नित्यः कार्यश्च । सप्त हस्तासो अस्य । सप्त विभक्तयः । त्रिधा बद्धः । त्रिषु स्थानेषु बद्धः उरसि कण्ठे शिरसीति' इत्याह । किमत्र परामृष्टाः व्याकरणशास्त्रगोचराः अर्थाः त्वदीयां मूलभाषां परामृशन्ति ? यदि परामृशन्ति, तर्हि श्रुतिरेव तां भाषां तुष्टाव, भाष्यकारश्च तां मूलभाषां सम्यग्विजज्ञे इति त्वया वक्तव्यं भवति । अहो साहसम् । 'महोदेवो मर्त्यागँ् आविवेश' महादेवः शब्दब्रह्म जीवरूपेण शरीरं प्रविवेशेत्यर्थः । 'अनेन जीवेनात्मना अनुप्रविश्य नामरूपे व्याकरवाणि' इति श्रुत्यर्थः अत्र प्रकाश्यते । किमसौ मूलभाषारूढः शब्दः, यो जीवेन आत्मना साम्यम् आरोपितः? इत्यादयः प्रश्नाः समुद्भवन्ति ।

भरतखण्डस्य उत्तरभागे व्यवह्रियमाणाः हिन्दी-गुजराती-पञ्जाबी-काश्मीरी-बङ्गालीप्रभृतयः संस्कृताद् उत्पन्नाः इति भाषाशास्त्रविदाम् आम्नायः । कन्नड-प्रभृतयो द्रविडभाषास्तु अन्यमूलाः, न तु संस्कृतमूलाः इति तेषाम् उद्घोषः । द्राविडभाषा अपि संस्कृतमूला इति शक्यम् उन्नेतुम् । वन्यैः आयुधजीविभिः कैश्चित् अङ्गुलिमेयाः केचिदेव शब्दाः स्वयम् उत्पादिताः भवेयुः । एवं जगत्यस्मिन् सर्वदेशेषु स्वयम् उत्पादिताः अल्पसंख्याकाः शब्दाः सम्भवन्त्येव । तावता भाषैव कार्त्स्न्येन अन्या निर्मिता इति रिक्तं वचः । अशक्यश्च भाषायाः निर्माणम् इति पूर्वम् आवेदितम् । यदाप्रभृति दैनन्दिनव्यवहारात् लुप्तं संस्कृतं, तदाप्रभृति नित्यं व्यवहारगोचराः संस्कृतशब्दाः पण्डितग्रन्थेषु अपि अदर्शनङ्गताः । ते च प्राकृतद्राविडादिभाषासु रूपान्तरधारिणो नटाः इव प्रविष्टाः । कन्नडभाषायां विद्यमानाः शुद्धकन्नडत्वेन अभिमन्यमानाः संस्कृतमूलाः केचिदेव शब्दाः विदुषां चमत्काराय उदाह्रियन्ते –

| पाणिनीयधातुपाठे | कन्नडभाषायाम् |
|---|---|
| १. अट्ट अतिक्रमणहिंसनयोः । अट्टते | अट्टु |
| २. धक्क नाशने । धक्कयति | धक्के माडु |
| ३. *कुट्ट छेदनभर्त्सनयोः । कुट्टयति | कुट्टु |
| ४. हिष्क हिंसायाम् । हिष्कयति | हिसुकु |
| ५. वडि विभजने । वण्डयति | वडेयुत्ताने |
| ६. तुडि – तोडने । तोडनं दारणं हिंसनं च । तोडयति | तोडु |
| ७. चुट छेदने । चोटयति | चूटु |
| ८. जुड प्रेरणे । जोडयति | जोडिसु |
| ९. रौडृ अनादरे । रौडति | रौडि |
| १०. मुष स्तेये । मुष्णाति | मोस |

एवम् अन्ये च बहवः शब्दाः कन्नडभाषीयत्वेन आभिमताः संस्कृतजन्याः एव । दिङ्मात्रम् उदाहरणम् –

| | |
|---|---|
| १. दूढ्यः = दुःखेन दम्यते । उद्धतः | धडिय |
| २. मूढः = मूरः (वेदे) | मूळ |
| ३. जबारूः = वेगशाली | जोरु |
| ४. जल्हुः (वेदे) = निःसारः | जळ्ळु |
| ५. रम्भः = दण्ड इति यास्कः | रेम्बे |

'काडु'शब्दः अरण्यवाचकात् 'काट'शब्दात् निष्पन्नः । 'नमः काट्याय च नीप्याय च' इति श्रीरुद्रनमकम् । 'काट्याय अरण्यभवाय' इति वेदभाष्यम् । एवम् आप्टेमहोदयरचितकोशेऽपि ।

'गडण'शब्दः समूहवाची शुद्धकन्नडशब्दः इत्यभिमानः । 'हेतुमति च' इति सूत्रे 'यत्र शब्दग्रन्थगडमात्रं लक्ष्यते' इति भाष्यम् । तत्रैव 'गडः = मनुष्यसङ्घातः' इति उद्योते व्याख्यातम् ।

अम्बाशब्दः कन्नडभाषायाम् 'अम्म' इति रूपम् आपन्नः इति सर्वे जानन्ति । 'अम्माम्मेति यथा बालः शिक्षमाणः प्रभाषते' इति वाक्यपदीये हरिः ।

---

* 'कुट्टाकभावकुतुकं कुरुते स्म भीमः' इति चम्पूभारते ।

'अब्बा, अब्बे' इत्यपि विकृतोऽयं शब्दः । स एव पुंसि 'अप्प' इति जातः पितृवाचकः । आर्यशब्दस्य अयम् अपभ्रंशो वा । विचित्रा हि शब्दगतिः । पितृवाचकः तातशब्दः प्राकृते 'ताय' इति भवति । जैनकविना रामचन्द्रेण सत्यहरिश्चन्द्रनाटके बहुकृत्वः प्रयुक्तश्च । 'ताय'शब्दः एव मन्ये स्त्रियां 'तायि' इति मातृवाचको जातः । तातशब्दश्च पितामहवाची कन्नडभाषायांम् । 'अम्म' इति पितृवाची प्राचीनकन्नडभाषायाम् । 'अक्क'शब्दो मातृपर्यायः पाणिनीये प्रसिद्धः । 'हे अक्क' इति रूपसिद्ध्यर्थं 'डलकवतीनां न' इति वार्तिके परामृष्टः इति दिक् । तस्मात् सिद्धमेतत् संस्कृतभाषा देवभाषा नित्या च । तदुद्भवाः सर्वाः इतरभाषाः प्राच्याः प्रतीच्याश्च इति । अत्र बहु वक्तव्यमस्ति । विस्तरभयात् विरम्यते । अत्र इमे श्लोकाः भवन्ति -

ऋगादिवेदाः सर्वेऽपि ध्रुवमीश्वरनिःसृताः ।
शब्दार्थयोरपूर्वत्वादज्ञेयत्वादसम्भवात् ।।१।।
अशक्यत्वान्मानुषाणां प्रवृत्तेर्लाघवादरात् ।
अपौरुषेयता तेषां वेदानां सुव्यवस्थिता ।।२।।
तदुद्भवा संस्कृतेयं नित्या गीर्वाणभाषिता ।
तद्योनयः प्राकृताद्याः विश्वं व्याप्यावतस्थिरे ।।३।।
वर्णाकृतिविभेदोऽत्र सहजः प्राकृतैर्गुणैः ।
एकगोत्रा यथा लोके मनुजा भिन्नमूर्तयः ।।४।।
विचारबीजं निक्षिप्तं देववाण्या अनादिताम् ।
संरक्षितुं वर्धयन्तु प्रज्ञासेकेन कोविदाः ।।५।।

★ ★ ★

## १०. श्रीशङ्करभगवत्पादैः सम्पादितो लोकोपकारः

*शङ्करं शङ्कराचार्यं केशवं बादरायणम् ।*
*सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः ।।*

इह तावत् संसारमग्रजगदुद्दिधीर्षया कृतावतारैः ज्ञानविज्ञानादिसिद्धिमद्भिः सर्वदार्शनिकशिरोमणिभिः श्रीशङ्करभगवत्पूज्यपादैः सम्पादितं लोकोपकारम् अधिकृत्य किञ्चित् प्रस्तोतुम् उत्सहते मे चेतः ।

ईशानः सर्वविद्यानाम् ईश्वरः सर्वभूतानां स भगवान् शङ्करः एव श्रीशङ्कर-भगवत्पादापरनाम्ना कृतावतारः इति सम्प्रतिपद्यामहे वयम् ।

*यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।*
*अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ।।*

इति भगवद्वचनं प्रमाणयताम् अस्माकं न खल्वयम् अवतारवादः चोद्यतां प्रतिपद्यते । भगवत्पादग्रन्थेष्वपि परामृष्टोऽयम् अवतारविचारः । तथाहि -

१. स्यात् परमेश्वरस्यापि इच्छावशात् मायामयं रूपं साधकानुग्रहार्थम् ।
-(सू. भा. १.१.२०)

२. स आदिकर्ता नारायणाख्यो विष्णुः भौमस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन कृष्णः किल सम्बभूव ।

३. स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा सम्पन्नः त्रिगुणात्मिकां स्वां मायां मूलप्रकृतिं वशीकृत्य अजः अव्ययः भूतानाम् ईश्वरः नित्यशुद्ध-बुद्धमुक्तस्वभावोऽपि सन् स्वमायया देहवानिव जात इव च लोकानुग्रहं कुर्वन् लक्ष्यते इति च ।।

- गीताभाष्यावतरणिका

तस्मात् अस्मदादयो मन्यन्ते यत् स भगवान् शङ्करः अवैदिकमतस्य अभ्युत्थानं विपर्यासेन वेदार्थव्याख्यानकौशलं च असहमानः वैदिकमतम् उद्दिधीर्षुः आञ्जस्येन वेदार्थं व्यवस्थापयितुं पूर्णानदीतीरे कालडिक्षेत्रे सुगृहीत-नाम्नः शिवगुरोः सतीदेव्याम् अंशेन किल शङ्कराचार्यः सम्बभूव इति । बृहदारण्यकभाष्ये (१.४.६) 'आवृत्तकृत्स्नोपाधिभेदापेक्षया तु सर्वं परत्वेन अभिधीयते श्रुतिस्मृतिवाक्यैः' इति भाषितवताम् आचार्याणां वचनमनुसन्दधानैः अस्माभिस्तु ब्रह्मात्मैकत्वमनुभवन्तो व्यावृत्तकृत्स्नोपाधिभेदाः आचार्याः परमात्मस्वरूपाः एवेति जोघुष्यते साम्प्रतम् ।

प्रकृते च श्रीमदाचार्यैः कृतो लोकोपकारः कीदृशः कियान् कतिधा चेति संक्षेपतो विचार्यते । तत्रायं प्राधान्येन विभागः -

१. अवैदिकदर्शनप्राबल्यपरिहारः
२. वैदिकाभासत्वेन प्रचुराणां दर्शनान्तराणां निराकरणम्
३. परिशुद्धौपनिषदसिद्धान्तस्य प्रतिष्ठापनम्
४. मोक्षशास्त्रे कर्मणो भक्तेश्च स्थानस्य निर्वचनम्
५. वैदिकधर्मस्य संरक्षणार्थं प्रचारार्थं च संश्रितो मार्गः इति ।

अवैदिकदर्शनेषु तावत् बौद्धदर्शनं जैनदर्शनं चेति द्वयं प्रामुख्येन उल्लेखम् अर्हति । नागार्जुन-दिङ्नाग-धर्मकीर्तिप्रभृतयो बौद्धविद्वांसो निशितैः तर्कैः वैदिकं कर्मकाण्डं ज्ञानकाण्डं च दूषयामासुः । एवं समन्तभद्र-सिद्धसेन-दिवाकरप्रभृतयो जैनपण्डिताः अपि जैनन्यायशास्त्रं प्रतिष्ठाप्य अनेकान्तवादं प्रबलयन्तो जीवानां विचित्रां शरीरप्रमाणतां ख्यापयन्तो वेदस्य प्रामाण्यं निराचक्रुः । कानिष्कप्रभृतीन् भूमिपालान् वशीकृत्य राजाज्ञया राजसंश्रयण-प्राबल्येन च अशेषे भरतखण्डे स्वीयं मतं विस्तार्य वैदिकधर्मनिष्कासनाय बद्धपरिकराः बभूवुः । एवं सर्वतः समाक्रान्ते वैदिकधर्मे उन्मूलितप्राये कर्मकाण्डे, तत्रभवद्भिः कुमारिलभट्टपादैः कियदुपकृतं वैदिकधर्मस्य कथं च प्रतिष्ठापितं प्रामाण्यं वेदस्य इति विदन्त्येव इतिहासविदः । भगवत्पादैस्तु, औपनिषदस्य ज्ञानकाण्डस्य प्रतिष्ठापनाय बद्धदीक्षैः अकम्प्ययुक्तिभूषितानि शारीरकसूत्रभाष्यादीनि प्रणीय परिष्कृतो वेदान्तमार्गः । शारीरकमीमांसायाः द्वितीयाध्यायस्य द्वितीयपादे 'सर्ववैनाशिकसिद्धान्तो नतराम् अपेक्षितव्यः

इतीदानीम् उपपादयामः' इत्यादिना 'सर्वथापि अनादरणीयोऽयं सुगतसमयः श्रेयस्कामैः' इति पर्यन्तं महता प्रबन्धेन दूषितो बौद्धसमयः । तत्रैव असम्भवाधिकरणे जैनसिद्धान्तं निराकृत्य 'सौगतवदर्हतामपि मतमसङ्गतम् इत्युपेक्षितव्यम्' इत्युपसंहृतम् ।

एवं वैदिकत्वेन प्रतीयमानान् द्वैतदृष्ट्या प्रवृत्तान् सांख्ययोगवैशेषिकादि-सिद्धान्तान् अपि प्रबलतराभिः युक्तिभिः दूषयित्वा आत्मैकत्वदर्शनमेव सकलश्रुतिस्मृतिसिद्धमिति प्रतिपादयामासुः भगवत्पादाः । अद्वैतदर्शनेऽपि च ज्ञानकर्मसमुच्चयवादादीन् अन्तर्भेदान् निरस्य परिशुद्धवेदान्तप्रक्रियां मुमुक्षु-जनहिताय दर्शयामासुः । परमार्थतो वेदान्तदर्शनं नाम अद्वैतदर्शनमेव । सांख्यादिदर्शनं तु द्वैतपरम् । वेदान्तदर्शनेऽपि द्वैतम्, विशिष्टाद्वैतमिति योऽयं भेदः इदानीं दृश्यते सोऽयं भगवत्पादानां काले नासीत् इति अवगम्यते । यतो हि भगवत्पादप्रणीतेषु भाष्यादिषु क्वचिदप्ययं नाघ्रातः । आहुश्च भगवत्पादाः बृहदारण्यकभाष्ये (१.१.२०)- 'सर्वोपनिषत्सु हि विज्ञानात्मनः परमात्मना एकत्वप्रत्ययो विधीयत इत्यविप्रतिपत्तिः सर्वेषामुपनिषद्वादिनाम्' इति ।

तदिदम् औपनिषदम् अद्वैतदर्शनं श्रीशङ्कराचार्यैः नैव अपूर्वतया स्वमेधा-परिकल्पितम् इति अस्माभिः प्रथमम् आकलनीयम् । अनादिपारम्पर्येण सम्प्रदायक्रमागतमिदं दर्शनम् । वक्तृतात्पर्यं हि शास्त्रार्थनिर्णये जीवितम् । तच्च सम्प्रदायेनैव गुरुमुखात् निर्णेतुं शक्यते न तु युक्त्या, युक्तीनाम् आनन्त्यात् । तर्कस्य अप्रतिष्ठानात् । यदाह भगवान् भर्तृहरिः -

*यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।*
*अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ।।* इति ।

अत एव भगवत्पादाः प्राहुः सम्प्रदायस्य अनुल्लङ्घनीयताम् अर्थनिर्णयकारित्वं च मन्वानाः -

१. असम्प्रदायवित् सर्वशास्त्रविदपि मूर्खवदुपेक्षणीयः इति गीताभाष्ये । (१२.२)
२. तथाहि सम्प्रदायविदां वचनम् - 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति । (गी. भा. १३.१३)
३. तथा च सम्प्रदायविदो वदन्ति इति । (सू. भा. १.४.१४)

४. अत्रोक्तं वेदान्तार्थसम्प्रदायविद्भिराचार्यैः (सू. भा. २.१.९) इति च सूत्रभाष्ये । 'सत्यमेवं गुरुसंप्रदायरहितानाम्' इति गीताभाष्ये (१९.२०) सम्प्रदायरहिताः उपहसिताः । अपि च समन्वयाधिकरणान्ते भाष्ये –

*गौणमिथ्यात्मनोऽसत्वे पुत्रदेहादिबाधनात् ।*
*सद्ब्रह्मात्माहमित्येव बोधे कार्यं कथं भवेत् ।।*

इत्यादि अद्वैतसिद्धान्तप्रतिपादकं प्राचीनानां ब्रह्मविदां गाथात्रयमुदाहृतम् । किञ्च तैत्तिरीयकभाष्यारम्भे –

*यैरिमे गुरुभिः पूर्वं पदवाक्यप्रमाणतः ।*
*व्याख्याताः सर्ववेदान्ताः तान्नित्यं प्रणतोऽस्म्यहम् ।।*

इति पूर्वाचार्यान् प्रणमद्भिराचार्यैः स्वग्रन्थस्य पूर्ववेदान्ताचार्यसम्प्रदायागतत्वं प्रदर्शितम् ।

कर्मानुष्ठानविषये भगवत्पादानां निर्णयः संग्रहेण एवमवगम्यते – अविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च । तस्मादविद्यापदपतितैः अस्माभिः शास्त्रविहितानि कर्माणि अनुष्ठेयान्येव । प्रतिषिद्धानि वर्जनीयानि । शास्त्रविहितप्रतिषिद्धातिक्रमेण प्रवर्तमानः अधर्मसंज्ञकानि कर्माणि उपचिनोति । ततः स्थावरान्ता अधोगतिः ।

तत्र कामनापुरःसरं कर्मानुतिष्ठन् देवान् यजमानः देवयाजी । तस्य स्वर्गादिप्राप्तिः फलम् । सर्वत्र परमात्मभावनपुरःसरं फलाभिसन्धिं वर्जयित्वा नित्यं कर्मानुतिष्ठन् आत्मयाजी । तस्य चित्तशुद्धिद्वारा मोक्षप्राप्तिः फलम् । अनयोः आत्मयाजी श्रेयान् । चित्तस्य शुद्धये कर्म, न तु वस्तूपलब्धये । विद्वद्विषया च सर्वकर्मसंन्यासपूर्विका ज्ञाननिष्ठा । अत एव अस्मान् प्रति –

*वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां*
*तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम् ।* इत्युपदेशसारः ।

ईश्वरानुग्रहसम्पादनाय भक्तियोगः उपदिष्टः शास्त्रेषु । सगुणोपासनाविशेषो हि भक्तियोगः । 'निर्गुणमपि सद् ब्रह्म नामरूपगतैर्गुणैः सगुणमुपासनार्थं तत्र तत्र उपदिश्यते । सर्वगतस्यापि ब्रह्मणः उपलब्ध्यर्थं स्थानविशेषो न विरुध्यते शालग्रामः इव विष्णोः' इति वदन्ति भगवत्पादाः । (सू. भा. १.२.१४) 'नहि अविकारे अतन्त्रे ब्रह्मणि सर्वैः पुम्भिः शक्या बुद्धिः स्थापयितुं मन्द-

मध्यमोत्तमबुद्धित्वात् पुंसाम्' (सू. भा. ३.२.३३) इत्यादिवचनसन्दर्भैः सगुणोपासनं समर्थितं च । तच्च मन्दमध्यमाधिकारिणां परमेश्वरानुग्रह-सम्पादनार्थं चित्तशुद्ध्यादिकं चावश्यकम् । 'ईश्वरानुग्रहादेव पुंसामद्वैतवासना ।' अत एव लोकानुग्रहार्थमाचार्यैः भक्तिरसपेशलानि भूयांसि स्तोत्राणि प्रणीतानि । भजगोविन्दं भज गोविन्दं भज गोविन्दं मूढमते, लक्ष्मीनृसिंह मम देहि करावलम्बम्, क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो....... इत्यादिभक्तिरसनिर्भराणि स्तोत्राणि केन वा न पठितानि नास्वादितानि ?

अत्रायं विशेषः । शिवपारम्यं विष्णुपारम्यमित्यादिविवादो न संमतो भगवत्पादानाम् । प्रायः सर्वाः अपि देवताः प्रकृत्य तैः स्तोत्राणि विरचितानि । शिवानन्दलहरीप्रभृतीनि शिवपराणि, हरिमीडेप्रभृतीनि विष्णुपराणि, सौन्दर्य-लहरीप्रभृतीनि देवीपराणि - एवं गणेशपञ्चरत्नम्, सुब्रह्मण्यभुजङ्गम्, गङ्गाष्टकं, यमुनाष्टकम् इत्यादीनि च सर्वत्र सर्वात्मताभावं प्रकटयन्ति । सर्वप्रतीकेष्वपि एकस्यैव परमेश्वरस्य सान्निध्यं भक्ताभिरुचिभेदेन नामरूपगुणवैविध्यं द्योतयन्ति । यथोक्तम् अप्पय्यदीक्षितेन्द्रैः -

*ईशो वा केशवो वा श्रुतिशिखरगिरामस्तु तात्पर्यभूमिः ।*
*नास्माकं तत्र वादः प्रसरति किमपि स्पष्टमद्वैतभाजाम् ॥*

इति । अपि च स्वान् गुरून् प्रति कियती भक्तिराचार्याणाम् !! विवेक-चूडामणेरारम्भे -

*सर्ववेदान्तसिद्धान्तगोचरं तमगोचरम् ।*
*गोविन्दं परमानन्दं मद्गुरुं प्रणतोऽस्म्यहम् ॥*

इति गुरूणां गोविन्दभगवत्पादानां वन्दनं कृतम् । सद्गुरुरूपेण वेदान्तप्रसिद्धः परमेश्वरः एव अवतीर्णः इति भक्त्यतिशयो दर्शितः । माण्डूक्यकारिका-विवरणान्ते परमगुरून् श्रीगौडपादाचार्यान् प्रणमन्तो वदन्ति -

*प्रज्ञावैशाखमन्थक्षुभितजलनिधेर्वेदनाम्नोऽन्तरस्थं*
*भूतान्यालोक्य मग्नान्यविरतजननग्राहघोरे समुद्रे ।*
*कारुण्यादुद्दधारामृतमिदममरैर्दुर्लभं भूतहेतोः*
*यस्तं पूज्याभिपूज्यं परमगुरुमहं पादपातैर्नतोऽस्मि ॥* इति ।

अत्र देवैः उद्धृतम् अमृतं संसारसमुद्रात् जनान् उद्धर्तुम् असमर्थमिति व्यतिरेकमुखेण ज्ञानामृतस्य गरीयस्त्वं दर्शितम् । देवाः स्वार्थाय अमृतं ममन्थुः, परमगुरवस्तु परोपकाराय ज्ञानामृतं ममन्थुरिति श्रीगौडपादाचार्याणां परम-कारुणिकत्वम् अभिव्यञ्जितम् । अत एव पादपातैर्नतोऽस्मि इत्यत्र पाद-पातैरिति बहुवचनं भक्तेः आधिक्यं ध्वनयितुम् । उक्तश्च वक्रोक्तिनिपुणैः नीलकण्ठदीक्षितैः -

*दृष्ट्वा कौस्तुभमप्सरोगणमपि प्रक्रान्तवादा मिथो*
*गीर्वाणाः कति वा न सन्ति भुवने भारा दिवः केवलम् ।*
*निष्क्रान्ते गरले द्रुते सुरगणे निश्चेष्टिते विष्टपे*
*मा भैष्टेति गिराविरास भुवि यो देवस्तमेव स्तुमः ।।* इति ।

अङ्गीकृतमहाकार्यनिर्वहणव्यग्रैरप्याचार्यैः लोकसंग्रहार्थं जनन्याः अन्तकाले समुपस्थाय कीदृशी मातृभक्तिः प्रदर्शिता इति विदितमेव सर्वेषाम् ।

एवं भक्तियोगकर्मयोगयोरनुष्ठानरूपः प्रवृत्तिलक्षणो धर्मः प्राणिनां साक्षात् अभ्युदयहेतुः निःश्रेयसार्थिनां परम्परया निःश्रेयसहेतुरिति व्यवस्थापितम् ।

प्रस्थानत्रयभाष्यरचनयापि अपरितुष्यद्भिः आचार्यैः अपरोक्षानुभूति-विवेकचूडामणि-उपदेशसाहस्त्रीप्रभृतयः प्रकरणग्रन्थाः साधकानुग्रहार्थं प्रणीताः । एतादृशैः महाप्रयत्नैः परिशुद्धवेदान्तप्रक्रियां व्युत्पाद्य संप्रदायशुद्धम् औपनिषदमद्वैतदर्शनं सुप्रतिष्ठापितम् । भारतीयधर्मेतिहासेषु सम्पादितः अप्रतिमोऽयं लोकोपकारः सर्वैरपि वेदप्रामाण्यमभ्युपगच्छद्भिः आस्तिकलोकैः अभिनन्दनीयः ।

ततश्च श्रीभगवत्पादैः आलोचितम् - मया पुनः स्थापितोऽयं वैदिकधर्मः भरतखण्डे कथं नु शश्वत् स्थास्यतीति । निवृत्तस्वपरव्यामोहैः परमहंस-परिव्राजकैरेव पोष्यमाणः प्रचार्यमाणश्च धर्मः चिरं स्थास्यतीति निश्चित्य भरतखण्डस्य चतसृषु दिशासु चतुरो मठान् स्थापयामासुरिति प्रथितोऽयं वृत्तान्तः । विशेषतश्च स्वावासपवित्रीकृते शृङ्गगिरिक्षेत्रे श्रीशारदाम्बां स्वयं प्रत्यष्ठापयन् इति माधवीयश्रीशङ्करदिग्विजयात् अधिगम्यते । तथाहि तत्रत्यं श्लोकद्वयम् -

*प्रकल्प्य तत्रेन्द्रविमानकल्पं प्रासादमाविष्कृतसर्वशिल्पम् ।*

*प्रवर्तयामास स देवतायाः पूजामजाद्यैरपि पूजितायाः ।। १ ।।*
*या शारदाम्बेत्यभिधां वहन्ती कृतां प्रतिज्ञां प्रतिपालयन्ती ।*
*अद्यापि शृङ्गेरिपुरे वसन्ती प्रद्योततेऽभीष्टवरान् दिशन्ती ।। २ ।।*

- शं. दि. १२.६८.६९

इदानीं सहस्राधिकेषु संवत्सरेषु व्यतीतेष्वपि श्रीशृङ्गेरीमहासंस्थानमधितिष्ठन्तो यतीन्द्राः स्वयं स्वाराज्ये रममाणाः अपि लोकानुग्रहार्थं भगवत्पादोपदिष्टेन पथा सम्प्रदायं परिपालयन्तो वैदिकधर्मं संरक्षन्तः अस्मादृशान् वैदिकधर्मे प्रवर्तयन्तः, प्रवृत्तान् पोषयन्तः, पोषितान् शास्त्ररहस्यार्थबोधनेन कटाक्षयन्तः कटाक्षितान् ब्रह्मविद्योपदेशेन अनुगृह्णन्तो राराजन्तीति सर्वजनप्रत्यक्षोऽयमर्थो न पुनरुक्ततामर्हति ।

अहो अपूर्वा दूरदृष्टिः श्रीशङ्कराचार्याणाम् अन्यत्र अश्रूतपूर्वो वैदिकधर्म-पक्षपातः अप्रतिमं सङ्घटनसामर्थ्यम् ।

एतावता प्रबन्धेन श्रीशङ्करभगवत्पादैः कृतो लोकोपकारो लेशेन कीर्तितः । नान्तरीयकतया सम्पादितः संस्कृतभाषोपकारः इदानीं कीर्तनीयतामर्हति । भाष्यादिग्रन्थप्रणयनेन स्तोत्रकदम्बकनिबन्धनेन च सुष्ठु प्रसाधिता सुर-सरस्वती । पुष्टिमापादिता वाङ्मयश्रीः । तर्ककर्कशार्थेष्वपि तत्प्रणीतभाष्येषु समुल्लसन्ति साहित्यसौरभसुभगाः प्रसन्न गम्भीराः वाग्विलासाः । काश्चिदेव अत्र सूक्तयः प्रदर्श्यन्ते -

**१. ऐतरेयोपनिषद्भाष्ये तावत्** - कश्चित् किल मनुष्यो मुग्धः कैश्चिदुक्तः कस्मिंश्चिदपराधे सति धिक् त्वां, नासि मनुष्य इति । स मुग्धतया आत्मनो मनुष्यत्वं प्रत्याययितुं कञ्चिदुपेत्याह - 'ब्रवीतु भवान् कोऽहमस्मि' इति । स तस्य मुग्धतां ज्ञात्वा आह - 'क्रमेण बोधयिष्यामि' इति । स्थावराद्यात्म-भावमपोह्य 'न त्वम् अमनुष्यः' इत्युक्त्वा उपरराम । स तं मुग्धः प्रत्याह - 'भवान् मां बोधयितुं, प्रवृत्तः तूष्णीं बभूव, किं न बोधयति' इति । तादृगेव तद्भवतो वचनम् ।

**२. तैत्तिरीयकभाष्ये** - चिन्तयसि त्वं, न तु निर्णेष्यसि । किं न निर्णेतव्यमिति वेदवचनम् ? न । कथं तर्हि ? बहुप्रतिपक्षत्वात् । एकत्ववादी त्वम् । वेदार्थ-परत्वात् । बहवो हि नानात्ववादिनो वेदबाह्याः त्वत्प्रतिपक्षाः । अतो ममाशङ्का

न निर्णेष्यसीति । एतदेव मे स्वस्त्ययनं यन्मामेकयोगिनं अनेकयोगि बहु-प्रतिपक्षमात्थ । अतो जेष्यामि सर्वान् । आरभे च चिन्ताम् ।

**३. (अध्यासभाष्ये) सूत्रभाष्ये** – पश्वादिभिश्चाविशेषात् । यथा हि पश्वादयः शब्दादिभिः श्रोत्रादीनां सम्बन्धे सति शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्तन्ते, अनुकूले च प्रवर्तन्ते । यथा दण्डोद्यतकरं पुरुषम् अभिमुखमुपलभ्य मां हन्तुमयमिच्छतीति पलायन्ते, हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखी-भवन्ति । एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीन् आक्रोशतः खड्गोद्यतकरान् बलवत उपलभ्य ततो निवर्तन्ते, तद्विपरीतान् प्रतिप्रवर्तन्ते । अतः समानः ग-पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारः ।

**४.** एवं 'न हि पद्भ्यां पलायितुं पारयमाणो जानुभ्यां रंहितुमर्हति इत्यादि भूयांसि सन्त्युदाहरणानि ।

एतादृशीं मधुरमधुराम् आचार्याणां वचनरचनाचातुरीम् अनुशील्य श्रीशङ्कर-दिग्विजयकाराः व्याहरन् –

*विद्वज्जालतपःफलं श्रुतिवधूधम्मिल्लमल्लीस्रजं*
*सद्वैयासिकसूत्रमुग्धमधुरागण्यातिपुण्योदयम् ।*
*वाग्देवीचिरभोग्यभाग्यविभवप्राग्भारकोशालयं*
*भाष्यं ते निपिबन्ति हन्त न पुनर्येषां भवे सम्भवः ।।* इति ।

अत एव भामतीकाराः –

*आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् ।*
*रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति ।।*

इत्यवोचन् । श्री शङ्करभगवत्पादाः कमनीयकवितानिर्माणनिपुणाः कवि-कुलमूर्धन्याः एव । यथोक्तं सौन्दर्यलहर्याम् –

*दयावत्या दत्तं द्रविडशिशुरासाद्य तरसा*
*कवीनां प्रौढानामजनि कमनीयः कवयिता ।।* इति ।

शिवापराधक्षमापणस्तोत्र-श्रीदक्षिणामूर्तिस्तोत्र-शिवानन्दलहरी-सौन्दर्य-लहरी-भजगोविन्दस्तोत्रादीनि शास्त्रार्थगर्भाण्यपि मनोहराणि काव्यानि । 'यद्यत् कर्म करोमि तत्तदखिलं शम्भो तवाराधनम्' इत्यादयः काव्यकमनीयता-परिमलवाहिनो भक्तिकुसुमाञ्जलयः स्मरणीयाः । मधुरपदललितोऽयं श्लोकः

शिवानन्दलहर्याम् -

*गभीरे कासारे विशति विजने घोरविपिने*
*विशाले शैले च भ्रमति कुसुमार्थं जडमतिः ।*
*समर्प्यैकं चेतःसरसिजमुमानाथ भवते*
*सुखेनैव स्थातुं जन इह न जानाति किमहो ।।*

अन्वर्थनाम्नी च सौन्दर्यलहरी यत्र काव्यसौन्दर्यलहरी परां काष्ठां प्रापिता । देवीं सम्बोधयन्तो भगवत्पादाः वदन्ति - 'हे जननि ! तव कर्णाभरणस्य ताडङ्कयुगलस्य महिमा न शक्यते वर्णयितुम् । यस्मात् -

*सुधामप्यास्वाद्य प्रतिभयजरामृत्युहरणीं*
*विपद्यन्ते विश्वे विधिशतमखाद्या दिविषदः ।*
*करालं यत् क्ष्वेलं कवलितवतः कालकलना*
*न शम्भोः तन्मूलं तव जननि ताटङ्कमहिमा ।।*

मातः सर्वा अपि इमाः मदीयत्वेन अध्यवसिताः वाचः त्वदीयाः एव । यथा -

*प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः*
*सुधासूतेश्चन्द्रोपलजललवैरर्घ्यरचना ।*
*स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं*
*त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम् ।।*

'प्रकृतिमधुरा भारविगिरः' इति यदुच्यते तत्र प्रकृतिमधुराः शङ्करगिरः इति यद्युच्येत तर्हि आञ्जस्येन श्लिष्यते ।

*वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यस्तदन्यः ।*

अद्य मे कश्चन श्लोकः स्मृतिपथम् अवतरति । श्रीरामानन्दयतिवरेण्याः सूत्रभाष्यस्य भाष्यरत्नप्रभानाम्नीं व्याख्याम् अतन्वन् । ताश्च स्वेष्टदेवतायै श्रीरामचन्द्राय समार्पिपन् । समर्पणप्रकारः कीदृश्या वैदग्ध्यभङ्गीभणित्या निरूपितः इति पश्यन्तु भवन्तः -

*वक्षस्यक्ष्णोश्च पार्श्वे करतलयुगले कौस्तुभाभां दयाश्च*
*सीतां कोदण्डमुद्रामभयवरयुतां वीक्ष्य रामाङ्गसङ्गः ।*
*स्वस्याः क्व स्यादितीयं हृदि कृतमनना भाष्यरत्नप्रभाख्या*

*स्वात्मानन्दैकलुब्धा रघुवरचरणाम्भोजयुग्मं प्रपन्ना ॥*

एवं श्रीभगवत्पादाः श्रीशारदाम्बाकर्णपूरायमाणान् शास्त्रग्रन्थान् स्तोत्रग्रन्थान् च निर्माय सम्यगाराधयामासुः सुरसरस्वतीम् । कृपया च तस्याः सर्वज्ञपीठमपि तैरधिरूढमिति नैतच्चित्रम् । अल्पावधिस्तु श्रूयते तेषां जीवितकालः । यानसौकर्यशून्ये तस्मिन् काले दुस्सञ्चरेषु मार्गेषु आसेतुशीताचलम् आकाश्मीर-जगन्नाथं पादचारेण चरन्तः नास्तिकमतस्य नास्तित्वमापादयन्तः, अवैदिकमतम् उन्मूलयन्तः शिष्यान् बोधयन्तः, ग्रन्थान् प्रणयन्तः, मठान् स्थापयन्तः, शरीर-श्रमम् अगणयन्तः भगवत्पादाः महान्तं प्रयत्नम् आतस्थिरे धर्मसंरक्षणार्थम् । अल्पीयसा कालेन असम्भाव्यमिदं महाकार्यं साधितमिति चित्रीयते चेतः । ईदृशमद्भुतं कार्यमन्येन केनचिदनुष्ठितं नाकर्ण्यते कल्पितकथास्वपि किमुत इतिहासेषु । आश्चर्यपरम्परा केयम् ?

*अष्टवर्षे चतुर्वेदी द्वादशे सर्वशास्त्रवित् ।*
*षोडशे कृतवान् भाष्यं द्वात्रिंशे मुनिरभ्यगात् ॥*
*यावत् स्थास्यन्ति गिरयः सरितश्च महीतले ।*
*तावत् श्रीशङ्करकथा लोकेषु प्रचरिष्यति ॥*

★ ★ ★

# ११. गरिमा जगद्गुरूणाम्

## (१९९१ वर्षे प्रकाशितायाः जगद्गुरुश्रीभारतीतीर्थ-महास्वामिनां संन्यासस्वीकाररजतोत्सवस्मारिकायाः समुद्धृतं लेखनम्)

अशेषवैदिकवृन्दवन्द्यमानचरणारविन्दैः अकलङ्ककीर्तिचन्द्रिकाप्रसादित-दिक्चक्रवालैः, करकमलामलकायितनिखिलविद्यास्थानैः आचन्द्रादित्यस्थायि-परिशुद्धतत्त्वोपदेशसामर्थ्यसमासादितजगद्गुरुपदाभिधानैः, अधर्मविधर्मदूरी-करणपूर्वकवैदिकधर्मस्थापनासम्पादितानन्यस्पृष्टभगवत्पादपदकालङ्कृतैः श्री-शङ्करभगवत्पादाचार्यैः प्रतिष्ठापितं श्रीशृङ्गेरीश्रीशारदापीठं, यमनियमाद्यनुष्ठान-सम्प्राप्ततेजोविशेषैः असाधारणतपोविद्याबलैः श्रीसुरेश्वराचार्यश्रीविद्यारण्य-महास्वामिप्रभृतिभिः अलङ्कृतं कदाचिदप्यतदर्हैः अनधिष्ठितं, तादृशैरेव श्रौत्रार्हन्तीचणैः गुण्यैः अविच्छिन्नगुरुशिष्यपरम्पराप्राप्तयतीश्वरैः श्रीभारती-तीर्थमहास्वामिभिः अधिष्ठितं वरीवृत्यते इति युक्तरूपो महानानन्दसन्दोहो भक्तवृन्दानाम् ।

श्रीभारतीतीर्थमहास्वामिनां गुरवः खलु प्रातःस्मरणीयचरणाः श्रीमदभिनव-विद्यातीर्थमहास्वामिनः अधुना ब्रह्मभूयङ्गताः । तैश्च दीर्घं पर्यालोच्य अभिमानेन वात्सल्येन कारुण्येन आत्मतृप्त्या च श्रीशारदापीठस्य उत्तराधिकारित्वेन निर्दिश्य इमे शिष्यत्वेन परिगृहीताः । एषां संन्यासदीक्षा च यथाविधि निर्वर्तिता । श्री-भारतीतीर्थमहास्वामिनां संन्यासस्वीकारात् परं पञ्चविंशतिः वर्षाणि व्यतीयुः, सिंहासनारोहात् परं दश वर्षाणि चेति द्विगुणितो भवत्युत्सवो भक्तजनानाम् । श्रीभारतीतीर्थमहास्वामिनां जगद्गुरूणां प्राक्तनब्रह्मचर्याश्रमसम्बन्धिविचारः किञ्चिदिह प्रस्तूयते वाचकजनकौतुकनिवृत्तये ।

आन्ध्रराज्यस्थितगुण्टूरुविभागे नरसरावुपेटनामकं पत्तनं विद्यते वेदविदां निवासभूमिः । तत्पत्तनम् अध्यूषुषोः पवित्राचारयोः विप्रदम्पत्योः अनन्तलक्ष्मी-वेङ्कटेश्वरावधानिनामधेययोः अपत्यत्वेन ववृधे श्रीमान् सीतारामाञ्जनेयनामा वटुः । एकपञ्चाशदुत्तरे एकोनविंशतिशततमे (१९५१) क्रिस्तीये वर्षे समभूदस्य वटोः जननम् । पैतृकं धनमिव बिभ्राणोऽयं श्रौतं तेजः, बाल्ये एव संस्कृतम् अधीयानो गर्भाष्टमे वर्षे पितृभ्यां कृतोपनयनसंस्कारः श्रितजन्मान्तरीयसंस्कारश्च वेदाध्ययने न्ययोजयद् आत्मानम् । अन्वर्थं खल्विदं सीतारामाञ्जनेयः इति नामधेयं तस्य वटोर्दैवाद् उपनतम्, यदस्य सीतायाः इव सौशील्ये, श्रीरामस्य इव सत्यवचने, आञ्जनेयस्य इव कर्मनिष्ठायाम् आदरातिशयः समैधत ।

तस्य दशमे वयसि श्रीशृङ्गेरीजगद्गुरूणां श्रीमदभिनवविद्यातीर्थमहास्वामिनां प्रथमं दर्शनं नरसरावुपेटनाम्नि पत्तने एव प्राप्तं भाविमङ्गलावाप्तिनिदानम् । श्रीजगद्गुरुभिः श्रीचन्द्रमौलीश्वरपूजायाम् अनुष्ठीयमानायां प्रतिदिनं श्रीसीता-रामाञ्जनेयः समुचितवैदिकमन्त्रान् सुस्वरं सधैर्यं पठन्नासीत् । वेदाक्षराणां स्फुटोच्चारणेन ध्वनिमाधुर्येण सौस्वर्येण च सुप्रीता बभूवुः जगद्गुरवः । समभाषन्त च वटुना तेन सह संस्कृतभाषया । दशवर्षदेशीयस्य तस्य वटोः संस्कृतभाषाज्ञानम् अभिनन्दनीयं श्रीचरणानां प्रीतये बभूव । अनुगामिनि वत्सरे च विजयवाटिकां गतानां महास्वामिनां दर्शनार्थं केनाप्यान्तरेण दैवेन प्रेरितो वटुः सीतारामाञ्जनेयो गत्वा जगद्गुरून् प्रणनाम । सन्तुष्टाश्च महास्वामिनः समुचितपारितोषिकप्रदानेन एनम् अन्वग्रहीषुः ।

ब्रह्मचारिणोऽस्य पञ्चदशे वर्षे पुनरपि श्रीचरणानां दर्शनं बभूव नरसरावु-पुर्याम् । तदुत्तरं श्रीगुरूपसदनार्थमेव वटुरयम् उज्जयिनीं गतवान् । पूज्यश्रीजगद्गुरु-महास्वामिनां चातुर्मास्यव्रतारम्भसमयः स आसीत् । अस्मिंश्च वटौ किमपि वात्सल्यं धारयमाणाः आचार्यपादाः चातुर्मास्यसमये तर्कसंग्रहं दीपिकां च तं बालम् अध्यापयामासुः । अध्ययनपटोरस्य वटोः बुद्धिकौशलं ग्रहणधारण-शक्तिञ्च अवेक्ष्य विस्मिताः सस्मिताश्च भूत्वा जगद्गुरवः काश्मीरादिदेशान् जिगमिषवः स्वानुगमनाय वटुमिमम् आदिदिशुः । असौ च श्रीजगद्गुरुपादानुसारी यथाशक्ति च तान् शुश्रूषमाणः विभिन्नराज्येषु अनुजगाम । ततः श्रीशृङ्गेरीक्षेत्रं न्यवर्तन्त महास्वामिनः प्रियशिष्येण वटुना सह । तर्कादिशास्त्रेषु वटोः प्रौढम् अध्ययनं सततम् अन्ववर्तत ।

एवम् अष्ट वर्षाणि सूक्ष्मेक्षिकया परीक्षिते अन्तेवासिनि, तस्य निष्ठां वेदेषु, प्रतिष्ठां शास्त्रेषु, सक्तिं शिष्टाचारेषु, भक्तिं गुरुजनेषु, शक्तिं क्लेशसहनेषु, विरक्तिं भोगेषु, रागं वेदान्ते, अनुरागं गुरुसेवायाम् , त्यागं सुखसम्भारे, योगं तपोनुष्ठाने च अनुवीक्ष्य श्रीमदभिनवविद्यातीर्थपादाः स्वोत्तराधिकारित्वेन श्रीशृङ्गेरीजगद्गुरुश्रीशारदापीठम् अधिष्ठातुम् अर्हत्वेन निरणैषुः । अमुञ्च निर्णयं आनन्दसंवत्सरे (१९७४) प्रवृत्तनवरात्रोत्सवान्ते भक्तजनहर्षणाय प्रकटयामासुः । गभीरस्वरघोषितमिदं श्रीमज्जगद्गुरूणां, मेघगर्जितमिव मायूराणि, निखिलभक्तवृन्दानि श्रुत्वा हर्षभरेण विकसितनेत्राणि अभिननन्दुः । तस्मिन्नेव वत्सरे आश्वयुजकृष्णद्वादश्यां सुमुहूर्ते सर्वतः समागतानाम् आस्तिक-जनानां समक्षं श्रीसीतारामाञ्जनेयनामानम् इमं ब्रह्मचारिणं यथाशास्त्रं निर्वर्तित-संन्यासाङ्गकर्मानुष्ठानं संन्यासदीक्षया वर्धयामासुः तत्रभवन्तः श्रीमज्जगद्गुरु-पादाः । श्रीभारतीतीर्थः इति दीक्षानामधेयञ्च अस्य विदधुः । साधु खल्विदम् उक्तम् – 'प्रसन्नानां वाचः फलमपरिमेयं प्रसुवते' इति । वटुः श्रीसीतारामाञ्जनेयश्च

काषायवस्त्रसंवीतो वीतकाषायवासनः ।
सीतारामं स्मरन्नित्यमाञ्जनेय इवाबभौ ।।

इति पूर्वाश्रमचरितसंक्षेपः ।

ततः परं श्रीमदभिनवविद्यातीर्थमहास्वामिभिः संन्यासिनाम् अनुष्ठानपद्धतिः, श्रीशृङ्गेरीमहासंस्थाने सञ्चलितः साम्प्रदायिको व्रतपूजाद्यनुष्ठानक्रमः, आयव्ययादिधनसम्बन्धिव्यवहारः इत्यादिकं मठाधिपतिभिः अवश्यं वेदनीयं सर्वमपि बालयतीन्द्राः क्रमेण बोधिताः । शृङ्गेरीक्षेत्राच्च यत्र यत्र महास्वामिनां प्रवासयात्रा बभूव तत्र तत्र बालयतीन्द्राः गुर्वाज्ञया अनुगच्छन्तः अशेषां मठीयकार्यनिर्वहणपद्धतिम् अवेदिषुः । पुरस्ताच्च गुरूणां प्रवृत्तासु सभासु धार्मिकप्रवचनानि अकुर्वन् । औत्तराहेषु दाक्षिणात्येषु च देशेषु सञ्चरन्तः श्रीभारतीतीर्थपादाः हिन्दीतमिल्केरलभाषास्वपि प्रावीण्यम् अवाप्य आन्ध्र-कर्णाटकभाषयोः स्वाभाविकेन पाण्डित्येन, सर्वतः स्वाधीनेन संस्कृतभाषा-वैदुष्येण च सप्तसु भाषाभूमिकासु निरर्गलभाषणसमर्थाः व्यराजन्त ।

श्रीभारतीतीर्थमहास्वामिनां संन्यासदीक्षाप्रवेशात्परं पूज्ययोः गुरुशिष्ययोः भक्तिवात्सल्यरूपे प्रेमणि नितरां वर्धमाने पञ्चदश संवत्सराः व्यतीयुः । ततश्च

शुक्लसंवत्सरे भाद्रपदकृष्णसप्तम्यां (२१.९.१९८९) परमपूज्याः श्रीमदभिनवविद्यातीर्थपादाः ब्रह्मसायुज्यं प्रयाताः । ततः पश्चात् गुरुतम-गुरुविरहसन्तप्तानामपि श्रीभारतीतीर्थमहास्वामिनां साम्प्रदायिकः पट्टाभिषेक-महोत्सवः तस्मिन्नेव वर्षे आश्विनकृष्णपञ्चम्यां (१९.१०.१९८९) विधिवद्वैभवेन निर्वर्तितः । शृङ्गगिरौ श्रीमच्छङ्करभगवत्पादाचार्यप्रवर्तितायां परम्परायामिमे श्रीभारतीतीर्थमहास्वामिनः क्रमसंख्यया षट्त्रिंशत्तमाः इति वेदितव्यम् । इदमस्ति विस्मयस्थानं यदस्मिन् शारदापीठे विराजिताः विराज-मानाश्च सर्वेऽपि यतीश्वराः पारङ्गताः वेदेषु, निष्णाताः शास्त्रेषु, वाग्मिनः तेजस्विनः तपस्विनः करणत्रयशुचिमन्तो धर्मरक्षणदीक्षिताः दीनानुकम्पिनः स्वाधीनसिद्धयश्च इति । महाकविकालिदासेन रघुवंशमहाकाव्ये 'दिनान्ते निहितं तेजः सवित्रेव हुताशनः' इति वर्णितरीत्या भौतिकशरीरात् निर्याणसमये श्रीशारदापीठाधिपैः यतीश्वरैः उत्तराधिकारियतिषु संक्रामितं भवति स्वकीयं तेजः इति तर्कयामः ।

तस्मिंश्च पट्टाभिषेकमहोत्सवे श्रीभारतीतीर्थमहास्वामिभिः भाषितम् - 'अस्मदीयगुरुवर्याणां परमपूज्ये पादपद्मे भक्त्या स्मरन्तो वयम् अभिदध्महे यत् अस्माभिः अनुष्ठास्यमानेषु सर्वेष्वपि कर्तव्यकर्मसु तेषां पुण्यस्मृतिः मार्गदर्शनं क्रियात् । अस्मदीयाचार्यपरम्परा, हृदयदेशस्थिताश्च अस्मदीयगुरवः, आराध्य-देवता श्रीचन्द्रमौलीश्वरः, जगन्माता श्रीशारदाम्बा च समुचिते पथि नयन्त्वस्मान्, कार्यनिर्वहणसामर्थ्यञ्च देयासुरिति भक्तिपूर्वकं नामं नामं प्रार्थयामहे' इति । किमपरम् इतोऽपि उचिततरम् अभिधातुं शक्यते यत्नवतापि प्रज्ञावता ?

ब्रह्मभूयंगतैः महास्वामिभिः यच्च यच्च कार्यं जनहिताय समारब्धम् उद्दिष्टं वा, तच्च तच्च तदधिकम् अन्यच्च श्रीभारतीतीर्थयतीश्वरैः अनुष्ठितम् । तत्स्थानापन्नः तद्धर्मं लभते इति हि न्यायः । श्रीगुरुवर्यैः तुङ्गानद्याः सेतुनिर्माणं पूर्वम् आरब्धं पूरितम् उद्घाटितं श्रीविद्यातीर्थसेतुः इति नामकरणञ्च कृतम् । सिंहासनारोहणाद् अनन्तरं गतेषु दशसु वर्षेषु श्रीभारतीतीर्थमहास्वामिभिः साधितानि कार्यजातानि यथामति संगृह्य निर्दिश्यन्ते अधस्तात् ।

☛ नृसिंहवने सद्विद्यासञ्जीविनीसंस्कृतमहापाठशालायाः नूतनं भवनम् (इदं भवनं प्राचीनवास्तुशिल्पमार्षं गुरुकुलञ्च स्मारयति । द्रष्टव्यमेतत् ।)

☛ नूतनविद्यार्थिनिलयो नृसिंहवने ।

☛ श्रीशारदाकृपा, यात्रिनिवासश्चेति विशालम् अतिथिगृहद्वयम् ।

☛ श्रीशारदाम्बायाः मनोज्ञः सुवर्णरथः ।

☛ आयुर्वेदचिकित्साविशिष्टो धन्वन्तरिवैद्यालयः ।

☛ बहुविस्तृता नूतनभोजनशाला पाकशाला च ।

☛ सानुबन्धसामवेदसंहिताप्रकाशनम् ।

☛ स्वग्रामे स्वगृहे एव शास्त्राणि अध्यापयतां समर्थपण्डितानां मासिकवेतन-प्रदानयोजना ।

☛ हैदराबादप्रभृतिषु युक्तस्थलेषु सवेदसंस्कृतपाठशालास्थापनम् ।

☛ द्वात्रिंशद्वितस्तिसमुच्छ्रितायाः (३२ feet height) श्रीशङ्कराचार्यशिलामूर्तेः स्थापना (भाविनी) इत्यादीनि ।

प्रत्यहं प्रवाहरूपेण समागच्छतां क्षेत्रदर्शिनां संमर्देन मठपरिसरे कश्चिदुत्पन्नो नूतनः शोभातिशयः । रघुमहाराजे पट्टाभिषिक्ते सति नवे तस्मिन् महीपाले सर्वं नवमिव अभवत् इत्याह महाकविः कालिदासः, तमनुसृत्य वयमिदानीं 'नवे तस्मिन् यतीशाने सर्वं नवमिवाभवत्' इति प्रमोदेन उच्चैः अभिदध्महे ।

प्रतिसंवत्सरं भाद्रपदमासे विनायकचतुर्थीम् आरभ्य पूर्णिमापर्यन्तं श्री-महागणपतिवाक्यार्थसभा दीर्घेण कालेन श्रीशारदापीठाश्रये प्रवर्तमाना प्रवर्धमाना च विद्यते इत्यस्ति विशेषः । सभा च इयं परमपूज्यश्रीजगद्गुरूणाम् आध्यक्ष्ये यथाविधि प्रवर्तते । तर्कव्याकरणपूर्वमीमांसावेदान्तेषु चतुर्षु शास्त्रेषु वाक्यार्थाः प्रचलन्ति । शास्त्रेषु कञ्चन विषयमधिकृत्य पूर्वपक्षप्रतिपादनपूर्वकं सिद्धान्तस्य निरूपणं वाक्यार्थः इति पण्डितगोष्ठीव्यवहारः । औत्तराहाः दाक्षिणात्याश्च विपश्चितः शास्त्रेषु कृतपरिश्रमाः सभायाम् उपस्थाय वाक्यार्थ-निरूपणे भागिनो भवन्ति । अध्यक्षस्थानम् अलङ्कुर्वद्भिः महास्वामिभिः आदिश्यमानो विद्वान् स्वाभिमतं वाक्यार्थम् आरभेत । प्रस्तूयमानशास्त्रे निष्णाताः अन्ये यथारुचि समीचः प्रश्नान् कुर्युः । शङ्काश्च उत्थापयेयुः । समञ्जसम् उत्तरदानं निरूपकविद्वदायत्तम् । प्रश्नोत्तरयोः सामञ्जस्यं सभाध्यक्षैः जगद्गुरुभिः परिशील्यते सर्वत्र । एवं प्रतिदिनं सर्वशास्त्राणां पर्यायेण परिशीलनं

भवति । सर्वत्र सभानियमः पालनीयः । सभामर्यादा न कदाचिदुल्लङ्घनीया । न कस्यापि विदुषः तेजोवधो भवेदित्यस्ति नियमः । अन्ते च वैदिकैः वेदघोषाः, श्रीमहागणपतेः मङ्गलनीराजनं, प्रसादविनियोगश्च ।

एवं प्रतिदिवसं सायं प्रवर्तमानाः सभाः पूर्णिमायां समाप्तिम् उपयान्ति । तदानीं समाहूतस्य अतिथिमहोदयस्य भाषणं विशेषः । ततो महास्वामिनाम् आशीर्वचनं संस्कृतभाषया भवति । निरर्गलया परिशुद्धया वाचा प्रवर्तमानमदो भाषणं समस्तपण्डितजनैः अवहितैः प्रमुदितैश्च सकुतूहलम् आकर्ण्यते । भवति चानन्तरं सर्वेषां विदुषां सुवर्णमन्त्राक्षतप्रदानेन संमानना । केषाञ्चित् तलस्पर्शिपाण्डितीमण्डितानां विदुषां वेदान्तकेसरी, व्याकरणवागीशः इत्याद्युपाध्यनुग्रहेण विशिष्टसम्भावनापि निष्पद्यते । ततो महागणपतेः मङ्गलनीराजनं वेदघोषपूर्वकं विसर्जनञ्च इति वैभवान्वितोऽयं वाक्यार्थसभा-निर्वाहः । सभाध्यक्षाश्च परमपूज्याः महास्वामिनः कार्यनिर्वाहे सम्यग् दक्षाः सर्वशास्त्रपारङ्गताश्च भवन्तीति न पुनर्वक्तव्यम् ।

### श्रीचरणानां स्तवनीयमहागुणाः

श्रीशृङ्गेरीक्षेत्रे प्रवर्तमानायां श्रीमहागणपतिवाक्यार्थसभायाम् आहूतोऽहं कतिचिद्वर्षाणि उपस्थितः अभवम् । इदानीं तु वार्धकेन निमित्तेन दुर्बलेन्द्रिय-शक्तिः नोपतिष्ठे इत्यन्यदेतत् । एवमन्यत्र मठान्तरैः प्रवर्तितायां वाक्यार्थसभायाम् अपि उपस्थितः अभवम् । उभयत्र दृष्टः कश्चिद्विशेषः मया अत्र कथनीयो वर्तते । वाक्यार्थसमये कश्चिद्विद्वान् प्रस्तुतं विषयं सम्यग्वर्णयति । प्रतिवादिना पृष्टः कश्चित्समीचीनम् उत्तरं दातुम् अशक्तो भवति । तदा अन्येन विदुषा विविधान् अप्रस्तुतप्रश्नान् विधाय पराजितस्य विदुषः तेजोवधाय प्रयत्यते । एवं विदुषां तेजोवधः सर्वथा अनुचितः इति मे मतिः । न हि सर्वः सर्वं जानाति । एतादृशः पण्डिततेजोवधः शृङ्गेर्यामपि क्वचित्क्वचित् समभवत् । श्रीश्रीभारतीतीर्थमहास्वामिनाम् आध्यक्ष्ये प्रवर्तितायां वाक्यार्थसभायां तु सकृदपि नैवं समभवत् । तेजोवधं सर्वथा अनुचितं मन्वानाः पूज्यश्रीमहास्वामिनः वाक्यार्थमध्ये प्रविश्य समुचितम् उत्तरं प्रदाय उभावपि समाधाय वाक्यार्थे विषयान्तरं प्रचोदयन्ति स्म । पण्डिततेजोवधपरित्यागः स्तवनीयः कश्चिन्महागुणः

स्वामिपादानाम् ।

निभाल्यमाने च संक्लिष्टमठीयव्यवहारे मठाधिपत्यं क्लेशबहुलं दुर्बलेन्द्रियाणां दुर्वहमेव । यतीनान्तु एकतो यमनियमाद्यनुष्ठानम् , साम्प्रदायिक-व्रतपूजाद्याचरणम्, अन्यतो धनादिसम्बन्धिसंक्लिष्टव्यवहारः, अपरत्र शास्त्राद्यध्ययनम् अध्यापनञ्च, अन्यत्र प्रवाहरूपेण निरन्तरम् आगच्छद्भिः आस्तिकैः सह सम्भाषणं तेषां सन्देहसमस्यादिपरिहारश्च इत्येवम् आकर्षण-विकर्षणसङ्कर्षणप्रकर्षणैः कृष्यमाणानां दुर्लभा प्रतिभाति मनःशान्तिः । तथापि सर्वदा प्रसन्नचित्तानां स्मितपूर्वभाषिणां श्रीभारतीतीर्थमहास्वामिनां मधुरं दर्शनं विस्माययति अस्मान् । सर्वेषु तेषां करुणार्द्रता चित्तस्य । सर्वदा नयपूर्वकश्च व्यवहारः ।

पूज्यमहास्वामिपादानाम् अन्यान् कांश्चित् सद्गुणान् उदाहर्तुम् इच्छति मे मनः । कदाचित् श्रीशृङ्गेरीश्रीमठतः पत्रमेकं मया समासादितम् । तत्र प्रस्तुतो विषयः एवमासीत् – 'श्रीविद्यारण्यप्रणीतः श्रीशङ्करदिग्विजयनामकः ग्रन्थः भवतो विदितः एव । तस्य कन्नडभाषायाम् अनुवादः कर्तव्यः इत्यस्ति महास्वामिनाम् अपेक्षा । तदिदं भवता निर्वर्तनीयम्' इति । तस्य प्रत्युत्तरम् अहम् एवम् अलिखम् – 'सोऽयं ग्रन्थः महान् प्रौढः कठिनश्च । दीर्घवृत्तैः जटिलोऽयं कन्नडभाषायाम् अनुवदितुं दुःशकः । शास्त्रीयविषयान् सुलभया भाषया अनुवदितुम् अशक्यमिव भाति । अहं च वर्षीयान् । लेखनं च असाध्यं मम । क्षन्तव्योऽयं जनः' इति । सपदि श्रीमठतः अन्यद् आदेशपत्रं प्रेषितम् – 'यतः श्रीशङ्करदिग्विजयः प्रौढः कठिनश्च, ततः एव अनुवादकार्यं भवते समर्पितम् । क्रियताम् अनुवादः । लेखनकार्याय अन्यो नियोज्यते । स च भवद्गृहम् आगत्य अनुवादं लेखिष्यति' इति । अङ्गीकृतं मया । एतादृशो विश्वासः अनुग्रहश्च महास्वामिनां मयि । प्रथमं ग्रन्थस्य सर्गद्वयं कन्नडभाषया अनूद्य महास्वामिनाम् अनुमोदनम् आप्तुं शृङ्गेरीं गत्वा तेषां सन्निधौ कन्नडानुवादम् अवाचयम् । अनुवादम् आकर्ण्य गुरवः नितराम् अतुष्यन् । एवम् आत्मविश्वासं सम्पाद्य सम्पूर्णस्य ग्रन्थस्य कन्नडभाषया अनुवादम् अकार्षम् । ततश्च श्रीशङ्कर-चरितामृतनामकः अल्पीयान् ग्रन्थः मया विरचितः श्रीशङ्करविजयपारायण-पराणाम् आनुकूल्याय । तं च श्रीमहास्वामिभ्यो दर्शयितुं शृङ्गेरीम् अगच्छम् ।

मदीयप्रार्थनया ग्रन्थं श्रोतुं स्वामिपादाः अन्वमन्यन्त । प्रत्यहं श्रीनृसिंहवनं गत्वा तेषां सन्निधौ ग्रन्थस्य श्लोकान् पठन्नासम् । अनुष्टुभा रचिते तस्मिन् ग्रन्थे तत्र तत्र कानिचिदेव पदानि परिवर्तयितुं महास्वामिनः आदिशन् । श्रीशङ्करभगवत्पादैः विरचितस्य सूत्रभाष्यस्य कानिचिद्विशेषणानि मया दत्तानि । तेषु त्रीणि महास्वामिनां हर्षम् अजनयन् । आचार्यभाष्यं 'द्वैतविध्वंसनोद्दण्डम्', 'भाषाशैल्या उदाहार्यम्', 'वाचस्पतिशिरोधार्यम्' इति त्रीणि विशेषणानि । तत्र अन्त्यं विशेषणं श्रुत्वा स्वामिपादा अवदन् - ''अहो ! भामत्याम् अस्त्ययं श्लोकः श्रीवाचस्पतिमिश्राणाम् -

आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् ।
रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति ।।'' इति ।

एतादृशं सपदि स्मरणमाचार्यपादानां मम विस्मयम् अजनयत् ।

श्रीशङ्करदिग्विजयस्य अनुवादं श्रीशङ्करचरितामृतं मदीयं काव्यं च श्रावयितुं स्वामिपादानां सन्निकर्षम् अगच्छमिति पूर्वं निवेदितम् । श्रीनृसिंहवनस्थश्रीमठे तयोः वाचनम् अभवत् । श्रीमठस्य उपरिभागे अट्टालके दिनद्वयं वाचनम् अभूत् । तृतीयदिने यदा अहम् अगच्छं तदा तत्रत्यः कश्चन शिष्यः प्रथम-भूमिकायाम् एव स्थितं प्रकोष्ठमेकं गन्तुम् असूचयत् । अहं तत्र गतः । महास्वामिनः तत्र उपविष्टाः अभवन् । मां दृष्ट्वा स्मेरमुखाः - 'भवतः सोपानानि आरुह्य अट्टालकं गन्तुं क्लेशो भवतीति कृत्वा अत्रैव व्यवस्थाम् अकुर्म' इत्यब्रुवन् । तदीयं कारुण्यपूर्णं वचनं श्रुत्वा नतमूर्धा दण्डवद्भूमौ प्रणामम् अकरवम् । इदं भक्तजनेषु महास्वामिनां कारुण्यपूर्णं हृदयं सूचयति । तथा श्रीशङ्करचरितामृतस्य वाचनम् एकस्मिन् दिने पूर्णताम् अगात् । पूज्य-श्रीमहास्वामिनः किञ्चित्स्थीयताम् इति उक्त्वा प्रकोष्ठान्निर्गताः । निमेष-द्वयानन्तरम् एकः शिष्यः कदलीफलमेकं क्षीरं च गृहीत्वा आगत्य - 'स्वीक्रियताम्' इति उक्त्वा निक्षिप्य निर्गतः । अहं कदलीफलं खादित्वा क्षीरम् अपिबम् । माधुर्येण अमृतोपमम् आसीत् तद्द्वयम् । सत्यं ब्रवीमि - तादृशं मधुरं फलं न मया खादितपूर्वम् । शर्करया अमिश्रितमपि मधुरं तादृशक्षीरं न पीतपूर्वम् । मधुराधिपतेः सकलं मधुरम् इति कविवचनं स्मरन् ततो निर्गतोऽस्मि ।

संस्कृतभाषायाम् असाधारणप्रीतिम् आदरातिशयञ्च पुष्णन्तः श्रीभारतीतीर्थ-महास्वामिनः संस्कृतज्ञानां पुरतः संस्कृतभाषया एव भाषन्ते । तादृशान् बहून् उपन्यासान् श्रुतवान् अस्मि । न भवति क्वचिदपि अपशब्दप्रयोगः । कदाचिद् विद्वत्सदसि अनुग्रहभाषणं तेषां प्रवृत्तम् । अहन्तु पुरस्तादेव आकर्णयन् निषण्णः अभवम् । किञ्चिद्दीर्घकालं प्रवृत्तं भाषणम् । अन्ते माम् आहूय पृच्छन्ति स्म – 'मया कोऽप्यपशब्दः प्रयुक्तः किमु ?' इति । चकितोऽहम् अब्रवम् – 'अपशब्दस्तु निर्गच्छेत् कथं श्रीभारतीमुखात् ?' इति । महास्वामिनो मन्दं जहसुः । अहो ! तदिदं महोदारचरितं महास्वामिनाम् !

परा काष्ठेत्यहं ब्रूयां विनयस्य नयस्य च ।
विदुषां सर्वशास्त्रेषु वन्द्यानां सूरिभिः सदा ।।

महागणपतिवाक्यार्थसभायां श्रीश्रीभारतीतीर्थमहास्वामिनां प्रखरं शास्त्र-पाण्डित्यं मया साक्षीकृतम् । प्रायेण एकस्य पुरुषस्य एकस्मिन् शास्त्रे, द्वयोर्वा अतिशयितं वैदुष्यं सम्भवति, न तु सर्वेषु शास्त्रेषु । पूज्यश्रीमहास्वामिनां तु तर्कव्याकरणमीमांसावेदान्तादिशास्त्रेषु अप्रतिमं वैदुष्यं प्रभुत्वं च मया दृष्टम् । यजुर्वेदश्च तैः सम्यग् अधीतः । किञ्चास्ति तेषाम् अलङ्कारशास्त्रेऽपि समीचीनः परिचयः । कदाचित् काचन आशुकवितागोष्ठी तैः नियोजिता । तस्यां प्रविष्टेन मया रचितेषु पद्यद्वयमिदं महास्वामिनां महतीं प्रीतिम् अजनयत् ।

शृङ्गेरीपुरवासिनी श्रुतिशिरःसीमन्तिनी तारिणी
तुङ्गातीरविहारिणी दिविषदां वाणी भवोत्सारिणी ।
श्रीमच्छङ्करदेशिकेन्द्रवचसां धात्री ध्रुवा देवता
भक्तानां वरदा बुधस्तुतपदा पायात् सदा शारदा ।।

विद्यां केचन तत्त्वबोधमपरे बुद्धिं विशुद्धां परे
वाग्मित्वं कतिचित्स्तुवन्ति भगवद्भक्तिं स्वधर्मं यतौ ।
औदार्यं तु परे विरक्तिमपरे कारुण्यमन्ये तपः
श्रीमच्छङ्करभारतीयतिपतौ स्त्यायन्ति सर्वे गुणाः ।।

कारुण्येन श्रीचन्द्रमौलीश्वरस्य, करुणाकटाक्षेण श्रीशारदाम्बायाः, सुकृतेन सज्जनानां, भाग्येन विद्वज्जनानां, परमपूज्यश्रीभारतीतीर्थमहास्वामिनः श्रुतितती: पालयन्तः, शास्त्राणि रक्षन्तः, धर्मं स्थापयन्तः, सत्कर्म कारयन्तश्च स्थाने

खलु चिरं जीयासुरित्याभिकांक्षन्ति शिष्टाः सकलभक्ताः इति शम् ।।

निरुपमगुणशक्तिं वाक्पटुत्वे दधानाः
पटुतरमतिशक्तिं शास्त्रजातेषु शुद्धाम् ।
विसृमरकरुणार्द्रां भक्तवृन्देषु दृष्टिं
विदधतु कुशलं श्रीभारतीतीर्थपादाः ।।

भगवान् शङ्करः पातु संयमीन्द्रान् गुरूत्तमान् ।
श्रीभारतीतीर्थपादान् दत्त्वायुः शतवत्सरम् ।।

★★★

## नैतत् भारायते

शङ्करभगवत्पादान् अधिकृत्य विविधाः ग्रन्थाः लेखाः च लेखनीयाः अभवन् मान्यैः रङ्गनाथशर्मभिः । तथापि तैः एतस्मिन् कर्मणि एकतानता, पुनरुक्तिः, नीरसता वा अणुमात्रेणापि न अनुभूता । युगपुरुषशङ्कराख्यस्य कन्नडग्रन्थस्य प्रस्तावनायां ते लिखन्ति -

**सद्गुरुसेवाभारो द्वेधा त्रेधा चतुर्धा वा ।**
**पततु मदीये शिरसि प्रत्नं मन्येऽथ बृंहितं भाग्यम् ।।**

[सद्गुरोः शङ्कराचार्यवर्यस्य सेवाभारः बहुधा मयि आपततु नाम । तत् मम सन्तोषाय एव । ततः मम सौभाग्यं प्रवृद्धं मन्ये ।]

# १२. भाषाजीवातुः वाचोयुक्तिः

इह खलु जगति जेगीयमानासु भाषासु विवक्षितार्थप्रकाशनाय विभिन्न-पदगुम्फनरीतिः, वक्रताभूषिताः प्रकारविशेषाः समाश्रीयन्ते । इमे च वक्तृणां कौशल्यम् आभिजात्यं च व्यञ्जयन्तः वाग्विशेषाः बहवो बभूवुः संस्कृत-भाषायामपि । शिष्टप्रयुक्ताः अपि एते भवन्ति, यतः एतेषां व्युत्पादनं पाणिनि-शास्त्रे अवलोक्यते । वाग्व्यवहारे च एतेषां प्रयोगात् कश्चन सहृदयसंवेद्यः चमत्कारः समुल्लसति इति तु अनुभवरूढमेतत् । एते च आङ्ग्लभाषायाम् 'ईडियम्' (Idiom) इति, हिन्दीभाषायां 'मुँहावर' इति, कन्नडभाषायां 'नुडिगट्टु' इति च अभिधीयन्ते ।

'ईडियम्' इत्यस्य अर्थः आङ्ग्लभाषायाम् Oxford Dictionary इत्यभिधे शब्दार्थकोशे 'A form of expression peculiar to a language' इति दर्शितः । 'Idiom is a group of words making a peculiar expression which is an important part in all language' इति अन्यत्र ।

संस्कृते च एतादृशाः शब्दविशेषाः बहवः सन्ति । संस्कृतविपश्चिद्भिस्तु तेषां परामर्शाय सङ्ग्रहणाय वा प्रयत्नः अद्यावधि न कृतः । आङ्ग्लभाषादिषु तु व्याकरणाङ्गत्वेनैव ते अधीयन्ते । संस्कृतव्याकरणशास्त्रे तु यद्यपि एतेषां व्युत्पादने समस्ति एव संरम्भः, तथापि पृथग्वर्गीकरणे प्रयत्नः न कृतः, साधुत्वान्वाख्यानाय प्रवृत्तानाम् आचार्याणां तादृशशब्दविशेषवर्गीकरणेन साध्यप्रयोजनस्य अदर्शनात् । तद्वर्गीकरणेन साधुत्वान्वाख्यानाय किमपि नास्ति प्रयोजनम् । आलङ्कारिकैः तु काव्ये चमत्काराधायकत्वात् एतेषां परामर्शः कर्तव्यः आसीत् इति मे प्रतिभाति । सूक्ष्मदर्शिभिः एतैः अयं प्रकारः शब्द-विशेषस्य न दृष्टः इति न शक्यते अभिधातुम् । किन्तु –

पदार्थे वाक्यरचना वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ।।

इति वदद्भिः उक्तलक्षणायां प्रौढौ अस्य अन्तर्भावः इति तेषामाशयः लक्ष्यते । वक्रोक्तिकारेण कुन्तकेन तु स्फुटं वाग्विशेषस्यास्य चमत्कारजनकता दृष्टा इति अवसीयते । स हि स्वग्रन्थस्य प्रथमोन्मेषे – 'पदपूर्वार्धवक्रतायाः उपचार-वक्रत्वं नाम प्रकारान्तरं विद्यते' इत्यभिधाय 'हस्तावचेयं यशः' इति उदाजहार । विस्तरस्तु तेनापि न दर्शितः इति अन्यदेतत् ।

अस्तु, 'ईडियम्' इत्यस्य संस्कृते किं नामधेयं युक्तरूपम् ? व्याकरणशास्त्रे तु शब्दशास्त्रीयप्रयोजनाभावात् न कापि संज्ञा कृता । आलङ्कारिकैः तु प्रौढिनामके गुणे पदवक्रतायां वा कथञ्चित् प्रवेशनात् अस्य विशेषतः प्रदिपादने यत्नः न कृतः । वस्तुतस्तु आधुनिकभाषाशास्त्रस्य अयं विषयः इति नूतनतया नामकरणं कर्तव्यम् अस्माभिः । मम तु एवं प्रतिभाति – 'वाचोयुक्तिः' इति युक्तं नामधेयम् इति । वाचो युक्तिः इति विग्रहः । समासे – 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' इति षष्ठ्याः अलुक् । युक्तिः, योगः, प्रयोगः इति अनर्थान्तरम् । यद्यपि प्राचीनैः 'ईडियम्' इत्यर्थे अयं शब्दः न प्रयुक्तः, तथापि तथा संज्ञाकरणे न किञ्चित् बाधकम् । समर्थश्च अयं शब्दः विवक्षितार्थ-बोधने, श्रवणहितश्च, संक्षिप्तश्च । उपर्युक्तवार्तिकेन साध्यमानौ दिशोदण्ड-पश्यतोहरशब्दौ च अर्थविशेषबोधकौ, न तु यौगिकार्थमात्रपरौ इत्यपि द्रष्टव्यम् । क्रमेण च अयं वाचोयुक्तिशब्दः प्रयुज्यमानः ईडियम् इत्यर्थे रूढिम् आपत्स्यते, यथा इदानीम् आकाशवाणी, दूरदर्शनं, विधानपरिषत्, संविधानम् इत्यादयः ।

अथ अस्याः वाचोयुक्तेः किं लक्षणम् ? प्रयतन्तां नाम लक्षणप्रणयन-कुतूहलिनः तार्किकशिरोमणयः । वयन्तु लक्ष्यान्वेषणकुतूहलिनः यथाशक्ति लक्ष्याणि मार्गयितुं यतिष्यामहे । संक्षेपतः निर्देक्ष्यमाणः अयम् आकृतिगणो बोध्यः । इदन्तु ब्रूमो यत् वाचोयुक्तिः नाम विलक्षणार्थप्रतिपादकः शब्दविशेषः इति । अर्थगतं वैलक्षण्यं, शब्दगतं वैशिष्ट्यं च सहृदयसंवेद्यमिति न क्वचित् अतिप्रसक्तिः । वाच्यादिसङ्ग्रहाय प्रतिपादकशब्दनिवेशः इति संक्षेपः ।

केचिदत्र प्रदर्श्यन्ते प्रयोगाः विदुषां मुदे –

स्फुरत्यभिनवो यत्र वाचामर्थो विलक्षणः ।।१।।
भावुकानां चमत्कारी प्रौढानाञ्च प्रियङ्करः ।
कविसामर्थ्यनिष्यन्दः श्रोतॄणां श्रवणोत्सवः ।।२।।
वाग्विशेषा इमे ज्ञेयाः प्रयोगोपाधयोऽथवा ।
एतेषु युज्यते सम्यग् वाचोयुक्तिपदाभिदा ।।३।।
लौकिके व्यवहारे च वाचोयुक्तिर्विशेषतः ।
दृश्यते देशभाषासु व्यञ्जयन्ती वचः श्रियम् ।।४।।
संस्कृते चापि विद्यन्ते वाग्विशेषाः परःशताः ।
यैरभिव्यज्यते चास्य व्यवहारोपयुक्तता ।।५।।
जीवातुः सर्वभाषाणां वाचोयुक्तिरियं पुनः ।
सर्वत्र प्रसृता वाचि क्षीरे सर्पिरिवेष्यताम् ।।६।।
दैनिकव्यवहारोत्थां भाषानैसर्गिकस्थितिम् ।
वाचोयुक्तिर्व्यञ्जयति व्रीडां नववधूरिव ।।७।।
यदि नाम पुरेवेदं रोचयेत् संस्कृतं जनः ।
शर्करामिव गोक्षीरे वाचोयुक्तिं निवेशय ।।८।।

इत्यन्तश्लोकाः ।। तथाहि -

१. **पात्रेसमितः** इति शब्दः 'पात्रे समितादयश्च' इति पाणिनिसूत्रेण व्युत्पादितः । भोजनसमये एव सन्निहितः, न तु कार्ये इति तदर्थः सिद्धान्तकौमुद्यां निरूपितः । वाच्यमर्यादया अलभ्यः अयमर्थः लक्ष्यः, व्यङ्ग्यः वा, समुदायशक्तिः एव वा । अन्ये च तद्गणे पठिताः - **पात्रेबहुलः** - यस्य भोजनं बहु, कार्यम् अल्पम् । **उदुम्बरक्रिमिः** - अत्यल्पज्ञः, एवं **कूपमण्डूकः** । **नगरकाकः** - धृष्टः । **गेहेशूरः** - वचनशूरः, उत्तरकुमारः इव । एवं **मातरिपुरुषः**, **गेहेनर्दी** च । **गर्भेतृप्तः** - आजन्मदरिद्रः । **कर्णे टिरिटिरा** - पुनः पुनः जल्पनेन उद्वेगजननम् । एवं **कर्णे चुरुचुरा** । **आखनिकबकः** - समयान्वेषी धूर्तः । आखनिको जलस्रोतः ।

२. **अश्नीतपिबता-खादतमोदता**प्रभृतयः मयूरव्यंसकादिषु पठ्यन्ते । तत्र केषाञ्चिदर्थः प्रसिद्धः । इतरेषमर्थो न ज्ञायते । विदुषाम् उपेक्षा तत्र

हेतुः । उपेक्षया एव संस्कृतभाण्डागारे विद्यमानाः बहवः शब्दाः लुप्ताः । अन्ये च अज्ञेयार्थकाः जाताः इति शोचनीया स्थितिः ।

३. **गुलगुधाकारोति, मसमसाकरोति** - अङ्गुलिस्पर्शादिना मोदयन्निव हिनस्ति इत्यर्थः । गुलगुधादयः ऊर्यादौ पठिताः । **कारिकाकरोति** - यत्किञ्चित् कार्यं कुर्वन् वर्तते, न अलसः इत्यर्थः ।

४. **उपाजेकरोति, अन्वाजेकरोति** - दुर्बलस्य बलम् आधत्ते । **निवचनेकरोति** - वाचं नियमयति ।

५. **केशाकेशि, मुसलामुसलि, उभाहस्ति, उभयाहस्ति, उभयादन्ति** - एते कलहविशेषार्थकाः ।

६. **अहिनकुलम्, गोव्याघ्रम्, काकोलूकम्** इत्यादौ यद्यपि द्वन्द्वः एकवद्भावश्च, तथापि 'तयोः अहिनकुलम्', 'कर्णार्जुनयोः गोव्याघ्रम्', 'राजकीयपक्षद्वयस्य दैवासुरम्' इत्यादिलाक्षणिकप्रयोगेषु चमत्कारविशेषं जनयन्तः एते शब्दाः वाचोयुक्तिपदाभिधेयाः भवन्ति । अन्योन्यवैरं शब्दार्थः ।

७. **गोष्ठश्वः** - गोष्ठे विद्यमानो भषन् यः शुनकः तत्सदृशः इत्यर्थः । स्वयं न भुङ्क्ते अन्यमपि न भोजयति इत्यर्थः । Dog in the Manger.

८. चैत्रोऽयं **शुनःशेपः** - आश्रयदातृभिः परित्यक्तः इत्यर्थः ।

९. **अनभ्याशमित्यः** - दूरतः परिहर्तव्यः ।

१०. **कुमारीपुत्रकः, कुमारीश्वशुरकः** - लज्जालुः पुरुषः ।

११. **काकपेया** नदी - अल्पजला नदी । **श्रोत्रपेया** सूक्तिः, **हस्तग्राह्या** कौमुदी । 'कृत्यैः अधिकार्थवचने' इति समासः ।

१२. **याथाकथाचम्** - अनादरेण कृतम् । 'तेन यथाकथाच हस्ताभ्यां णयतौ' इति णः । अनादरेण दीयमानं वा शब्दार्थः ।

१३. **काकतालीयम्, अजाकृपाणीयम्** - आकस्मिकप्राप्तम् । **श्वेतकाकीयम्** - अनृतम् । 'समासाच्च तद्विषयात्' इति छः ।

१४. **समयाकरोति** - कालं यापयति । 'समयाच्च यापनायाम्' इति डाच् ।

१५. **नखम्पचा** यवागूः, **ललाटन्तपः** सूर्यः, **असूर्यंपश्या** राजकुमारी ।

१६. **शय्योत्थायं** धावति – त्वरया धावति इत्यर्थः ।

१७. **तुन्दपरिमृजः** – अलसः ।

१८. **तिर्यक्कृत्य** गतः, **तिर्यक्कृत्वा** गतः, **तिर्यक्कारं** गतः । समाप्य गतः इत्यर्थः । 'तिर्यच्यपवर्गे' इति क्त्वाणमुलौ । 'तिर्यक् करोति' इत्यस्य समापयति इत्यर्थः ।

१९. **आगमयस्व** तावत् – मा त्वरिष्ठाः इत्यर्थः । 'आगमेः क्षमायाम्' इति वार्तिकात् आत्मनेपदम् । आगमयते – न त्वरयते ।

२०. **संक्रीडते, परिक्रीडते** – निश्शब्दं क्रीडति इत्यर्थः । निःशब्दं चक्रं परिवर्तते इत्यर्थः अपि ।

२१. गोपी **कृष्णाय तिष्ठते** – आशयं प्रकाशयति ।

२२. **दास्या संप्रयच्छते** कामुकः – दासीम् उपभोक्तुं तस्यै धनाधिकं ददाति इत्यर्थः । अशिष्टव्यवहारे चेत् इदम् । एवं भृत्यः अधिकारिणा **सम्प्रयच्छते**, चोरः आरक्षिणा **सम्प्रयच्छते** इत्यादि । उत्कोचं ददाति इत्यर्थः । तेन **सम्प्रयच्छस्व** – उत्कोचं तस्मै देहीत्यर्थः ।

२३. **पश्यति चोरः** – दृष्टिविषयो भवति । **आरोहति** हस्ती – न्यग् भवति । अस्मिन्नर्थे 'णेरणौ' इति सूत्रव्याख्यानं प्रमाणम् । एतादृशाः प्रयोगाः सर्वथा लुप्ताः । एवं **दर्शयते** चोरः, **आरोहयते** हस्ती – इत्यादयः अपि ।

२४. **एहि मन्ये ओदनं भोक्ष्यसे** – ओदनं भोक्ष्ये इति त्वं मन्यसे इत्यर्थः । 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ।' एवम् 'एत मन्ये ओदनं भोक्ष्यध्वे' । प्रहासे पुरुषव्यत्ययो वचनव्यत्ययश्च । अत्र भूतकाले भविष्यति च मन्यतेः प्रयोगो न वा ? अनादरोऽस्मिन् विषये विदुषाम् ।

मृच्छकटिकनाटके द्वितीयेऽङ्के दर्दुरकः – ननु कल्यवर्तमेतत् ।

माथुरः – अयं पुरुषो दशसुवर्णं कल्यवर्तं भणति ।

तत्रैव चतुर्थेऽङ्के –

मदनिका – कल्यवर्तस्य कारणेन उभयमपि संशये विनिक्षिप्तम् । इति वर्तते । कल्यवर्तो नाम प्रातराशः । अत्यल्पम्, उपेक्षणीयम् इत्यर्थे कविना

प्रयुक्तोऽयं शब्दः कामपि कमनीयताम् अर्थे समुन्मेषयति ।

समस्तं व्यस्तं वा पदद्वयं सादृश्यात् अन्यार्थे प्रवर्तमानः प्रायेण वाचोयुक्तेः उदाहरणम् इति विभावनीयम् ।

अनादरेण विदुषामज्ञातार्थाश्च केचन ।
चिन्तामणिसमाः शब्दा नष्टप्रायाश्च केचन ।।
दिङ्मात्रदर्शी लेखोऽयं भूयः संस्कारमर्हति ।
विद्वज्जनसमाकर्षे भवेदस्य कृतर्थता ।।

★★★

## निर्विकारः

अनेकाः प्रशस्तयः रङ्गनाथशर्मवर्येण प्राप्ताः । तासां दानात् दात्रीणां संस्थानामेव गौरवं प्रवृद्धं स्यात्, न तु रङ्गनाथशर्मवर्यस्य । यतः शर्मवर्यस्य व्यक्तित्वं तु परमोन्नतम् आसीत् ।

प्रशस्तीनां विषये तस्य आसीत् निर्विकारभावः । तासाम् अप्राप्त्या न आसीत् तस्य खेदः, तासां प्राप्त्या च न आसीत् महान् आनन्दः । सः वदति स्म - 'न किञ्चिद्धीयते, न किञ्चिदपचीयते' इति ।

## 13. निपातघटितवाक्येषु शाब्दबोधविचारः

'प्राग्रीश्वरान्निपाताः' [पा. सू. १.४.५६] इति पाणिनिसूत्रेण केषाञ्चन शब्दानां निपातसंज्ञा विधीयते। सर्वे निपाताः अव्ययेषु अन्तर्भवन्ति, 'स्वरादिनिपातमव्ययम्' [पा. सू. १.१.३७] इति सूत्रेण तेषाम् अव्ययसंज्ञाविधानात्। निपातानाम् अनल्पत्वात् प्रधानानामेव केषाञ्चिद्योगे शाब्दबोधप्रकारः अत्र चिन्त्यते। एतद्घटितवाक्येभ्यो जायमानशाब्दबोधप्रकारे निपातप्रयुक्तं यद्वैलक्षण्यं तन्मात्रप्रदर्शनार्थम् अयम् उद्यमः, न तु समग्रवाक्यजन्यस्य शाब्दबोधस्वरूपस्य प्रदर्शने, तस्य प्रकृते अनुद्दिष्टत्वात्। सह, विना इत्यादीनाम् अव्ययानां केषाञ्चित् निपातसंज्ञाभावेऽपि तद्घटितवाक्येषु शाब्दबोधप्रकारः अत्र प्रसङ्गात् विचार्यते, समानयोगक्षेमत्वात् तदर्थान्वयस्य। विचारश्च प्रायेण वैयाकरणमतानुरोधेन। यद्यपि वैयाकरणमते निपातानां द्योतकत्वाङ्गीकारात् सर्वोऽपि अर्थविशेषः समभिव्याहृतपदानामेव इति द्योत्यार्थस्य अन्वयप्रसङ्गो नास्ति, तथापि सोऽयम् अर्थविशेषः कुत्र कुत्र केन रूपेण भासते इत्यवबोधार्थं तद्विचारः प्रवर्तितः शास्त्रकारैः।

**१. अथ नञर्थः।**

अत्र पक्षद्वयम्। आरोपो नञर्थः इत्येकः पक्षः। अभावस्तदर्थः इति द्वितीयः। आरोपो नाम तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकप्रतीतिः। तदभाववति तत्प्रकारकं ज्ञानमिति यावत्। न चायं भ्रमः, आहार्यत्वात्। 'अब्राह्मणः' इति नञ्समासे आरोपो नञर्थः। विषयत्वं संसर्गः। आरोपश्च समभिव्याहृतपदार्थप्रवृत्तिनिमित्ते। 'अब्राह्मणः' इत्यस्य आरोपविषयब्राह्मणत्ववान् इत्यर्थः। आरोपश्च ब्राह्मणभिन्ने ब्राह्मणत्वाभाववति सम्भवति इति ब्राह्मणभिन्नः इत्यर्थः पर्यवस्यति। स च मानसबोधविषयः।

अत्र ब्राह्मणशब्दस्यैव आरोपितब्राह्मणत्ववान् इत्यर्थः । नञ् तु तात्पर्यग्राहकः इति द्योतकत्वपक्षः । 'अब्राह्मणः क्षत्रियः' इत्यत्र आरोपितब्राह्मणत्ववदभिन्नः क्षत्रियः इति शाब्दबोधः । ब्राह्मणत्वाभाववति ब्राह्मणत्वस्य आरोपे अपि शाब्दबोधो भवत्येव । शब्दजन्यज्ञाने बाधज्ञानस्य प्रतिबन्धकत्वानङ्गीकारात् । आरोपस्य नञर्थत्वे च 'आरोप्यायं क्रियागुणौ ततो निवर्तयति' इति नञ्सूत्रस्थ-भाष्यं मानम् । अत एव तत्पुरुषे उत्तरपदार्थस्य प्राधान्यमिति प्रवादो नञ्तत्पुरुषे अपि सङ्गच्छते । अत एव च 'अतस्मै ब्राह्मणाय', 'असः शिवः' इत्यादौ तदादि-पदानाम् उपसर्जनत्वाभावात् सर्वनामता सिद्ध्यतीति तत्प्रयुक्तकार्यं निर्बाधम् । 'प्रतीयते सम्प्रति सोऽप्यसः परैः' इति माघे प्रयोगः । यद्यपि द्योतकतापक्षे ब्राह्मणपदस्य 'ब्राह्मणभिन्नः' इत्यर्थस्वीकारेऽपि 'अब्राह्मणः' इत्यत्र उत्तर-पदार्थप्राधान्यं न विहन्यते, तथापि 'असः' इत्याद्यनुरोधेन आरोपो नञर्थः । द्योतकतापक्षेण तदादीनां तद्भिन्नः इत्याद्यर्थस्वीकारे तु सर्वनामकार्यं न स्यात् । 'उपसर्जनीभूतास्तु न सर्वादयः' इति सर्वनामसंज्ञाभावात् । 'अतिसर्वाय देहि' इत्यत्र यथा । अत एव 'अनेकम्' इत्यत्र एकवचनं सिद्ध्यति । आरोपितैकत्वस्य सत्त्वात् । व्यस्तस्थलेऽपि एवमेव । 'घटो न पटः' इत्यत्र पटे आरोपितपटत्वस्य बोधात् आरोपितपटत्ववदभिन्नो घटः इति तत्समुदायजन्य-शाब्दबोधः । पटभिन्नो घटः इति बोधस्तु मानसः ।

एवं तिङन्तसमभिव्याहारस्थलेऽपि नञर्थ आरोपः । तत्र धात्वर्थफल-व्यापारयोः कर्मणि कर्तरि च आरोपः । 'घटो नास्ति' इत्यत्र घटे सत्तायाः आरोपः । बोधस्तु आरोपिता घटाभिन्नकर्तृनिष्ठा सत्ता इति । घटाभावबोधो मानसः । 'चैत्रो न गच्छति' इत्यत्र चैत्राभिन्नकर्तृनिष्ठः आरोपितसंयोगानुकूल-व्यापारः इति बोधः । तत्र व्यापारस्य आरोपितत्वे बोधिते तज्जन्यफलस्यापि आरोपविषयत्वं बुध्यते । एवं नञ्समभिव्याहारे आरोपितफलव्यापारयोः आश्रयत्वेन 'चैत्रस्तण्डुलं न पचति' इत्यादौ तण्डुलादेः कर्मत्वं, चैत्रादेः कर्तृत्वञ्च सुलभम् । 'वायौ रूपं नास्ति' इत्यत्र रूपकर्तृकसत्तायां वाय्वधि-करणकत्वम् आरोप्यते । 'आरोपितवाय्वधिकरणत्विका रूपकर्तृका सत्ता' इति बोधः । तेन वाय्वधिकरणकरूपकर्तृकसत्तायाः अप्रसिद्ध्या कथं विशिष्ट-सत्तारोपः इति शङ्कायाः नावसरः । 'ज्वरितो न भुञ्जीत' इत्यत्र आरोपितं ज्वरितकर्तृकं भोजनं प्रेरणाविषयीभूतम् इति बोधः । भोजनाभावः प्रेरणाविषयः

इति तु मानसः। 'न कलञ्जं भक्षयेत्' इत्यत्रापि एवमेव। आरोपितकलञ्जभक्षणं प्रेरणाविषयीभूतमिति बोधे सति पश्चात् कलञ्जभक्षणाभावः प्रेरणाविषयः इति मानसबोधो जायते इति। अस्मिन् पक्षे पूर्वोक्तबोधप्रकारस्य अनुभवारूढत्वाभावेन, आरोपे च अनुगतकार्यकारणभावस्य दुर्वचत्वेन च द्वितीयः पक्षः आश्रीयते।

अस्मिन् पक्षे नञर्थः अन्योन्याभावोऽत्यन्ताभावश्च। प्रागभावप्रध्वंसाभावौ न कदाचित् नञ्द्योत्यौ। तत्र अन्योन्याभावो भेदः एव। अस्मिन्नपि पक्षे मतद्वयम्। नञर्थः प्रतियोगिनि विशेषणम् इत्येके, विशेष्यः इत्यपरे। तिङन्त-समभिव्याहारे नञर्थः अत्यन्ताभावः, अन्यत्र तु भेदः। स च प्रतियोगिनि विशेषणम् इति पक्षे 'अब्राह्मणः' इत्यत्र भेदस्य प्रतियोगितासम्बन्धेन उत्तर-पदार्थे अन्वयः। 'भेदप्रतियोगी ब्राह्मणः' इति बोधः। न च भेदप्रतियोगितायाः केवलान्वयितया घटादेः अपि भेदविशिष्टत्वेन उक्तबोधो दुर्लभः इति वाच्यम्। ब्राह्मणत्वावच्छिन्नप्रतियोगितासम्बन्धेन भेदः प्रतियोगिनि विशेषणमिति स्वीकारात्। तेन सम्बन्धेन भेदविशिष्टतायाः ब्राह्मणे एव सत्त्वात्। ब्राह्मणभिन्नः इति बोधस्तु मानसः।

'अब्राह्मणः क्षत्रियः' इत्यत्र क्षत्रियस्य वृत्तित्वसम्बन्धेन नञर्थे भेदे अन्वयः। भेदस्य प्रतियोगितासम्बन्धेन ब्राह्मणे। क्षत्रियवृत्तिभेदप्रतियोगी ब्राह्मणः इति शाब्दधीः। निपातेतरनामार्थयोः एव अभेदान्वयनियमात्, प्रकृते नञर्थभेदस्य निपातार्थत्वेन भेदेन अन्वये न दोषः। ब्राह्मणभिन्नः क्षत्रियः इति बोधस्तु मानसः। 'चैत्रो न पचति' इत्यत्र क्रियायोगे अत्यन्ताभावो नञर्थः। स च प्रतियोगितासम्बन्धेन धात्वर्थव्यापारे अन्वेति। चैत्रकर्तृकः विक्लित्त्यनुकूल-व्यापारः अभावप्रतियोगी इति बोधः। न चैवं पचत्यपि चैत्रे 'न पचति' इति प्रयोगापत्तिः, चैत्रकर्तृकपाकक्रियायाः मैत्रनिष्ठाभावप्रतियोगितया विषयाबाधाद् इति वाच्यम्। यदाश्रयः प्रतियोगी तदाश्रयोऽभावः इति लक्षणया चैत्रनिष्ठः अभावः नञर्थः इति स्वीकारात्। उक्तस्थले चैत्रकर्तृकपाकानुकूलव्यापारः चैत्रनिष्ठाभावप्रतियोगी इति बोधस्वीकारात् मैत्रनिष्ठाभावम् आदाय 'चैत्रो न पचति' इति न प्रयोगः। 'भूतले घटो नास्ति' इत्यत्र भूतलवृत्तिघटकर्तृका सत्ता अभावप्रतियोगिनी इति बोधः। अधिकरणस्य कर्तृकर्मद्वारा क्रियान्वयः इति नियमात्। 'घटः पटो न' इत्यत्र पटवृत्तिभेदप्रतियोगी घटः इति बोधः।

'अनेकस्तिष्ठति' इत्यत्र प्रतियोगितासम्बन्धेन भेदविशिष्टः एकः तिष्ठति इति बोधः । भेदप्रतियोगी एकः इति वा । अनेकपदार्थे एकत्वभेदे बोधिते सङ्ख्यान्तरविशिष्टत्वम् अर्थात् गम्यते । उत्तरपदार्थप्राधान्यात् एकवचनम् । 'पतन्त्यनेके जलधाविवोर्मयः' इत्यादौ तु अनेकश्च अनेकश्च अनेकश्च इति एकशेषात् बहुवचनम् उपपादनीयम् । द्वयोरेकशेषे द्विवचनं तु न, अनभिधानात् । नागेशभट्टास्तु अनेके इति बहुवचनम् असाध्वेव इत्याहुः । नञर्थस्य विशेषणत्वादेव 'अत्वं भवसि' 'अतस्मै देहि' 'असः' इत्यादौ पुरुषव्यवस्था सर्वनामकार्यादिकं च सूपपादम् । 'अत्वं भवसि' इत्यत्र भेदप्रतियोगित्वदभिन्नकर्तृकं भवनमिति बोधः ।

परन्तु पक्षेऽस्मिन् 'अघटमानय' इत्यादौ भेदप्रतियोगिनं घटमानय इत्यादिरीत्या बोधप्रकारो न अनुभवारूढः । घटभिन्नमानय इत्यादिबोधस्यैव सर्वजनीनत्वात् । तस्मात् नञर्थः प्रतियोगिनि विशेष्यः इति मतं सिद्धान्ते स्थितम् । प्रतियोगिनिष्ठविशेषणतानिरूपितविशेष्यताश्रयो नञर्थः इति यावत् । स च क्रियायोगे अत्यन्ताभावः । अन्यत्र तु भेदः ।

पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ।
प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ् ।।

इति वृद्धोक्तौ उत्तरपदशब्दः क्रियेतरशब्दोपलक्षकः । पर्युदासो भेदः । प्रसज्यप्रतिषेधोऽत्यन्ताभावः । प्रसज्य = विधाय, प्रतिषेधो = निषेधः प्रसज्यप्रतिषेधः । 'सुप्सुपा' इति समासः । 'प्रसज्यायं क्रियागुणौ ततः पश्चान्निवृत्तिं करोति' इति नञ्सूत्रे भाष्यकृतः । 'एतच्च प्रसज्यप्रतिषेध उच्यते' इति तत्रैव कैयटः । प्रसज्येति ल्यबन्तम् । अथवा प्रसज्यस्य = प्रतियोगिनि आरोप्यमाणस्य क्रियादिधर्मस्य प्रतिषेधः प्रसज्यप्रतिषेधः इति षष्ठीतत्पुरुषः । यथा अन्धो न पश्यति इत्यत्र अन्धे दर्शनक्रियाम् आरोप्य प्रतिषेधः । 'पाषाणो मृदुर्न भवति' इत्यत्र पाषाणे मार्दवगुणम् आरोप्य प्रतिषेधः ।

एवञ्च नञ्समासे नञर्थो भेदः उत्तरपदार्थेन विशेष्यते । 'अब्राह्मणः क्षत्रियः' इत्यत्र ब्राह्मणपदार्थः प्रतियोगितया भेदे अन्वेति । भेदश्च वृत्तित्वसम्बन्धेन क्षत्रिये । ब्राह्मणप्रतियोगिकभेदाश्रयः क्षत्रियः इति बोधः । अथवा ब्राह्मणपदस्य तद्भिन्ने लक्षणा । नञ् तात्पर्यग्राहकः । नामार्थयोः अभेदान्वयात्

ब्राह्मणभिन्नाभिन्नः क्षत्रियः इति बोधः । एवं नञो वाचकतापक्षे द्योतकतापक्षे च किञ्चिदन्योन्यवैलक्षण्यं भवतीति बोध्यम् ।

तिङन्तसमभिव्याहारे सर्वत्र अत्यन्ताभावो नञर्थः । 'चैत्रो न गच्छति' इत्यत्र चैत्रकर्तृकगमनव्यापाराभावः इति बोधः । प्रकारतासम्बन्धेन नञर्थ-विशेष्यकशाब्दबोधं प्रति धातुजन्यव्यापारोपस्थितेः विशेष्यतासम्बन्धेन हेतुत्वात् । 'भूतले घटो न' इत्यत्र अस्तीति अध्याहारः । तिङन्तेन योगाद् अत्यन्ताभावो नञर्थः । भूतलवृत्तिघटकर्तृकसत्तायाः अभावः इति शाब्दधीः । अधिकरणस्य कर्तृकर्मद्वारा क्रियान्वयनियमात् भूतलस्य कर्तृभूतघटद्वारा सत्तायाम् अन्वयः, न तु अभावे । घटसत्तायाः अभावे बोधिते घटाभावोऽपि बुध्यते । समनियताभावयोः ऐक्यात् । स्वाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वे सति स्वाभाववदवृत्तित्वम् समनियतत्वम् । अधिकरणस्य भूतलस्य नञर्थाभावे साक्षाद् अन्वयाभावेऽपि भूतलवृत्तित्वेनैव अभावः प्रतीयते, समभिव्याहार-बलात् । प्रतियोगी यद्वृत्तित्वेन प्रतीयते, तद्वृत्तित्वेनैव तदभावः प्रतीयते इति अङ्गीकारात् । 'भूतले घटो नास्ति' इत्यत्र पूर्वोक्तरीत्या बोधितो घटाभावः भूतलवृत्तित्वेन प्रतीयते, प्रतियोगिनो घटस्य भूतलवृत्तित्वेन प्रतीतत्वात् । 'वायौ रूपं नास्ति' इत्यत्र रूपपदस्य रूपप्रतियोगिकात्यन्ताभावे लक्षणा । वाय्वधिकरणिका रूपाभावकर्तृका सत्ता इति बोधः । अथवा वायौ रूपज्ञानम् आहार्यं विकल्पात्मकम् । तद्विषयस्य रूपस्य बाह्यसत्तानिषेधः इति नानुपपत्तिः ।

भावार्थककृदन्तयोगे समासेऽपि नञः अभावः अर्थः । अभोजनम्, अगमनम्, अपाकः इत्यादौ भोजनाभावः इत्याद्यर्थप्रतीतेः । 'एकादश्याम् अभोजनम्' इत्यत्र यथा । एवम् अदृष्ट्वा, अकर्तुम् इत्यादावपि । क्त्वातुमुनोः भावार्थकत्वात् । एवम् असन्देहः, अनुपलब्धिः, अमार्दवम्, अरूपम्, अस्पर्शः इत्यादौ गुणयोगेऽपि । 'आरोप्य क्रियागुणौ ततो निवर्तयति' इति नञ्सूत्रस्थभाष्यात् । क्रियागुणयोः योगे सर्वत्र नञः अभावार्थकत्वम् इति फलति ।

द्योतकत्वपक्षे कश्चिदस्ति विशेषः । 'चैत्रो न पचति' इत्यादौ धातोरेव व्यापाराभावपर्यन्तः अर्थः । नञ् तु तात्पर्यग्राहकः । अत्र पक्षे 'चैत्रेण न पच्यते तण्डुलः' इत्यादौ धात्वर्थव्यापाराभावाश्रयत्वेन चैत्रादेः कर्तृत्वम् ।

तत्प्रयोज्यफलाभावाश्रयत्वेन च तण्डुलादेः कर्मत्वं सुलभम् । 'अब्राह्मणः' इत्यादौ ब्राह्मणपदस्य तद्भिन्ने लक्षणा । अथवा शक्तिरेव । सर्वेषां पदानां तत्तदर्थेषु तद्भिन्नेषु च शक्तिरिति नञ्सूत्रस्थभाष्यप्रदीपोद्योते स्पष्टम् । 'अतस्मै', 'असः' इत्यादौ तु 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' [पा. सू. ६.१.१३२] इति ज्ञापकात् सर्वनामसंज्ञा । 'असः शिवः' इत्यत्र सुलोपवारणाय खलु अनञ्समासे इति विशेषणम् । एवञ्च नञ्समासे सर्वनामसंज्ञा भवति इत्यत्र ज्ञापकमेव इदम् । उत्तरपदार्थप्रधानः तत्पुरुषः इति तु प्रायिकम् । 'पूर्वकायः' इत्यादौ व्यभिचारात् । 'अनेकम्' इत्यत्र औत्सर्गिकम् एकवचनम् इति सङ्क्षेपः । यत्तु-

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ।।

इत्युक्त्वा 'अनश्वः' इत्यादीनि उदाहरणानि प्रदर्श्यन्ते, तत्र अभावः अत्यन्ताभावः, तदन्यत्वं भेदः । उभौ प्रदर्शितावेव । अन्ये सादृश्यादयः अर्थास्तु प्रकरणादिना गम्यमानाः, न तु साक्षाद्बोध्यमानाः । एवञ्च भेदोऽभावश्च द्वयं नञर्थः । अभावश्च अत्यन्ताभावः इत्युक्तमेव । 'रक्तघटे श्यामो नास्ति' इत्यत्रापि अत्यन्ताभावः प्रतीयते, न तु ध्वंसः, नापि प्रागभावः इति सङ्क्षेपः ।

## २. अथ एवकारार्थः ।

एवशब्दस्य अवधारणम् अर्थः । अवधारणं व्यवच्छेदः । सः त्रिविधः । अयोगव्यवच्छेदः, अन्ययोगव्यवच्छेदः, अत्यन्तायोगव्यवच्छेदश्च इति । तदुक्तम् -

अयोगमन्ययोगञ्चात्यन्तायोगमेव च ।
व्यवच्छिनत्ति धर्मस्य एवकारस्त्रिधा मतः ।। इति ।

तत्र विशेषणसङ्गतस्य एवकारस्य अयोगव्यवच्छेदः, विशेष्यसङ्गतस्य अन्ययोगव्यवच्छेदः, क्रियासङ्गतस्य तु अत्यन्तायोगव्यवच्छेदः अर्थः इति विभागः । योगः = सम्बन्धः, तस्य व्यवच्छेदः = प्रतिषेधः अभावः इति यावत् । अयोगव्यवच्छेदः सम्बन्धाभावाभावः । सम्बन्धश्च एवकाराभावे यः प्रतीयते स एव । 'शङ्खः पाण्डुर एव' इत्यत्र विशेषणसङ्गतस्य एवकारस्य अयोगव्यवच्छेदः अर्थः । पाण्डुरत्वस्य गुणस्य शङ्खे सम्बन्धः समवायः । पाण्डुरत्वस्य एवकारार्थैकदेशे सम्बन्धे, द्वितीयाभावस्य शङ्खे च अन्वयः । पाण्डुरत्व-

सम्बन्धाभावाभाववान् शङ्खः इति बोधः । अत्र शङ्खत्वावच्छेदेन शङ्खे पाण्डुरत्व-सम्बन्धः प्रतीयते । अभावस्य अभावबोधनं प्रकृतसम्बन्धं द्रढयितुम् । अत्रेदं चिन्त्यम् । पाण्डुरशब्दो गुणिवाचकः । 'गुणवचनेभ्यो मतुपो लुगिष्टः' इति वचनात् मतुप्प्रत्ययो लुप्तः । धर्मिणि विशेषणतया उपस्थितस्य पाण्डुरत्वस्य अन्यत्र एवकारार्थे विशेषणतया अन्वयो दुर्लभः । किञ्च, एवकाराभावे पाण्डुरशङ्खयोः तादात्म्यं प्रतीयते, न तु समवायः सम्बन्धः । तस्मात् तादात्म्याभावव्यवच्छेदः अत्र एवकारार्थः । पाण्डुरतादात्म्याभावव्यवच्छेदवान् शङ्खः इति बोधः । व्यवच्छेदोऽभावः ।

**पार्थ एव धनुर्धरः ।**

अत्र विशेष्यसङ्गतस्य एवकारस्य अन्ययोगव्यवच्छेदः अर्थः । अन्यो भेदाश्रयः । भेदश्च समभिव्याहारमहिम्ना पार्थप्रतियोगिकः प्रतीयते । एव-कारार्थैकदेशस्य व्यवच्छेदस्य (अभावस्य) आश्रयतासम्बन्धेन धनुर्धरत्वे अन्वयः । एवञ्च, पार्थप्रतियोगिकभेदाश्रयसम्बन्धाभाववद्धनुर्धरत्ववदभिन्नः पार्थः इति शाब्दबोधः । पूर्वोक्तरीत्या तु अन्यतादात्म्याभावः एवकारार्थः । पार्थान्यतादात्म्याभाववद्धनुर्धराभिन्नः पार्थः इति बोधः ।

**नीलं सरोजं भवत्येव ।**

अत्र क्रियासङ्गतस्य एवकारस्य अत्यन्तायोगव्यवच्छेदः अर्थः । अयोगे आत्यन्तिकत्वं व्यवच्छिद्यते । आत्यन्तिकत्वञ्च अन्वयितावच्छेदकव्यापकत्वम् । प्रकृते च सरोजत्वम् अन्वयितावच्छेदकम् । सरोजानि नानावर्णानि भवन्ति, नीलानि, रक्तानि, श्वेतानि च । यद्यपि सर्वाणि सरोजानि नीलानि न, तथापि क्वचित् नीलमपि सरोजम् अस्त्येव इति प्रतिज्ञावाक्यमेतत् । अत्र नीलत्वादेः सरोजत्वादिसामानाधिकरण्येन अन्वयः, न तु अवच्छेदकावच्छेदेन, बाधात् । अत एव अयोगे आत्यन्तिकत्वं व्यवच्छिद्यते इति पूर्वम् उक्तम् । एवञ्च अयोगव्यवच्छेदः एव अयम् । विशेषणसङ्गतस्थले अवच्छेदकावच्छेदेन पाण्डुरत्वादेः अन्वयः, अत्र तु सामानाधिकरण्येन अन्वयः इत्येतावता अत्यन्तायोगव्यवच्छेदः इति व्यवहारः । अत्र अयोगे व्यवच्छेदे च खण्डशः शक्तिः । नीलपदार्थस्य अयोगे तादात्म्याभावे अन्वयः । धात्वर्थभवनस्य व्यवच्छेदे । एवञ्च नीलतादात्म्याभाववत्सरोजकर्तृकभवनाभावः इति बोधः ।

वस्तुतस्तु, अयोगव्यवच्छेदः अत्र अभावाभावरूपः । धात्वर्थभवनस्य प्रतियोगितया तत्र अन्वयः । नीलाभिन्नसरोजकर्तृकभवनाभावाभावः इत्येव शाब्दबोधः इत्यलं विस्तरेण ।

**पृथिव्यामेव गन्धः ।**

अत्र अन्ययोगव्यवच्छेदः एवकारार्थः । तथा हि । सप्तम्याः अधिकरणत्वम् अर्थः । पृथिव्याः तत्र वृत्तित्वसम्बन्धेन अन्वयः । अधिकरणत्वस्य स्वनिरूपित-आधेयत्वसम्बन्धेन गन्धे अन्वयः । एवशब्दस्य पृथिव्यन्यनिष्ठाधिकरणता-निरूपितत्वाभावः अर्थः । सोऽयम् अन्ययोगव्यवच्छेदः । तस्य आश्रयता-सम्बन्धेन सम्बन्धैकदेशाधेयतायाम् अन्वयः । तथा च पृथिवीनिष्ठाधिकरणता-निरूपिता या आधेयता पृथिवीतरनिष्ठाधिकरणतानिरूपितत्वाभाववती तदाश्रयो गन्धः इति शाब्दधीः । पृथिवीतरावृत्तिः पृथिवीवृत्तिः गन्धः इति सङ्क्षिप्त-बोधाकारः । ननु विशेष्यसङ्गतस्य एवकारस्य अन्ययोगव्यवच्छेदः अर्थः इति पूर्वम् उक्तम् । 'पृथिव्यामेव गन्धः' इति वाक्यजबोधे पृथिव्याः विशेषणत्वेनैव प्रतीयमानत्वात् कथं तत्सङ्गतस्य एवकारस्य अन्ययोगव्यवच्छेदार्थकत्वम् इति चेत्, उच्यते । तत्र 'विशेषण'पदस्य विधेयार्थकत्वम्, 'विशेष्य'पदस्य च उद्देश्यार्थकत्वं बोध्यम् । 'पृथिव्यामेव गन्धः' इत्यत्र पृथिव्याः उद्देश्यत्वम्, गन्धस्य तु विधेयत्वं प्रतीयते । ततश्च उद्देश्यगतस्य एवकारस्य अन्ययोग-व्यवच्छेदः अर्थः इति न पूर्वोक्तविरोधः । उद्देश्यताविधेयते च अतिरिक्ते एव विषयते, न तु विशेष्यताप्रकारतारूपे । अत एव 'चैत्रो गच्छति' इत्यादौ क्रियायाः विधेयताप्रतीतिः ।

**चैत्रस्यैवेदं धनम् ।**

अत्रापि अन्ययोगव्यवच्छेदः एवकारार्थः । स्वामितानिरूपितस्वत्वं चैत्र-पदोत्तरषष्ठ्याः अर्थः । चैत्रेतरनिष्ठस्वामितानिरूपितत्वाभावः एवकारार्थः । अस्य आश्रयतासम्बन्धेन स्वत्वे अन्वयः । चैत्रनिष्ठस्वामित्वनिरूपितं चैत्रेतर-निष्ठस्वामितानिरूपितत्वाभाववच्च यत् स्वत्वं तद्वत् धनमिति शाब्दबोधः ।

अन्ये तु अवधारणं ज्ञानविशेषमाहुः । अयोगव्यवच्छेदादिकं ज्ञाने प्रकारः । अवधारणस्य विषयतासम्बन्धेन यथायथं विशेषणादिषु अन्वयः । 'अवधारण-विषयपाण्डुराभिन्नः शङ्खः', 'अवधारणविषयपार्थाभिन्नो धनुर्धरः', 'नील-

सरोजकर्तृकभवनम् अवधारणविषयः' इति शाब्दबोधः ।

**लवणमेवासौ भुङ्क्ते ।**

अत्र प्राचुर्यम् एवकारार्थः । तस्य आश्रयतासम्बन्धेन अध्याहृते अन्नादौ अन्वयः । लवणप्राचुर्यवदन्नादिकं भुङ्क्ते इत्यर्थः ।

**क्वेव भोक्ष्यसे ।**

'एवे चानियोगे' इति वार्तिकात् अनवधारणम् एवकारार्थः । अनवधारणम् असम्भावना । यत्किञ्चिदधिकरणकत्वत्कर्तृकभविष्यत्कालिकभोजनं सम्भावनाविषयत्वाभाववत् इति बोधः । स्थलाभावादिना भोजनसम्भवाभावः अत्र बोध्यते ।

**३. अथ इवार्थः ।**

अत्र बहवो मतभेदाः । तेषां दिङ्मात्रं प्रदर्श्यते । 'कमलमिव मुखम्' इत्यत्र इवशब्दार्थः सादृश्यम् । तच्च पदार्थान्तरम् । तद्भाने समानधर्मः प्रयोजकः इत्येके । कमलस्य निरूपितत्वसम्बन्धेन सादृश्ये अन्वयः । तस्य आश्रयतासम्बन्धेन मुखे अन्वयः । कमलनिरूपितसादृश्याश्रयो मुखमिति बोधः । यद्वा, प्रतियोग्यनुयोगिभावेन अन्वयात् कमलप्रतियोगिकसादृश्यानुयोगि मुखमिति बोधः । आह्लादकत्वाख्यः साधारणो धर्मः व्यञ्जनया बुध्यते । निपातेवार्थस्य नञर्थस्येव भेदसंसर्गेण नामार्थविशेष्यत्वे विशेषणत्वे च न दोषः । 'कमलमिव सुन्दरं मुखम्' इत्यत्र कमलनिरूपितसादृश्यवन्मुखं सौन्दर्यवदभिन्नम् इति बोधः । सादृश्यप्रयोजकं सौन्दर्यमिति तु अर्थाद् गम्यते । 'कमलवत् सुन्दरं मुखम्' इत्यत्र तु 'भवति' इति अध्याहारः । 'तेन तुल्यं क्रिया चेद्वतिः' (पा. सू. ५.१.११५) इति सूत्रेण क्रियातौल्ये एव 'वति'-विधानात् । कमलपदस्य तत्कर्तृकभवने लक्षणा । कमलकर्तृकभवनसदृशम् इति 'कमलवत्'पदार्थः । तदभिन्नं सुन्दरमुखकर्तृकं भवनम् इति बोधः । ततश्च कमलमुखयोः सौन्दर्यकृतं सादृश्यं मानसबोधविषयः ।

अत्र पक्षे 'चन्द्रमिव मुखं पश्यामि' इत्यादौ चन्द्रादेः द्वितीया न स्यात् । चन्द्रपदार्थस्य इवार्थसादृश्ये अन्वयेन दर्शनक्रियाकर्मत्वाभावात् । तस्मात् चन्द्रादेः तत्सदृशे लक्षणा । इवशब्दः तात्पर्यग्राहकः । 'चन्द्रसदृशाभिन्नं

मुखं पश्यामि' इत्यर्थः । स्वाभिन्नमुखद्वारा फलाश्रयत्वात् चन्द्रपदार्थस्य कर्मता । 'चैत्रस्येव मैत्रस्य गृहम्' इत्यत्र गृहम् इत्यावृत्त्या चैत्रस्य गृहमिव मैत्रस्य गृहमिति योजना । चैत्रसम्बन्धिगृहसदृशाभिन्नं मैत्रसम्बन्धि गृहमिति शाब्दबोधः । औन्नत्यवैशाल्यादिसाधारणो धर्मस्तु गम्यः ।

'शरैरुस्त्रैरिवोदीच्यान् उद्धरिष्यन् रसानिव' इत्यत्र उस्त्रसदृशैः शरैः रससदृशान् उदीच्यान् उद्धरिष्यन् इत्याद्यर्थः । शराणां रसानां च तत्तत्सदृशेषु लक्षणास्वीकारादेव करणत्वं कर्मत्वञ्च बोध्यम् । इवशब्दस्तु द्योतकः । अन्यथा तदुत्तरतृतीयायाः द्वितीयायाश्च अनन्वयप्रसङ्गः । 'गज इव शूरो गच्छति' इत्यत्र गजशब्दस्य गजकर्तृकगमनसदृशे लक्षणा । तदभिन्नं शूरकर्तृकं गमनमिति बोधः ।

तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यम् इत्यपरे । भूयोधर्माश्च आह्लादकत्वादयः साधारणधर्माः । तद्गतत्वञ्च तत्सम्बन्धः एव । 'कृत्तद्धित-समासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेन' इति हरिवचनात् । एवञ्च साधारण-धर्मसम्बन्धः सादृश्यमिति फलति । तन्मते 'अरविन्दमिव सुन्दरं मुखम्' इत्यत्र अरविन्दपदार्थः आधेयतासम्बन्धेन इवपदार्थे साधारणधर्मे अन्वेति । साधारणधर्मस्य अभेदेन सम्बन्धेन सुन्दरपदार्थैकदेशे सुन्दरत्वे अन्वयः । ततश्च अरविन्दवृत्तिसमानधर्माभिन्नसुन्दरत्ववदभिन्नं वदनमिति बोधः । यत्र तु सुन्दरत्वादिकं नोपात्तं 'अरविन्दमिव मुखम्' इत्यादौ, तत्र साधारणधर्मस्य आश्रयतया उपमेये अन्वयः । अरविन्दवृत्तिसाधारणधर्माश्रयो मुखमिति बोधः । अस्मिन्नपि पक्षे 'अरविन्दमिव मुखं पश्यामि' इत्यत्र पूर्वोक्तदोषः स्थितः ।

नागेशभट्टास्तु - ''सादृश्यमतिरिक्तः पदार्थः । साधारणधर्मस्तु सादृश्य-प्रयोजकः । इवशब्दस्तु स्वसमभिव्याहृतचन्द्रादावुपमानत्वं तन्निर्वाहकम् आह्लादकत्वादिसाधारणधर्मसम्बन्धश्च द्योतयति । उपमानत्वञ्च साधारण-धर्मवत्त्वेन ईषदितरपरिच्छेदकत्वम् । परिच्छेदकत्वादेव तस्य विशेषणता । परिच्छेदकत्वञ्च परिच्छेद्यप्रतीतिं विना अनुपपन्नम् इति मुखादावुपमेयत्वञ्च द्योतयति इवशब्दः । साधारणधर्मश्च क्वचित् शब्देनोपात्तः, क्वचिदाक्षिप्तः । उपमानोपमेययोः यद्यपि स्वस्वरूपेण भेदः, तथापि आह्लादकत्वादिसाधारण-धर्मवत्त्वेन अभेदः । अत एव उपमानतावच्छेदकधर्मम् उपमेये आरोप्य

तयोरभेदेन अन्वयः । एवञ्च 'चन्द्र इव मुखमाह्लादकम्' इत्यत्र चन्द्रे आह्लादकत्वमुपमानत्वञ्च, मुखे उपमेयत्वञ्च इवशब्दो द्योतयति । तथा च आह्लादकोपमानभूतचन्द्राभिन्नम् आह्लादकमुपमेयं मुखमिति शाब्दबोधः । साधारणधर्मसम्बन्धश्च क्वचिद्विशेषणतया । यथा 'चन्द्र इव मुखमाह्लादकम्' इत्यत्र । क्वचिद्विशेष्यतया । यथा 'चन्द्र इव मुखमाह्लादयति' इत्यत्र । अत्र हि साधारणधर्मः विशेष्यतया तिङन्तेन उपात्त इति 'उपमानचन्द्रकर्तृकाह्लादाभिन्नः उपमेयमुखकर्तृकाह्लादः' इति बोधः । उपमानोपमेययोः अभेदान्वयादेव 'चन्द्रमिव मुखं पश्यामि' इत्यादौ तयोरेकविभक्तित्वनियमः । 'गज इव गच्छति चैत्रः' इत्यत्र गजशब्दस्य उपमानभूतगजकर्तृकगमनम् इत्यर्थः । उपमानभूत-गजकर्तृकगमनाभिन्नम् उपमेय-देवदत्तकर्तृकं गमनम् इति बोधः'' इत्याहुः ।

सम्भावनापि इवशब्दद्योत्या । उत्कटैकतरकोटिकः संशयः सम्भावना । भूयोधर्मवत्त्वं सम्भावनायां प्रयोजकम् । इवार्थे सादृश्ये तद्गतभूयोधर्मवत्त्वं तद्भिन्ने प्रतीयते । सम्भावनायां तु तद्गतभूयोधर्मवत्त्वेन निमित्तेन तद्भिन्ने तत्तादात्म्यम् उत्कटकोटिकत्वेन प्रतीयते इति विशेषः । 'दूरे तिष्ठन् देवदत्तः यज्ञदत्त इव दृश्यते' इत्यत्र इवशब्दार्थः सम्भावना । यज्ञदत्तस्य प्रकारता-निरूपकत्वसम्बन्धेन सम्भावनायाम् अन्वयः । तस्याश्च विषयतासम्बन्धेन देवदत्ते अन्वयः । तादात्म्यञ्च प्रकारतायां संसर्गः । एवञ्च तादात्म्यसंसर्गेण यज्ञदत्तनिष्ठप्रकारतानिरूपकसम्भावनाविषयदेवदत्तनिष्ठा चाक्षुषज्ञानविषयता इति 'देवदत्तो यज्ञदत्त इव दृश्यते' इति वाक्यात् जायमानः शाब्दबोधः । तिङन्तेन योगे सर्वत्र इवार्थः सम्भावना । 'न वै तिङन्तेनोपमानमस्ति' इति सन्सूत्रस्थभाष्यात् । 'चैत्रो गच्छतीव' इत्यत्र चैत्रकर्तृकगमनं सम्भावनाविषय-भूतम् इति बोधः । चैत्रकर्तृकयत्किञ्चिद्व्यापारेण निमित्तेन गमनं सम्भावना-विषयीकृतम् । इयञ्च सम्भावना आहार्या, अनाहार्या इति द्विविधा । अनाहार्या पूर्वोक्तस्थले । तस्याः आहार्यत्वे तु 'धूमस्तोमं तमः शङ्के' इत्यादौ उत्प्रेक्षालङ्कारे इत्यालङ्कारिकाणां व्यवहारः ।

### ४. अथ सहशब्दार्थः ।

'पुत्रेण सहागच्छति पिता' इत्यादौ साहित्यं सहशब्दार्थः । तच्च स्वसमभि-व्याहृतशब्दजन्योपस्थितिविषयक्रियादिसमानकालिकतत्क्रियादिमत्त्वम् ।

तृतीयार्थस्तु सहार्थानुयोगिनः मित्रादेः क्रियादौ यादृशः सम्बन्धः सः । स च क्रियावाचकशब्दसत्त्वे कर्तृत्वादिः, द्रव्यगुणयोर्योगे स्वत्वादिः । प्रकृते आगमन-समानकालिकागमनं सहशब्दार्थः । पुत्रशब्दोत्तरतृतीयार्थः कर्तृत्वम् । तस्य निरूपकत्वसम्बन्धेन सहार्थैकदेशे प्रथमागमने (पुत्रागमने) अन्वयः । द्वितीयागमनस्य (पितुः आगमनस्य) कर्तृत्वसम्बन्धेन आश्रयतासम्बन्धेन वा पितरि अन्वयः । तस्य अभेदसम्बन्धेन तिङर्थे कर्तरि । तस्य आधेयतासम्बन्धेन धात्वर्थगमने अन्वयः । 'वर्तमानकालिकमागमनम्' इति बोधः । अस्मिन् बोधे पितरि आगमनक्रियायाः द्वेधा भानं द्रष्टव्यम् । उद्देश्यतावच्छेदकविधेययोः ऐक्यं तु तयोः ईषद्भेदमादाय व्युत्पत्तिवादे परिहृतम् । विस्तरस्तु तत्रैव द्रष्टव्यः । वैयाकरणनये तु साहित्यम् अखण्डोपाधिरूपम् । तच्च समानदेशकालस्वत्त्वादि-सम्बन्धैः एकक्रियाद्रव्याद्यन्वयित्वसमनियतम् । 'पुत्रेण सह आगच्छति पिता' इत्यत्र 'पुत्रसाहित्यवान् पिता आगच्छति' इत्येव बोधः । पुत्रे समानकालिकागमनं तु सहशब्दान्वयबलात् पश्चात् प्रतीयते । आगमनक्रियान्वयः पितरि शाब्दः, पुत्रे तु आर्थः । अत एव 'सहयुक्तेऽप्रधाने' [पा.सू २.३.१९] इति सूत्रेण पुत्रशब्दात् तृतीया । पुत्रे अप्रधानत्वं हि शाब्दगुणाद्यन्वयित्वाभावरूपम् । न तु लौकिकम् अप्रधानत्वम् । 'राज्ञा सह सेना आगच्छति' इत्यत्र राजशब्दात् तृतीयानापत्तेः । एवञ्च तृतीयान्तार्थे क्रियादिप्रतीतिः मानसी इत्येव सूत्रस्वरसः ।

**पुत्रेण सह पिता स्थूलः ।**

अत्र पुत्रसाहित्यवान् पिता स्थूलः इति,

**पुत्रेण सह पितुर्धनम् ।**

इत्यत्र पुत्रसाहित्यवतः पितुर्धनमिति च बोधः । पुत्रे समानकालिकस्थौल्यस्य, धने पुत्रवृत्तिस्वामितानिरूपितस्वत्वस्य च बोधो मानसः । यदि तु पुत्रेऽपि क्रियादिसम्बन्धः शाब्दबोधे भासते, न त्वसौ मानसबोधविषयः इत्यनुभवः, तर्हि समभिव्याहृतपदबोध्यक्रियादिसमानकालिकत्वं सहशब्दार्थः । 'पुत्रेण सह आगच्छति पिता' इत्यत्र आगमनसमानकालिकत्वस्य आश्रयतासम्बन्धेन धात्वर्थे आगमने अन्वयः । 'पुत्रकर्तृकागमनसमानकालिकं पितृकर्तृकागमनम्' इति बोधः । 'पुत्रेण सह स्थूलः' इत्यत्र स्थौल्यसमानकालिकत्वं सहशब्दार्थः । तस्य स्थूलपदार्थैकदेशे स्थौल्ये अन्वयः । 'पुत्रवृत्तिस्थौल्यसमानकालिक-

स्थौल्यवान् पिता' इति बोधः । 'पुत्रेण सह पितुर्धनम्' इत्यत्र स्वामितानिरूपित-स्वत्वसमानकालिकत्वं सहशब्दार्थः । तस्य षष्ठ्यर्थसम्बन्धे अन्वयः । पुत्रवृत्तिस्वामितानिरूपितस्वत्वसमकालिकं यत् पितृनिष्ठस्वामितानिरूपितं स्वत्वं तद्वत् धनमिति बोधः । अत्र पक्षे पुत्रस्य पितरि अन्वयः परम्परया । 'सपुत्रः पिता आगतः' इति समासस्तु 'तेन सहेति तुल्ययोगे' (पा. सू. २.२.२८) इति सूत्रबलात् समर्थनीयः । अत्र साहित्यम् अखण्डोपाधिः इति पक्षः एव ज्यायान् इति प्रतिभाति । पूर्वोक्तशाब्दबोधप्रकारस्तु समानवित्तिवेद्यत्वेन उपपादनीयः । अत्र विद्वांसः प्रमाणम् । यत्र माषवापोत्तरं तिलवापः तत्र 'माषैः सह तिलान् वपति' इति प्रयोगे समानदेशत्वमात्रप्रतीतिः, न तु समानकालिकत्वस्य । 'सहैव दशभिः पुत्रैः भारं वहति गर्दभी' इत्यत्र यदि 'दशानां पुत्राणां विद्यमानत्वे अपि' इत्यर्थो बुबोधयिषितः, तर्हि सत्ता-समकालिकत्वं सहार्थः इति अभ्युपेयम् । दशपुत्रसत्तासमानकालिकं गर्दभीकर्तृकं भारकर्मकं वहनम् इति बोधः ।

### ५. अथ चशब्दार्थः ।

'चार्थे द्वन्द्वः' (पा. सू. २.२.२९) इति सूत्रे सिद्धान्तकौमुद्याम् एवम् उक्तम् – 'समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । परस्परनिरपेक्षस्यानेकस्य एकस्मिन् अन्वयः समुच्चयः । अन्यतरस्यानुषङ्गिकत्वे अन्वाचयः । मिलितानामन्वयः इतरेतरयोगः । समूहः समाहारः' इति । 'एकस्मिन् अन्वयः समुच्चयः' इत्यत्र 'अन्वयः' इति प्रतीकमादाय 'यत्रैवमन्वयः तत्र समुच्चयः चशब्दार्थः । न त्वन्वयः एव समुच्चयः इति भ्रमितव्यम्' इति नागेशभट्टाः व्याचख्युः । तत्र 'समुच्चयान्वाचययोः चशब्दो द्योतकः, तदर्थस्य साहित्यस्य विशेषणतया समभिव्याहृतपदार्थे प्रतीतेः । इतरेतरयोगसमाहारयोस्तु चशब्दो वाचकः । तदर्थसाहित्यस्य तत्र विशेष्यतया प्रतीतेः' इत्यपि तैरेव भाष्य-प्रदीपोद्योते प्रतिपादितम् । एवञ्च चशब्दार्थः साहित्यम् । साहित्यञ्च बहुविधम् । समुच्चयादयः साहित्यभेदाः इति विज्ञायते । सहशब्दार्थसाहित्यं नियमेन समानकालिकत्वादिघटितम् । समुच्चयादयस्तु न तथा इति भेदः ।

**ईश्वरं गुरुञ्च भजस्व ।**

अत्र चशब्दार्थः समुच्चयः । स च स्वसमभिव्याहृतगुरुपदार्थविशेषणतया

ईश्वरपदार्थविशेष्यतया च बुध्यते । ईश्वरप्रतियोगिकसमुच्चयाश्रयं गुरुम् इत्यर्थः । अथवा गुरुपदस्य ईश्वरसमुच्चितगुरौ लक्षणा । चशब्दस्तु तात्पर्यग्राहकः इति यावत् । अत्र एकस्य क्रियान्वयोत्तरम् अपरस्य क्रियावाचकपदावृत्त्या अन्वयः इति लघुशब्देन्दुशेखरे नागेशभट्टैः उक्तम् । तथा च 'ईश्वरं भजस्व' 'ईश्वर-समुच्चितं गुरुं भजस्व' इति वाक्यद्वयं निष्पद्यते । 'ईश्वरं गुरुञ्च भजस्व' इत्यत्र तु एकवाक्यता प्रतीयते । एकार्थविशेष्यकशाब्दबोधजनकत्वं कथम् उक्तवाक्य-द्वयस्य ? मम तु एवं प्रतिभाति । ईश्वरभजनविशिष्टं गुरुभजनमिति बोधः । वैशिष्ट्यञ्च स्वबोधोत्तरकालिकबोधविषयत्वेन, ससुच्चितत्वेन वा । गुरोरिव गुरुभजनस्यापि समुच्चितत्वे न किञ्चित् बाधकम् । 'ईश्वरभजनं कुरु गुरु-भजनञ्च' इत्युक्तौ भजनसमुच्चयस्य प्रतीतेः । तथा च उक्तस्थले त्वमिति अध्याहारः । भजेः प्रीत्यनुकूलव्यापारः अर्थः । लोडर्थः प्रेरणा । तस्याः विषयतासम्बन्धेन धात्वर्थव्यापारे अन्वयः । ईश्वरनिष्ठप्रीत्यनुकूलः त्वदभिन्न-कर्तृनिष्ठो यो व्यापारः प्रेरणाविषयः तद्विशिष्टः ईश्वरसमुच्चितगुरुनिष्ठ-प्रीत्यनुकूलः त्वत्कर्तृकः व्यापारः प्रेरणाविषयः इति शाब्दबोधः । अत्र सुधियः प्रमाणम् ।

**देवदत्तः पचति हसति च ।**

अत्र क्रियासमुच्चयः । देवदत्तकर्तृकपचनव्यापारसमुच्चितः देवदत्तकर्तृक-हसनव्यापारः इति बोधः ।

**भिक्षामट गाञ्चानय ।**

अत्र चशब्दार्थः अन्वाचयः । आनुषङ्गिकत्वं व्याप्यत्वञ्च चशब्दद्योत्यम् । आनुषङ्गिकत्वम् अनुद्देश्यरूपम् अप्राधान्यम् । उभयमपि चशब्दसमभिव्याहृत-नीधात्वर्थानयनक्रियायाम् । आनयनक्रियागतव्याप्यत्वञ्च चशब्दार्थप्रतियोग्यटन-क्रियानिरूपितम् । तथा च 'भिक्षामट, गाञ्चानय' इत्यतः प्रेरणाविषयीभूत-त्वत्कर्तृकभिक्षाटनव्याप्यम् आनुषङ्गिकं प्रेरणाविषयीभूतं त्वत्कर्तृकगवानयनम् इति बोधः ।

उद्भूतावयवभेदः समूहः इतरेतरयोगः । उद्भूतः = प्रकटः अवयवानां भेदः यस्य सः उद्भूतावयवभेदः । उद्भूतावयवभेदत्वस्य समूहे अवयवगत-सङ्ख्यारोपवत्त्वम् । चशब्दार्थः साहित्यरूपः समूहो विशेष्यः । अत्र समूहे

प्रत्येकावयववृत्तिः धर्मः प्रवृत्तिनिमित्तम् । समुदायद्वारा अवयवानामपि प्रत्येकं कर्तृत्वादियोगः इति तत्तन्निमित्तिका विभक्तिः अवयवेभ्यः भवत्येव । अवयवानां समुदायानतिरेकात् । अवयवाभेदेन इतरेतरयोगे समूहः प्रतीयते । 'चैत्रो मैत्रो यज्ञदत्तश्च गच्छन्ति' इत्यत्र उद्भूतावयवभेदः समूहः चार्थः । स च विशेष्यः । चैत्रमैत्रयज्ञदत्तरूपसमुदायाभिन्नकर्तृनिष्ठः गमनव्यापारः इति बोधः ।

'संज्ञापरिभाषम्' इत्यादिसमाहारद्वन्द्वे तु अनुद्भूतावयवभेदः समूहोऽर्थः इत्येकवचनमेव । अवयवातिरिक्तत्वेन समूहस्य तत्र भानम् । समूहत्वं तत्र प्रवृत्तिनिमित्तम्, न तु प्रत्येकवृत्तिधर्मः इति विशेषः ।

प्रति, परि, अभि इत्यादयः केचन शब्दाः अर्थविशेषे कर्मप्रवचनीयसंज्ञां लभन्ते । तस्याः निपातसंज्ञया अव्ययसंज्ञया च समावेशः । कर्म = क्रियाम् उक्तवन्तः 'कर्मप्रवचनीयाः' । बाहुलकात् कर्तरि भूते अनीयर् । क्रियानिरूपितं सम्बन्धविशेषम् एते द्योतयन्ति । 'कर्मप्रवचनीययुक्ते द्वितीया' (पा.सू. २.३.८) इति सूत्रेण एतद्योगे द्वितीया भवति ।

**वृक्षं प्रति विद्योतते विद्युत् ।**

अत्र 'लक्षणेत्थंभूताख्यान.....' (पा.सू. १.४.९०) इत्यादिसूत्रेण प्रतिः कर्मप्रवचनीयः । लक्षणं ज्ञापकम् । वृक्षप्रकाशज्ञानेन विद्युद्विद्योतनं ज्ञायते इति वृक्षो ज्ञापकः । तस्य ज्ञापकत्वं स्वज्ञानद्वारा । ज्ञापकतानिरूपितज्ञाप्यत्वं द्वितीयार्थः । वृक्षस्य वृत्तित्वसम्बन्धेन ज्ञापकतायाम् अन्वयः । ज्ञाप्यत्वस्य आश्रयतासम्बन्धेन धात्वर्थविद्योतने अन्वयः । वृक्षनिष्ठज्ञापकतानिरूपित-ज्ञाप्यताश्रयः विद्युत्कर्तृकविद्योतनव्यापारः इति बोधः ।

**अश्वो मां प्रति ।**

भागेऽर्थे प्रतिः कर्मप्रवचनीयः । भागो नाम स्वत्वाश्रयः । स्वस्वामिसम्बन्धः अत्र प्रतिद्योत्यो द्वितीयार्थः । मन्निष्ठस्वामितानिरूपितस्वत्वाश्रयः अश्वः इति बोधः ।

**वृक्षं वृक्षं प्रति परि अनु वा सिञ्चति ।**

अत्र वीप्सायां प्रत्यादयः कर्मप्रवचनीयाः । अत्र 'नित्यवीप्सयोः' (पा. सू. ८.१.४) इति द्विर्वचनेन बुद्धिस्थयावत्प्रकृत्यर्थनिष्ठव्याप्यत्वं द्योत्यते ।

व्याप्यत्वविशिष्टवृक्षादीनां व्यापकत्वसम्बन्धेन क्रियान्वयः प्रत्यादिद्योत्यः । व्यापकत्वं द्वितीयार्थः । व्याप्यवृक्षनिरूपितव्यापकत्ववत् सेचनमिति बोधः । यद्यपि अत्र द्विर्वचनेनैव वृक्षादौ क्रियाव्याप्तिः बुध्यते, तथापि 'परिसिञ्चति' इत्यत्र षत्वबाधनार्था, सम्बन्धसामान्यविवक्षायां षष्ठीबाधनार्था च कर्मप्रवचनीयसंज्ञा । सेचने व्यापकत्वञ्च स्वाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वम् । स्वं वृक्षत्वम् ।

**वातं विना वृक्षः पतितः ।**

विनाशब्दार्थः अभावः । तस्य आश्रयतासम्बन्धेन वृक्षे अन्वयः । द्वितीयार्थः प्रतियोगित्वम् । वातप्रतियोगिकाभावाश्रयो वृक्षः पतनाश्रयः इति शाब्दबोधः । पतने वातजन्यत्वाभावलाभस्तु आर्थः इति केचित् । अन्ये तु जनकतानिरूपितजन्यत्वप्रतियोगित्वं द्वितीयार्थः । प्रकृत्यर्थस्य सम्बन्धैकदेशे जनकतायाम् अन्वयः । विनाशब्दार्थस्य अभावस्य पतधात्वर्थे पतने अन्वयः । वातनिष्ठजनकतानिरूपितजन्यत्वप्रतियोगित्वाभाववत्पतनाश्रयो वृक्षः इति बोधः इत्याहुः । अपरे तु विनापदार्थस्य अभावस्य समानकालिकत्वसम्बन्धेन पतने अन्वयं वदन्ति । तन्मते वातप्रतियोगिकाभावसमानकालिकपतनाश्रयो वृक्षः इति बोधः ।

**पुत्रं विना आगतः पिता ।**

अत्र पुत्रशब्दस्य पुत्रकर्तृकागमने लक्षणा । विनाशब्दार्थाभावस्य समानकालिकत्वसम्बन्धेन धात्वर्थागमने अन्वयः । पुत्रकर्तृकागमनाभावसमानकालिकागमनाश्रयः पिता इति शाब्दधीः ।

**विना क्षीरं बालो रोदिति ।**

अत्र अभावस्य प्रयोज्यतासम्बन्धेन रोदने अन्वयः । क्षीराभावप्रयोज्यताश्रयो बालकर्तृकं रोदनमिति बोधः ।

**हरिं विना न सुखम् ।**

हरिशब्दः हरिभक्तौ लाक्षणिकः । हरिभक्त्यभावप्रयोज्यः सुखाभावः इति बोधः । विनाशब्दार्थः अभावः स्वविशेष्यतया पदार्थान्तरसाकाङ्क्षः एव प्रतीयते । अत एव चैत्रो न गच्छति इत्यर्थे 'चैत्रस्य गमनं विना' इति न प्रयोगः । एवम् अन्तरा, ऋते इत्यादिशब्दयोगेऽपि ।

**अमुं नारद इत्यबोधि सः ।**

अत्र तच्छब्देन श्रीकृष्णस्य परामर्शः । अदःशब्देन श्रीकृष्णदृष्टाकृति-विशेषस्य च । इतिशब्दार्थः प्रकारता । तत्र नारदपदार्थस्य आधेयतासम्बन्धेन अन्वयः । प्रथमा तु साधुत्वार्था । प्रकारतायां तादात्म्यं संसर्गतया भासते । अमुम् इत्यत्र द्वितीयार्थः विशेष्यताख्या विषयता । प्रकारतायाः विशेष्यतायाश्च निरूपकत्वसम्बन्धेन बुधधात्वर्थे ज्ञाने अन्वयः । तथा च तादात्म्यसंसर्गेण नारदनिष्ठप्रकारतानिरूपकम् अदःपदार्थनिष्ठविशेष्यतानिरूपकञ्च श्रीकृष्णनिष्ठं भौतकालिकं ज्ञानमिति शाब्दबोधः ।

तादात्म्यसम्बन्धावच्छिन्नप्रकारतायाः कर्मत्वानुशिष्टद्वितीयार्थकत्वं 'रङ्गं रजतं जानाति' इत्यत्र व्युत्पत्तिवादे भट्टाचार्यैः स्वीकृतम् । अत एव इतिशब्देन कर्मत्वस्य अभिधानात् नारदपदोत्तरं न द्वितीया । केचित्तु इतिशब्दस्यैव नारदः इत्यर्थः । नारदपदं तु तात्पर्यग्राहकम् । इतिशब्दस्य अव्ययत्वात् तदुत्तरद्वितीया लुप्ता । अमुं नारदाभिन्नमबोधि इति अर्थम् आहुः । नागेशभट्टैस्तु 'नारद इति' इति श्रीकृष्णीयज्ञानाकारानुकरणम् इत्युक्तम् । तन्मते तु आकृतिविशेषनिष्ठ-विषयतानिरूपकं नारदेत्येतच्छब्दाभिलप्यमानाकारकं श्रीकृष्णनिष्ठं भौत-कालिकं ज्ञानमिति बोधः ।

**चैत्र इति वदति ।**

चैत्रपदस्य 'चैत्रः' इति शब्दः अर्थः । इतिशब्दः तस्य शब्दपरत्वे तात्पर्यग्राहकः । वदधातोः अभिव्यक्त्यनुकूलम् उच्चारणमर्थः । उच्चारणस्य कण्ठताल्वाद्यभिहननरूपो व्यापारः । अभिव्यक्तिश्च विषयतासम्बन्धेन चैत्र-शब्दनिष्ठा । चैत्रशब्दनिष्ठाभिव्यक्त्यनुकूलम् उच्चारणम् इति बोधः ।

**चैत्र इति नाम ।**

पूर्ववदेव चैत्रशब्दस्य 'चैत्र' इति शब्दः अर्थः । अभेदः सम्बन्धः । चैत्राभिन्नं नाम इति बोधः ।

**(रावणः क्रूरः) विभीषणस्तु साधुः ।**

तुशब्दार्थो वैलक्षण्यम् । तच्च पूर्वोक्तरावणप्रतियोगिकं बुध्यते । तस्य आश्रयतासम्बन्धेन विभीषणपदार्थे अन्वयः । रावणप्रतियोगिकवैलक्षण्याश्रयो

विभीषणः साधुरिति बोधः । अथवा वैलक्षण्यस्य प्रयोजकतासम्बन्धेन साधुपदार्थैकदेशे साधुत्वे अन्वयः । रावणप्रतियोगिकवैलक्षण्यप्रयोजकसाधुत्ववान् विभीषणः इति बोधः ।

**यदि रामो वनं गच्छति तर्हि सीतापि गच्छति ।**

यदिशब्दार्थः प्रयोजकता । 'रामो वनं गच्छति' इत्यत्र विद्यमानगच्छत्यर्थगमनस्य वृत्तित्वसम्बन्धेन प्रयोजकतायाम् अन्वयः । तर्हिशब्दस्य प्रयोज्यत्वम् अर्थः । प्रयोजकतायाः निरूपितत्वसम्बन्धेन प्रयोज्यत्वे अन्वयः । प्रयोज्यत्वस्य द्वितीयशब्दगच्छत्यर्थे गमने आश्रयतासम्बन्धेन अन्वयः । अपिशब्दार्थः समुच्चयः । तस्य आश्रयतासम्बन्धेन सीतायाम् अन्वयः । सीता गच्छति इत्यत्र वनम् इति अध्याहार्यम् । रामकर्तृकवनगमननिष्ठप्रयोजकतानिरूपितप्रयोज्यताश्रयः समुच्चयाश्रयसीताकर्तृकवनकर्मकगमनम् इति बोधः ।

**अयं सर्पो रज्जुर्वेति सन्देग्धि ।**

एकस्मिन् धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यज्ञानं संशयः इत्युक्तम् । 'अयम्' इत्यनेन पुरोवर्ती कश्चित् पदार्थो धर्मी बोध्यते । तस्मिन् सर्पो रज्जुश्चेति परस्परविरुद्धौ तादात्म्यसम्बन्धेन भासेते । समानविभक्तिकनामार्थयोः तादात्म्यं संसर्गः । सर्पो वा रज्जुर्वेति च कोटिद्वयम् । सर्पो वा इत्यत्र वाशब्दार्थो विरोधः । स च रज्जुप्रतियोगिको बुध्यते समभिव्याहारबलात् । विरोधस्य आश्रयतासम्बन्धेन सर्पे अन्वयः । इतिशब्दार्थः प्रकारता । सर्पपदार्थस्य प्रकारतायाम् आधेयतासम्बन्धेन अन्वयः । तथा च रज्जुप्रतियोगिकविरोधाश्रयसर्पनिष्ठा प्रकारता इति प्रथमकोटेः अर्थः । एवमेव रज्जुर्वेति द्वितीयकोटेरपि अन्वयो बोध्यः । प्रकारताद्वयस्यापि निरूपकतासम्बन्धेन धात्वर्थे सन्देहे अन्वयः । इदंपदार्थस्य विशेष्यतानिरूपकत्वसम्बन्धेन धात्वर्थसन्देहे अन्वयः । एवञ्च, तादात्म्यसम्बन्धेन रज्जुप्रतियोगिकविरोधाश्रयसर्पनिष्ठा या प्रकारता, तादात्म्यसम्बन्धेन सर्पप्रतियोगिकविरोधाश्रयरज्जुनिष्ठा च या प्रकारता तदुभयप्रकारतानिरूपकः इदंपदार्थविशेष्यतानिरूपकश्च सन्देहरूपव्यापारः कर्तृनिष्ठः इति शाब्दबोधः ।

**आ मुक्तेः संसारः ।**

'आङ् मर्यादावचने' (पा. सू. १.४.८९) इति सूत्रेण मर्यादायाम् आङ्

कर्मप्रवचनीयः । 'पञ्चम्यपाङ्परिभिः' (पा. सू. २.३.१०) इति सूत्रेण मुक्तिशब्दात् पञ्चमी । तं विना मर्यादा, तेन सह अभिविधिरिति वृद्धोक्तिः । अत्र कालरूपा मर्यादा प्रतीयते । कालगतमर्यादात्वञ्च स्वप्रागभावाधिकरण-कालवृत्तिः यः समभिव्याहृतपदार्थः तदनधिकरणत्वम् । अत्र आङर्थो व्यापकत्वम् । पञ्चम्यर्थो निरूपितत्वम् । मुक्तिपदञ्च मुक्त्यधिकरणकाल-प्रागभावपरम् । निरूपितत्वस्य आश्रयतासम्बन्धेन आङर्थे व्यापकत्वे अन्वयः । व्यापकत्वस्य च स्वप्रतियोग्यवृत्तित्वविशिष्टाश्रयतासम्बन्धेन संसारे अन्वयः । स्वं = मुक्त्यधिकरणकालप्रागभावः । एवञ्च, मुक्त्यधिकरणकालप्रागभाव-निरूपितस्वप्रतियोग्यवृत्तित्वविशिष्टव्यापकतावान् संसारः इति शाब्दबोधः ।

**उभयतः कृष्णं गोप्यः ।**

उभयशब्दस्य पार्श्वद्वयम् अर्थः । आद्यादित्वात् सप्तम्यास्तसिः । अधि-करणत्वं तसेरर्थः । तस्य स्वनिरूपिताधेयतासम्बन्धेन गोपीषु अन्वयः । कृष्णपदोत्तरद्वितीयायाः सम्बन्धसामान्यम् अर्थः । उपपदविभक्तीनां शेष-षष्ठ्यपवादत्वात् । कृष्णसम्बन्धिपार्श्वद्वयनिष्ठाधिकरणतानिरूपिंताधेयतावत्यो गोप्यः इति शाब्दबोधः ।

**अन्तरा नन्दं यशोदाञ्च हरिः ।**

अन्तरा इति अव्ययं मध्यदेशार्थकम् अधिकरणशक्तिप्रधानम् । नन्द-शब्दोत्तरद्वितीयायाः यशोदाशब्दोत्तरद्वितीयायाश्च अवधित्वरूपसम्बन्धः अर्थः । तस्य निरूपकत्वसम्बन्धेन अन्तराशब्दार्थैकदेशे मध्यत्वे अन्वयः । अन्तरा-शब्दार्थैकदेशाधिकरणतायाः स्वनिरूपिताधेयतासम्बन्धेन हरौ अन्वयः । नन्द-निष्ठावधित्वनिरूपितयशोदानिष्ठावधित्वनिरूपितं यन्मध्यत्वं तद्वद्देश-निष्ठाधिकरणतानिरूपिताधेयतावान् हरिरिति बोधः ।

**अन्तरा हरिं न सुखम् ।**

अत्र तु अत्यन्ताभावः अन्तराशब्दार्थः । हरिशब्दः हरिविषयकभक्तौ लाक्षणिकः । द्वितीयार्थः प्रतियोगित्वम् । तच्च अन्तराशब्दार्थे अभावे अन्वेति । अभावश्च प्रयोज्यतासम्बन्धेन नञर्थाभावे अन्वेति । एवञ्च, हरि-भक्तिप्रतियोगिकाभावप्रयोज्यः सुखाभावः इति बोधः ।

**हरये नमः ।**

उत्कृष्टत्वप्रकारकज्ञानानुकूलव्यापारो नमःशब्दार्थः । स च व्यापारः क्वचित् करशिरःसंयोगादिरूपः, क्वचित् ईदृशशब्दप्रयोगरूपः । अयं व्यापारः प्रयोक्तृनिष्ठः एव प्रतीयते । अपकृष्टत्वमपि प्रयोक्तृनिष्ठमेव प्रतीयते, शब्दशक्तिस्वाभाव्यात् । चतुर्थ्यर्थः आश्रयत्वम् । अथवा अपकर्षकबोधानुकूलव्यापारो नमःपदार्थः । अपकर्षो व्यापारश्च प्रयोक्तृगतौ । अवधित्वं चतुर्थ्यर्थः । तस्य निरूपकतासम्बन्धेन अपकर्षे अन्वयः । हरिनिष्ठावधित्वनिरूपकस्वापकर्षकबोधानुकूलः स्वव्यापारः इति बोधः । अत्र स्वः प्रयोक्ता । हरिनिष्ठोत्कृष्टत्वप्रकारकज्ञानानुकूलव्यापारः प्रयोक्तृनिष्ठः इति बोधः ।

**एषोऽर्घ्यः शिवाय नमः ।**

नमःशब्दार्थोऽत्र त्यागः । त्यागश्च स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनम् । चतुर्थ्यर्थः उद्देश्यत्वम् । तच्च स्वत्वभागितया त्यागजनकेच्छाविषयत्वम् । नमःपदार्थत्यागस्य विषयताविशेषसम्बन्धेन अर्घ्ये अन्वयः । शिवोद्देश्यकत्यागविषयः अर्घ्यः इति बोधः ।

**प्रजाभ्यः स्वस्ति ।**

स्वस्तिशब्दस्य मङ्गलमर्थः । सम्बन्धः चतुर्थ्यर्थः । प्रजासम्बन्धि मङ्गलमिति बोधः ।

**स्वस्त्यस्तु गोभ्यः ।**

अत्र आशिषि लोट् । आशीश्च शुभाशंसनम् । तस्य विषयतासम्बन्धेन असधात्वर्थे भवने अन्वयः । गोसम्बन्धिमङ्गलकर्तृकमाशीर्विषयभूतं भवनमिति बोधः ।

**स्वस्त्यस्तु सर्वजगताम् ।**

अत्र 'सर्वजगताम्' इत्यस्य 'अस्तु' इत्यनेन अन्वयः, न तु स्वस्तिशब्देन । अत एव चतुर्थी न । सम्बन्धसामान्ये षष्ठी । स्वस्तिकर्तृकं सर्वजगत्सम्बन्धि आशीर्विषयभूतं भवनमिति बोधः इति शम् ।

★ ★ ★

# १४. शाब्दबोधप्रक्रिया

वैयाकरणसिद्धान्तम् अवलम्ब्य शाब्दबोधप्रकारः अत्र निरूप्यते । अत्र समवेतानां सर्वेषां बुभुत्सूनां सुबोधो भवतु इत्याशयेन तर्कशैलीं शास्त्र-फक्किकाश्च परित्यज्य सरलया भाषया वस्तुतत्वं विवेचयितुम् अयम् उद्यमः । अथ को नाम शाब्दबोधः ? शब्दस्यायं शाब्दः । शब्दजन्यः इत्यर्थः । शाब्दश्चासौ बोधश्च शाब्दबोधः । 'शब्दजन्यम् अर्थज्ञानम्' इति तदर्थः । अत्र 'शब्द'पदेन वाक्यं गृह्यते । वाक्यं नाम परस्परसाकाङ्क्षः क्रियान्वितः पदसमूहः । आकाङ्क्षा नाम एकपदार्थज्ञाने जाते 'अस्य अन्वय्यार्थः

कः' इत्येवंरूपा जिज्ञासा । यथा 'देवदत्तो गाम् आनयति' इत्येकं वाक्यम् । अत्र देवदत्तः इत्युक्तौ 'सः किं करोति ?' इति तदन्वयार्थस्य जिज्ञासा जायते । सा च 'आनयति' इति क्रियापदेन निवर्तते । पुनश्च 'काम् आनयति ?' इत्याकाङ्क्षा 'गाम्' इत्यनेन पूर्यते । एवं 'गाम्' इत्युक्तौ 'आनयति' इत्युक्तौ च अन्यार्थयोः आकाङ्क्षा जायते इति स्वयम् ऊह्यम् । जिज्ञासारूपा इयम् आकाङ्क्षा यद्यपि पुरुषनिष्ठा, तथापि तस्याः स्वविषये अर्थे आरोपः । अत एव 'अयमर्थः अर्थान्तरम् आकाङ्क्षते' इत्यादिव्यवहारः । 'इदं पदं साकाङ्क्षम्' इति व्यवहारोऽपि पदे तस्याः आरोपादेव । इदं पदं साकाङ्क्षार्थबोधकमिति तदर्थः । शब्दार्थयोः तादात्म्यात् शब्दगतम् अर्थे, अर्थगतश्च शब्दे आरोप्य अभेदेन भवति व्यवहारः । परस्परसाकाङ्क्षा इत्युक्तेः 'देवदत्तः भूमिः गां पठन्ति' इत्यादि पदकदम्बस्य नास्ति वाक्यता निराकाङ्क्षत्वात् । सर्वापि आकाङ्क्षा क्रियायां परिसमाप्यते, क्रियापदं विना आकाङ्क्षायाः समाप्तिर्न भवति इति अभिप्रायेण 'क्रियान्वितः पदसमूहः' इत्युक्तम्, क्रियां विना वाक्यार्थस्य अपर्यवसानात् । यत्रापि 'द्वारम्' इत्येकं पदं प्रयुज्यते, तत्रापि 'पिधेहि त्वम्' इति अध्याहारः ।

यत्र 'पिधेहि' इत्येकं पदं तत्र 'द्वारम्' इति अध्याहारः । अत एव 'पदसमूहो वाक्यम्' इत्युक्तम् । एवञ्च 'शाब्दबोधो नाम वाक्यार्थज्ञानम्' इत्युक्तं भवति ।

शब्दस्य अर्थावगमने किमपि सामर्थ्यं वर्तते । इदमेव सामर्थ्यं शक्तिः अथवा अभिधा, लक्षणा, व्यञ्जना चेति त्रिधा विभक्तम् । तत्स्वरूपनिर्णये च बहुधा विवदन्ते तीर्थकरा इति नेह प्रस्तूयते विस्तरभयात् । इदं सामर्थ्यं वृत्तिरिति अभिधीयते शास्त्रेषु । एषु वृत्तिभेदेषु शक्तिः प्राधान्येन अवतिष्ठते । सर्वस्यापि अर्थस्य ज्ञाने 'इदं पदम् अस्मिन्नर्थे शक्तम्' इति शक्तिग्रहः आवश्यकः । शक्त्या ज्ञायमानः अर्थः 'शक्यः' इति अभिधीयते । शक्यार्थ-ज्ञानात् परमेव क्वचित् क्वचित् निमित्तान्तरेण लक्षणायाः व्यञ्जनायाः वा प्रवेशः । शक्तिग्रहश्च व्याकरणशास्त्रादिभिः जायते । तदुक्तम् -

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।**
**वाक्यस्य शेषात् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥**

इत्येषु शक्तिग्राहकेषु व्यवहारो मूर्धन्यः शक्तिग्राहकशिरोमणिः इत्याख्यायते । ततो द्वितीयन्तु व्याकरणशास्त्रमेव । वाक्यार्थज्ञानरूपशाब्दबोधे जननीये प्रथमं वाक्यघटकपदज्ञानं, ततः शक्त्या पदार्थज्ञानम्, ततश्च आकाङ्क्षादिभिः सहकारि-कारणैः वाक्यार्थबोधः इति क्रमः । आकाङ्क्षा-योग्यता-आसत्ति-तात्पर्याणि सहकारिकारणानि । तत्र आकाङ्क्षा पूर्वमुक्ता । अर्थाबाधो योग्यता । अथवा परस्परान्वयप्रयोजकधर्मवत्त्वं योग्यता । यथा 'जलेन सिञ्चति' इति वाक्ये जलं सेकक्रियायां करणम् । तत्र द्रवद्रव्यत्वरूपः सेचनान्वयप्रयोजकधर्मो वर्तते इति जलस्य सेकक्रियायां योग्यता अस्ति । ततश्च शाब्दबोधो निर्बाधः । 'वह्निना सिञ्चति' इति वाक्यं तु बाधितार्थकम् । वह्निरूपे करणे द्रव-द्रव्यत्वाभावात् । अत्र शाब्दज्ञानन्तु जायते एव । परन्तु तदप्रमाणमिति लघुमञ्जूषायां नागेशभट्टैः उक्तम् । अत एव 'वह्निना सिञ्चति' इति केनचिदुक्ते 'कथमद्रवेण वह्निना सेकं ब्रवीषि ?' इति परेण उपहासोक्तिः सङ्गच्छते । वाक्यपदीये हरिरप्याह - 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति । अत एव -

**एष वन्ध्यासुतो याति खपुष्पकृतशेखरः ।**
**मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः ॥**

इत्यादौ शाब्दबोधः अनुभवसिद्धः । तत्र अप्रामाण्यबुद्धिर्जायते इति तु अन्यत् ।

प्रकृतान्वयबोधस्य अननुकूलपदेन अव्यवधानम् आसत्तिः । 'पर्वतो वह्निमान्' इति आसन्नम् । अत्र पदद्वयं प्रकृतान्वयबोधस्य अनुकूलमेव । 'पर्वतो भुक्तं वह्निमान् देवदत्तेन' इति अनासन्नम् । 'पर्वतो वह्निमान्' इति वाक्यमध्ये 'भुक्तम्' इति, 'भुक्तं देवदत्तेन' इति वाक्यमध्ये 'वह्निमान्' इति च पदद्वयं प्रकृतान्वयबोधे अननुकूलम् । आसत्तिरपि मन्दबुद्धेः शाब्दबोधे कारणम् । अमन्दबुद्धेस्तु आसत्त्यभावेऽपि पदार्थोपस्थितौ शाब्दबोधो भवत्येवेति नागेशभट्टाः । अत एव दूरान्वयपदघटितेषु महाकविप्रणीतश्लोकेषु शाब्दबोधो विदुषाम् ।

वक्तुरिच्छा तात्पर्यम् । इदन्तु प्रायेण नानार्थकपदघटितेषु पदेषु शाब्दबोधाय उपयुज्यते । वक्तुः तात्पर्यञ्च प्रकरणादिना श्रोतुः जायते । भोजनप्रकरणे 'सैन्धवमानय' इत्युक्ते सैन्धवपदस्य लवणमित्यर्थो ज्ञायते । युद्धप्रसङ्गे तु सैन्धवो नाम अश्वः इत्यर्थो ज्ञायते ।

एवञ्च पदानि स्वं स्वम् अर्थम् अभिधाय निवृत्तव्यापाराणि भवन्ति । अभिहिताश्च पदार्थाः आकाङ्क्षादिभिः सहकारिभिः वाक्यार्थबोधं जनयन्ति । पदार्थानाम् अन्वयस्तु आकाङ्क्षाभास्यः । 'वाच्यवाचकभावाख्यः पदपदार्थयोः सम्बन्धः शक्तिः, न तु ईश्वरसङ्केतः' इति वैयाकरणाः । सर्वमिदं पीठिकारूपेण संक्षेपतः अभिहितम् । अधुना प्रकृतमभिधीयते ।

परस्परं विशेष्यविशेषणभावम् आपन्नाः पदार्थाः शाब्दबोधे गोचरीभवन्ति । तत्र एकः पदार्थो विशेषणम्, अपरो विशेष्यम् (विशेष्यः इति वा) तदेव विशेष्यं स्वेतरपदार्थं प्रति विशेषणमपि भवति । एवं स्थिते सर्वपदार्थैः विशेष्यमाणो मुख्यपदार्थः कः ? शाब्दबोधाकारः कीदृशः इति प्रश्नः । 'प्रथमान्तार्थमुख्यविशेष्यकः शाब्दबोधः' इति नैयायिकाः । 'भावनाविशेष्यकः शाब्दबोधः' इति मीमांसकाः । वैयाकरणास्तु 'धात्वर्थमुख्यविशेष्यकं शाब्दबोधम्' उररीकुर्वन्ति । तथाहि -

वाक्यात् प्रतीयमानाः सर्वे द्रव्यादिपदार्थाः क्रियां प्राप्य निवृत्ताकाङ्क्षाः भवन्ति । क्रिया च धात्वर्थः । यथा स्यन्दमानानां नदीनां समुद्रः परायणं, समुद्रञ्च प्राप्य निवृत्तगतयो भवन्ति, तथा सर्वेषां कारकाणां क्रिया परायणं, क्रियां प्राप्य शान्ताकाङ्क्षाणि भवन्तीति युक्तम् । अकारकं शेषषष्ठ्यन्तमपि,

उपनदी महानदीद्वारा समुद्रमिव कारकद्वारा क्रियां सङ्गच्छति । 'चैत्रस्य गृहं प्रविशति' इत्यत्र चैत्रस्य कर्मकारकगृहद्वारा प्रवेशक्रियायाम् अन्वयः । 'देवदत्तस्य पुत्रो ग्रामं गच्छति' इत्यादौ देवदत्तस्य पुत्रे, पुत्रस्य च गमनक्रियायाम् अन्वयः । यद्यपि तत्र पुत्रस्य शास्त्रीयकारकसंज्ञा नास्ति, तथापि क्रियानिर्वर्तकत्व-रूपकर्तृकारकत्वम् अक्षतमेव । पुत्रो हि गमनक्रियायाः कर्ता । अत एव प्रथमाविभक्तेः कारकविभक्तित्वं भाष्यकारैः स्पष्टम् अभिहितम् । कर्तरि-प्रयोगे प्रथमान्तं कर्तृकारकं, कर्मणिप्रयोगे कर्मकारकमिति विज्ञेयम् । अत एव 'तिङ्समानाधिकरणे प्रथमा' इति वार्तिककाराः । प्रथमान्तस्य तिङर्थे कर्तरि कर्मणि वा यथायथम् अन्वयः । कर्तरिप्रयोगे तिङर्थः कर्ता, कर्मणि प्रयोगे तिङर्थः कर्म । 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रात् । तत्र शाब्दबोधप्रकारः पश्चात् प्रदर्शयिष्यते ।

समर्थसूत्रे भाष्ये 'आख्यातं साव्ययकारकविशेषणं वाक्यम्' इति वार्त्तिकं पठितम् । पुनश्च 'आख्यातं सविशेषणं वाक्यम्' इत्यपि पठितम् । एतेन वाक्ये कारकादीनि सर्वाण्यपि आख्यातस्य विशेषणानि इति स्पष्टं विज्ञायते । आख्यातं नाम तिङन्तं क्रियापदम् । तत्र विशेषणञ्च साक्षात् परम्परया वा । अत एव भर्तृहरिणा वाक्यलक्षणम् एवमुक्तम् -

**साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम् ।**
**क्रियाप्रधानं गुणवदेकार्थं वाक्यमुच्यते ।।** इति ।

अस्य अर्थः - भेदे पदार्थविभागे क्रियमाणे, साकाङ्क्षावयवं परस्पर-साकाङ्क्षार्थकपदघटितम् । परानाकाङ्क्षशब्दकम् - परस्मिन् वाक्यघटक-पदार्थातिरिक्ते अर्थे अनाकाङ्क्षः शब्दः यस्य तत् । गुणवद्विशेषणसहितम् । एकार्थम् - अन्वितैकार्थबोधकम्, क्रियाप्रधानं क्रियामुख्यविशेष्यकबोधजनकं वाक्यमुच्यते इति ।

एवं वाक्यात् क्रियामुख्यविशेष्यकशाब्दबोधे सिद्धे, क्रियावाचकतिङन्ते को धात्वर्थः ? कश्च तिङर्थः ? कथं तत्र विशेष्यविशेषणभावः ? इति विचारणीयं भवति । अत्र वैयाकरणभूषणसारे भट्टोजिदीक्षितानां कारिका -

**फलव्यापारयोर्धातुः आश्रये तु तिङः स्मृताः ।**
**फले प्रधानं व्यापारः तिङर्थस्तु विशेषणम् ।।** इति ।

फलव्यापारयोर्धातुः – धातोः फले व्यापारे च पृथक् शक्तिः। धात्वर्थः फलं व्यापारश्च। व्यापारो नाम साध्यत्वेन अभिधीयमाना क्रिया। साध्यत्वञ्च निष्पाद्यत्वम्। फलत्वञ्च तद्धात्वर्थक्रियाजन्यत्वे सति तद्धात्वर्थत्वम्। यथा 'तण्डुलं पचति' इत्यत्र जलाग्निसंयोगादिर्व्यापारः। तज्जन्या विक्लित्तिः फलम्। विक्लित्तिर्नाम तण्डुले जायमानो विकासविशेषः। भोजनादिकन्तु न फलम्। तस्य पचधात्वर्थत्वाभावात्। आश्रये तु तिङः स्मृताः – फलाश्रयो व्यापाराश्रयश्च तिङर्थः इत्यभिप्रायः। तत्र व्यापाराश्रयः कर्ता, फलाश्रयः कर्म। कर्तरिप्रयोगे कर्ता तिङर्थः। कर्मणिप्रयोगे तिङर्थः कर्म इति व्यवस्था। भावेप्रयोगे तु भावः एव तिङर्थः। भावो नाम धात्वर्थः क्रिया। तिङ् तु धात्वर्थानुवादकः एव इति बोध्यम्। अत्र च 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रं प्रमाणम्। सूत्रे 'कर्तरि' इत्यनुवर्तते। कर्तरि, कर्मणि, भावे च लकाराः विधीयन्ते। तिङश्च लकारादेशाः। 'स्थान्यर्थाभिधानसमर्थस्यैव आदेशता' इति सिद्धान्तात् स्थानिनां लकाराणाम् अर्थः एव तिङाम् अपि अर्थः। फले प्रधानं व्यापारः – फलस्य अनुकूलतासम्बन्धेन व्यापारे अन्वयः। फलानुकूलव्यापारो धातुबोध्यः इति फलितम्। अनुकूलता नाम जनकता। फलानुकूलव्यापारः इत्यस्य फलजनकव्यापारः इत्यर्थः। अत एव 'पचति' इत्यत्र विक्लित्यनुकूलव्यापारो धात्वर्थः, 'गच्छति' इत्यत्र उत्तरदेश-संयोगानुकूलव्यापारो गमेरर्थः इत्यादिः व्युत्पत्तिः। तिङर्थस्तु विशेषणम् – तिङर्थः कर्ता व्यापारे, तिङर्थः कर्म फले च आधेयतासम्बन्धेन विशेषणम्। कर्तृनिष्ठो व्यापारः, कर्मनिष्ठं फलमिति विवेकः। भावे तिङ् तु न कस्यचिद् विशेषणं, स्वार्थपर्यवसायि इति बोध्यम्। अत्र नव्यवैयाकरणानाम् ईषत् मतभेदो विद्यते। ते हि धातोः फले व्यापारे च पृथक् शक्तिं नाभ्युपगच्छन्ति। किन्तु फलानुकूलव्यापारे, व्यापारजन्यफले च धातूनां शक्तिः। कर्तृप्रत्यय-समभिव्याहारः फलानुकूलव्यापारबोधे, कर्मप्रत्ययसमभिव्याहारो व्यापारजन्य-फलबोधे च नियामकः इत्याहुः। अन्यत् सर्वं समानम्। कर्मणिप्रयोगे शाब्दबोधाकारेऽपि मतभेदो वर्तते। स पश्चान्निरूपयिष्यते।

तिङर्थस्तु धात्वर्थे विशेषणम् इत्युक्तं किल। इदानीं तत्र प्रमाणं वक्तव्यम्। अत्रैव तार्किकाणां महान् कोलाहलः। उच्यते – 'भावप्रधानमाख्यातम्, सत्त्वप्रधानानि नामानि' इति निरुक्ते यास्काचार्येण अभिहितम्। तत्र नामपदेन

सुबन्तं गृह्यते इति निरुक्तभाष्ये स्पष्टम् । आख्यातपदेन तिङन्तं गृह्यते । भावकाल-कारकसंख्याः चत्वारोऽर्थाः आख्यातस्य । 'तेषु भावः प्रधानम्' इति निरुक्तभाष्यम् । भावो नाम क्रिया धात्वर्थः । 'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते' इति वचनं प्रसिद्धम् । एवञ्च 'पचति' इत्याख्याते = तिङन्ते धात्वर्थो भावः । तिङर्थो वर्तमानकालः, 'वर्तमाने लट्' इति लड्विधानात् । कारकं तिङर्थः कर्ता । कर्तरि लड्विधानात् । 'ति' इति एकवचनम् । तथा च भावकालकारकसंख्या आख्यातस्य अर्थः इति निरुक्तभाष्योक्तं समञ्जसम् । 'तेषु भावः प्रधानम्' इत्युक्तेः कालकारकसंख्याः भावस्य विशेषणानि, भावस्तु विशेष्यः इति स्पष्टम् अधिगम्यते । तिङर्थयोः कर्तृकर्मणोः धात्वर्थं प्रति विशेषणता इति सिद्धम् । तथा च तिङन्तं धात्वर्थविशेष्यकशाब्द-बोधजनकम् इत्यत्र यास्कवचनं प्रमाणम् । अत एव महाभाष्ये निरुक्तसमानार्थकं 'क्रियाप्रधानमाख्यातम्' इत्युक्तम् । अत एव 'क्रियां पृष्टस्तिङाचष्टे, किं करोति ? पचति' इति भाष्योक्तिः सङ्गच्छते । 'किं करोति ?' इत्यनेन जिज्ञासिता चैत्रनिष्ठक्रिया इति प्रश्नः । 'पचति' इति चैत्रनिष्ठपचिक्रिया इति प्रश्नोत्तरयोः सामञ्जस्यम् । एवञ्च 'चैत्रः ओदनं पचति' इति वाक्ये विक्लित्यनुकूलव्यापारो धात्वर्थः । चैत्रस्य तिङर्थे कर्तरि अभेदेन अन्वयः । तिङर्थस्य कर्तुः धात्वर्थव्यापारे आधेयतासम्बन्धेन अन्वयः । ओदनस्य कर्मणः धात्वर्थफले अन्वयः । कालस्य तु व्यापारे । चैत्राभिन्नकर्तृनिष्ठः ओदननिष्ठ-विक्लित्त्यनुकूलः वर्तमानकालिको व्यापारः इति वाक्यार्थबोधः ।

तार्किकास्तु प्रथमान्तमुख्यविशेष्यकं शाब्दबोधम् अङ्गीकुर्वन्ति । 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रे अनुवृत्तस्य 'कर्तरि' इत्यस्य कर्तृत्वम् अर्थः । कर्तृत्वं कृतिः । कृतिर्नाम यत्नः, न तु व्यापारः । धातोस्तु फलं व्यापारश्च अर्थः । तिङर्थस्य कृतेः आश्रयतासम्बन्धेन प्रथमान्तार्थे अन्वयः । 'चैत्रस्तण्डुलं पचति' इत्यत्र तण्डुलनिष्ठविक्लित्यनुकूलव्यापारनुकूलकृत्याश्रयः चैत्रः इति शाब्दबोधमाहुः । कर्मणिप्रयोगे तु तिङर्थः कर्मत्वम् । कर्मत्वञ्च फलाश्रयत्वम् । फलस्य धातुलभ्यत्वेन आश्रयत्वमेव तिङर्थः इति पर्यवस्यति । 'चैत्रेण पच्यते ओदनः' इत्यत्र चैत्रनिष्ठकृतिजन्यव्यापारजन्यविक्लित्याश्रयः ओदनः इति बोधः । 'चैत्रेण सुप्यते' इति भावेप्रयोगे तु प्रथमान्तपदाभावात्

अगत्या 'चैत्रकर्तृकः स्वापः' इति बोधम् अङ्गीकुर्वन्तो वैयाकरणमतं प्रविशन्ति । एवं मतभेदेषु सत्सु 'इदमित्थम्' इति निर्णेतुं न शक्यते । युक्तीनाम् अप्रतिष्ठानात् यथा यथा जनाः व्युत्पद्यन्ते तथा तथा तेषां बोधो भवति इति अविवादः । वैयाकरणमतं तु यास्कपतञ्जल्यादिमुनिजनानुभवसिद्धमिति विशेषः ।

आलङ्कारिकाः अपि वैयाकरणमतम् अनुसरन्ति । अत एव 'लिम्पतीव तमोऽङ्गानि, वर्षतीवाञ्जनं नभः' इत्यत्र क्रियोत्प्रेक्षा इति कुवलयानन्दे अप्पय्य-दीक्षिताः । एवं मम्मटभट्टाः काव्यप्रकाशे, दण्डी च काव्यादर्शे । 'न वै तिङन्तेनोपमानमस्ति' इति महाभाष्यम् अत्र अनुकूलम् । यत्र क्रियापदं न श्रूयते 'चैत्रः शूरः' इत्यादौ तत्र 'अस्ति' इति अध्याहारः । तदुक्तं महाभाष्ये – 'अस्तिर्भवन्तीपरः अप्रयुज्यमानोऽप्यस्ति' इति । भवन्तीति लटः संज्ञा प्राचाम् । 'अस्ति' इति उपलक्षणं वचनत्रयस्य पुरुषत्रयस्य च । 'पुष्पाणि सुन्दराणि' इत्यत्र 'सन्ति' इति अध्याहारः । 'त्वं पण्डितः' इत्यत्र 'असि' इति, 'अहं बालकः' इत्यत्र 'अस्मि' इति च अध्याहारः । एवम् अन्यभाषासु अपि भवन्ति अध्याहाराः । आङ्ग्लभाषायां तु वाक्ये क्रियापदम् उच्चारणीयम् एव । इदमपि गमकं वाक्यार्थे क्रियाप्राधान्यस्य इति संक्षेपः ।

अथ इदानीं केषाञ्चित् वाक्यानां शाब्दबोधप्रकारो निरूप्यते । तत्र जात्यवच्छिन्ना व्यक्तिः प्रातिपदिकार्थः । कर्तरिप्रयोगे धात्वर्थव्यापाराश्रयत्वेन कर्ता इति, फलाश्रयत्वेन कर्म इति च प्रातिपदिकार्थो व्यपदिश्यते । धात्वर्थस्य व्यापारस्य कर्तरि फलस्य तु कर्मणि अन्वयः इति पूर्वम् उक्तम् । अकर्मक-धात्वर्थयोः फलव्यापारयोस्तु कर्तरि एव अन्वयः । एकव्यक्तिनिष्ठत्वात् अकर्मकधात्वर्थः फलं स्पष्टं न ज्ञायते इति विशेषः । यथा 'चैत्रो हसति' इति । मुखविकासानुकूलव्यापारविशेषः 'हस्'धात्वर्थः । मुखविकासः फलम् । 'चैत्रनिष्ठः मुखविकासानुकूलव्यापारः' इति बोधः । मुखविकासस्य तदनुकूल-व्यापारस्य च भेदः सूक्ष्मया दृशा अवगन्तव्यः । तिङर्थस्य कालस्य प्रेरणादेः अर्थविशेषस्य च धात्वर्थव्यापारे अन्वयः । संख्यायास्तु तिङर्थे कर्तरि कर्मणि वा यथायथम् अन्वयः । क्वचिदर्थयोः सम्बन्धाः आकाङ्क्षमर्यादया भासन्ते । क्वचित्तु विभक्तीनाम् अर्थाः । आहत्य एकशतं सम्बन्धाः इति महाभाष्यकारः ।

१. 'चैत्रो ग्रामं गच्छति' इत्यत्र उत्तरदेशसंयोगानुकूलव्यापारो गमेरर्थः ।

'ग्रामनिष्ठसंयोगानुकूलः चैत्राभिन्नकर्तृनिष्ठः वर्तमानकालिको व्यापारः' इति बोधः ।

२. 'घटं जानाति' इत्यत्र ज्ञानानुकूलः आत्ममनःसंयोगरूपव्यापारो धात्वर्थः । ज्ञानं विषयतासम्बन्धेन घटे वर्तते । 'घटविषयकज्ञानानुकूलः आत्ममनः-संयोगरूपव्यापारः' इत्यर्थः ।

३. 'घटं नाशयति' इत्यत्र प्रतियोगित्वं द्वितीयार्थः । 'घटप्रतियोगिक-नाशानुकूलव्यापारः' इत्यर्थः ।

४. 'चैत्रेण पच्यते तण्डुलः' इत्यत्र चैत्रकर्तृकव्यापारजन्यतण्डुलनिष्ठ-विक्लित्तिः इति बोधः । प्राचीनवैयाकरणमते तु कर्मणिप्रयोगेऽपि व्यापार-विशेष्यको बोधः इति विशेषः । तेषां मते कर्माभिन्नतण्डुलनिष्ठ-विक्लित्यनुकूलः चैत्रकर्तृको व्यापारः इति बोधः ।

५. 'धान्येन धनवान्' इत्यत्र अभेदः तृतीयार्थः । 'अस्ति' इति अध्याहारः । 'धान्याभिन्नधनवत्पुरुषनिष्ठसत्ता' इति बोधः ।

६. 'विप्राय गां ददाति' । स्वस्वत्वध्वंसपूर्वकपरस्वत्वानुकूलव्यापारो दाधात्वर्थः । उद्देश्यत्वं चतुर्थ्यर्थः । गोरूपकर्मणः आश्रयतासम्बन्धेन परस्वत्वशब्दे विद्यमाने स्वत्वरूपफलेऽन्वयः । 'गोवृत्तिस्वस्वत्वध्वंसपूर्वक-विप्रस्वत्वानुकूलः विप्रोद्देश्यको व्यापारः' इति बोधः ।

७. 'वृक्षात् पर्णं पतति ।' अवधित्वं पञ्चम्यर्थः । अधोदेशसंयोगानुकूलः संयोगसमानाधिकरणव्यापारो पतधात्वर्थः । अत्र पतधातुः अकर्मकः । 'वृक्षावधिकः पर्णनिष्ठाधोदेशसंयोगानुकूलव्यापारः' इति बोधः । यदा तु संयोगव्यधिकरणव्यापारोऽर्थः तदा पतधातुः सकर्मकः, 'नरकं पतति' इत्यादिप्रयोगदर्शनात् । 'नरकनिष्ठसंयोगानुकूलव्यापारः' इति बोधः ।

८. 'पर्वतो वह्निमान् धूमात् ।' अत्र धूमशब्दो धूमज्ञाने लाक्षणिकः । हेतौ पञ्चमी । ज्ञापकत्वमत्र हेतुत्वम् । ज्ञाप्यत्वं पञ्चम्यर्थः । तस्य वह्निमत्-पदार्थैकदेशे वह्नौ अन्वयः । 'धूमज्ञानज्ञाप्यवह्निमदभिन्नः पर्वतः अस्ति' इति बोधः ।

९. षष्ठ्यर्थाः सम्बन्धाः बहवः । 'शास्त्रस्य ज्ञानम्' इत्यत्र विषयत्वं षष्ठ्यर्थः । 'शास्त्रविषयकं ज्ञानम्' इति बोधः । 'शत्रोर्नाशः' इत्यत्र प्रतियोगित्वं

षष्ठ्यर्थः । 'शत्रुप्रतियोगिको नाशः' इत्यर्थः । 'घटस्य कारणम्' इत्यत्र 'घटनिरूपितकारणतावान्' इति बोधः । 'राज्ञः पुरुषः' इत्यत्र 'राजनिष्ठ-स्वामितानिरूपितस्वत्ववान्' इति बोधः । 'गुरोर्वाक्यम्' इत्यत्र 'गुरूच्चारितं वाक्यम्' इति बोधः । एवमन्येऽपि सम्बन्धाः योग्यतया कल्पनीयाः ।

१०. भूतले घटः इत्यत्राधेयत्वं सप्तम्यर्थः । 'भूतलनिष्ठो घटः' इति बोधः ।

'पश्य मृगो धावति ।' अत्र क्रियापदद्वयसत्वेऽपि एकवाक्यता । मृगकर्तृकं धावनं दृशिक्रियायाः कर्म, प्रधानं दृशिक्रिया । पश्य इति आज्ञार्थे लोट् । आज्ञा नाम प्रेरणा । तस्याः विषयतासम्बन्धेन दर्शने अन्वयः । 'त्वम्' इति अध्याहारः । 'मृगकर्तृकधावनकर्मकं प्रेरणाविषयभूतं त्वत्कर्तृकं दर्शनम्' इति शाब्दबोधः । प्रथमान्तमुख्यविशेष्यकशाब्दबोधाङ्गीकारे तु मृगपदात् द्वितीयाप्रसङ्गः इत्यादयो विपुलाः शास्त्रेषु विचाराः । 'सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता' इति अमरकोशः । तत्र वा शब्दः चेदित्यर्थे । कारकान्विता क्रिया चेत् सुप्तिङन्तचयो वाक्यम् इत्येकमेव वाक्यलक्षणम् । सुप्तिङन्तचयः इत्यस्य सुबन्तचयः, तिङन्तचयः, सुप्तिङन्तचयश्च इत्यर्थः । सुबन्तचयः - उन्नतो वृक्षः । अस्तीत्यध्याहारः । तिङन्तचयः - पचति भवति । इदमेकं वाक्यम् । पच्यादिक्रियाः भवतिक्रियायाः कर्त्र्यो भवन्ति । पचति भवति इति भाष्यम् । किञ्चित्कर्तृनिष्ठपचिक्रियाकर्तृका सत्ता इति बोधः । नैयायिकमते भाष्यवाक्यस्य सामञ्जस्यं दुर्घटम् ।

'चैत्रेण शय्यते' इति भावेप्रयोगे 'चैत्रकर्तृकं शयनम्' इति बोधः । 'चैत्रेण शयितव्यम्' इत्यत्र कथम् ? अत्रापि 'अस्ति' इति अध्याहारः । 'न हि पदार्थः सत्तां व्यभिचरति' इति प्रामाणिकाः । अथवा मा भूदध्याहारः । तथापि न दोषः, चैत्रकर्तृकप्रेरणाविषयभूतं शयनमित्येव शाब्दबोधाङ्गीकारात् । धात्वर्थक्रियाविशेष्यकः शाब्दबोधः इत्येव वैयाकरणमतम्, न तु तिङन्तघटक-धात्वर्थक्रियाविशेष्यकः इति । 'चैत्रः कर्ता' इत्यादौ 'अस्ति' इति अध्याहारः कर्मणिप्रयोगे विक्लित्यादिफलविशेष्यकशाब्दबोधे अपि न दोषः । धात्वर्थ-फलस्य अपि क्रियात्वाङ्गीकारात् । क्रियते, निष्पाद्यते व्यापारेणेति फलमपि क्रिया । इति वैयाकरणसिद्धान्तस्य सारसंक्षेपः इति दिक् ।

*('पाणिनिः तथा चाम्स्किः' इत्यस्मात् पुस्तकात् उद्धृतम्)*

★ ★ ★

# १५. अथ गौरित्यत्र कः शब्दः ?

इह तावद् आचार्यस्य पाणिनेः अष्टाध्यायीं सवार्तिकां व्याचिख्यासुः भगवान् भाष्यकारः शास्त्रस्य साक्षात्प्रयोजनं निर्दिशन्, सम्बन्धादिकं च सूचयन् आह स्म - 'अथ शब्दानुशासनम्' इति । शब्दानुशासनं नाम शास्त्रम् अधिकृतं वेदितव्यमिति तदर्थः । शब्दानाम् अनुशासनं शब्दानुशासनम् । तत्र 'शब्द'-शब्दस्य सामान्यतो ध्वन्यपभ्रंशादिष्वपि प्रसिद्धेः तेषामपि अनुशासनप्रसङ्गः इति तद्विशेषजिज्ञासया 'केषां शब्दानाम् ?' इति प्रश्नम् आविर्भावयामास । ततश्च अस्य शास्त्रस्य वेदाङ्गत्वात् 'छन्दसि, भाषायाम्' इति तत्र तत्र अधिकारात् च शब्दशब्दस्य विशेषेऽवस्थानम् इति अभिप्रायेण भाष्यकारो लौकिकानां वैदिकानाञ्च इति उत्तरं प्रददौ । शृङ्गग्राहिकया च 'गौरश्वः पुरुषो हस्ती' इत्यादिना कांश्चित् लौकिकान् वैदिकान् च शब्दान् निदर्शयामास । एवं स्थिते काचिदत्र शङ्का प्रादुर्भवति । तथाहि -

घटः इति शब्दः - घटः इत्यर्थः । 'घटम् उच्चारय' 'घटं पश्य' इत्यादौ लोके शब्दर्थयोः अभेदेनैव व्यवहारो दृश्यते । पुरोवर्तिनम् उद्दिश्य कोऽयम् इति प्रश्नस्य 'अयं गौः' इति उत्तरदाने तादात्म्येन शब्दस्य विधेयता प्रतीयते । अत एव 'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः' 'वृद्धिरादैच्', 'ओमित्येकाक्षरं ब्रह्म' इत्यादौ जातिव्यक्त्योरिव शब्दार्थयोः तादात्म्येन व्यवहारः । शब्दजन्यबोधे शब्दस्यापि प्रतिभासात् 'अनुविद्धमिव सर्वं शब्देन भासते' इत्याह तत्रभवान् भर्तृहरिः । एवञ्च शब्दात् शब्द-जाति-व्यक्तयः प्रतिभासन्ते । प्रतिभासमानेषु तेषु वस्तुषु कः शब्दशब्दाभिधेयः इति शङ्कया भाष्यकारः आक्षिपति 'अथ गौरित्यत्र कः शब्दः ?' इति । 'अथ'शब्दः अयम् आनन्तर्ये वर्तते । पृच्छ्यते इति शेषः । लौकिकानां वैदिकानाञ्च गौरित्यादीनाम् अनुशासनमिति विज्ञानानन्तरम् इदं पृच्छ्यते - गौरित्यत्र कः

शब्दशब्दाभिधेयः इत्यर्थः । भाष्ये किंशब्दः प्रश्नार्थकः । तस्य जिज्ञासिते शक्तिः । जिज्ञासाज्ञापनार्थं किल किंशब्दघटितं प्रश्नवाक्यं प्रयुज्यते ? तत्र उद्देश्यवाचककिंशब्दस्य समभिव्याहृतपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्न-विधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितो धर्मः प्रवृत्तिनिमित्तम् । तथा च 'कः शब्दः' इत्यस्य शब्दत्वावच्छिन्नविधेयतानिरूपितोद्देश्यताव-च्छेदकत्वेन जिज्ञासितो यो धर्मः तद्वान् शब्दशब्दः इत्यर्थः । अस्य प्रश्नस्य उत्तरत्वेन 'येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति सः शब्दः' इति वक्ष्यति । सास्नालाङ्गूलककुदखुरविषाणिसम्प्रत्यय-जनकोच्चारणविषयत्वरूपधर्मवान् शब्दः इत्युत्तरम् । स च प्रकृते गौरित्यनेन अभिव्यज्यमानः स्फोटो वा गौरिति वैखरीध्वनिः वा इति अन्यदेतत् ।

तान्येव द्रव्यादीनि क्रमेण निर्दिश्य तेषां शब्दत्वं निराकरोति किं यत्तदित्यादिना । 'किं यत्तत्सास्नालाङ्गूलककुदखुरविषाण्यर्थरूपं स शब्दः ।' अत्र भाष्ये यत्तत् इति समुदायो यदर्थकः । अथवा प्रसिद्धौ तच्छब्दः । सास्नेत्यादिसमुदायेन अवयविद्रव्यम् उच्यते । तस्य शब्दत्वं निराकरोति - 'नेत्याह । द्रव्यं नाम तत्' इति । अयं भावः - सामान्यव्यतिरिक्तत्वे सति श्रोत्रेन्द्रियग्राह्यत्वं शब्दलक्षणम् । द्रव्यस्य श्रोत्रेन्द्रियग्राह्यत्वाभावान्न शब्दत्वम् इति । शब्दनिष्ठशब्दत्वरूपे सामान्ये अतिप्रसङ्गवारणाय शब्दलक्षणे सामान्य-व्यतिरिक्तत्वे सति इति विशेषणपदनिवेशः । श्रोत्रियग्राह्यत्वाभावादेव गुणक्रिययोः गोत्वादिसामान्यस्य शब्दत्वे निराकृतेऽपि प्रपञ्चार्थं भाष्ये तेषां पुनः शब्दात्वम् आशङ्क्य निराकरणं कृतम् ।

ननु गुणक्रिययोः शब्दत्वशङ्का न युज्यते । न हि गौरिति ज्ञाने ते अपि भासेते इति चेत्, सत्यम् । गुणगुणिनोः क्रियाक्रियावतोः च अभेदाङ्गीकाराद् इयं शङ्का । किञ्च गुणसमूहो द्रव्यमित्येकं दर्शनम् । अत एव 'स्त्रियाम्' इति सूत्रे भाष्ये 'द्रव्ये च भवतः कः संप्रत्ययः ? गुणसमुदायो द्रव्यम्' इत्युक्तम् । अथवा गौरिति विज्ञाने गुणक्रिययोः अपि सामान्यलक्षणप्रत्यासत्त्या भानम् अनुभवसिद्धम् । प्रत्यक्षदृष्टे चन्दने 'सुरभि चन्दनम्' इति यथा । 'तदभिन्नाभिन्नस्य तदभिन्नत्वम्' इति न्यायेन गुणक्रिययोः शब्दार्थत्वेऽपि तत्तद्रूपेण अवाच्यत्वात् न तयोः शब्दत्वशङ्का युक्ता इति परमार्थः ।

★ ★ ★

# १६. अङ्कानां दक्षिणतो गतिः कुतः न स्यात् ?

संख्याः प्रकारद्वयेन लिख्यन्ते - अङ्कैः अक्षरैः चेति । अङ्कैः यथा - १८५४ । अक्षरैः यथा - चतुष्पञ्चाशदधिकाष्टादशशतम् इति । लिखितं परिवर्तयितुम् अन्ये यथा न शक्नुयुः तथा कर्तुम् उभयथा (अङ्कैः अक्षरैः च) अपि लिख्यते क्वचित् । अङ्कैः यत् लिख्येत ततोऽपि अक्षरैः लिखितायाः सुस्पष्टता अधिका । सर्वत्रापि सा च स्पष्टता न अपेक्ष्यते । अङ्कैः लिखिता सङ्ख्या सुलभग्राह्या भवति । अतः एव लोकव्यवहारे अङ्कैः लिख्यते सङ्ख्या ।

अङ्कचिह्नानि तु नव एव । ततः अग्रिमाः सङ्ख्याः यत्र लेखनीयाः तत्र एकस्य अङ्कस्य पार्श्वे अपरः लिख्यते । नवसङ्ख्यातः अधिकसङ्ख्या यत्र लेखनीया तत्र एकस्य अङ्कस्य पार्श्वे अपरा लिख्यते । यथा - ११, १२, १३ इत्यादयः । स च अङ्कः पूर्वाङ्कतः दशगुणम् आधिक्यं प्रदर्शयति । एतेन क्रमेण सुमहती अपि सङ्ख्या अङ्कैः लेखितुं शक्या । एकत्वसूचकस्य अङ्कस्य पार्श्वे शून्यस्य लेखनात् दशत्वसिद्धिः । तस्यैव पार्श्वे एकाङ्कलेखनात् एकादशत्वसिद्धिः । एवमेव द्वादशादयः । दशैकादशद्वादशादयः वदन्ति यत् दशभिः आधिक्यम् अस्ति इति । अयं क्रमः सर्वैः ज्ञातः एव इत्यतः नात्र विस्तार्यते ।

यदि सङ्ख्यायाः दशद्वयं परिमाणं, तर्हि 'विंशति'शब्दः प्रयुज्यते । यदि सङ्ख्यायाः दशत्रयं परिमाणं, तर्हि 'त्रिंशत्'शब्दः प्रयुज्यते । एवमेव

---

[मौखिकतया प्रादेशिकभाषया उक्तस्य विषयस्य लेखरूपः परिकल्पितः अस्ति अस्माभिः । मान्यः रङ्गनाथशर्मवर्यः तं संस्कृतलेखम् अस्मन्मुखात् आद्यन्तं श्रुत्वा लेखस्य प्रकाशनम् अनुज्ञातवान् आसीत् । - **सम्पादकः** ]

चत्वारिंशदादयः । दशसङ्ख्या दशधा यदा विस्तार्यते तदा 'शतम्' इति उच्यते । सहस्त्रादयः स्वतन्त्राः निपाताः । सर्वासु अपि भाषासु प्रायः एषा एव व्यवस्था ।

किन्तु सङ्ख्याबोधने संस्कृते अन्यभाषाभ्यः वैलक्षण्यं दृश्यते विशेषतः । दशतः अग्रे याः सङ्ख्याः भवेयुः तासां पठनावसरे आदौ अल्पमूल्यकसङ्ख्या, ततः अधिकमूल्यकसङ्ख्या च उच्चार्यते संस्कृतक्षेत्रे । यथा – '३१' इत्यस्य पठने अल्पमूल्यकसङ्ख्याम् (१) आदौ उच्चार्य ततः अधिकमूल्यकसङ्ख्या (३०) उच्चार्यते । एवमेव अष्टोत्तरशतादिषु । किन्तु अन्यासु भाषासु अधिकमूल्ययुक्तः भागः आदौ, अल्पमूल्ययुक्तः भागः अनन्तरं च उच्चार्यते । अन्यासु भाषासु बहुधा वैलक्षण्यम् अपि अस्ति ।

संस्कृतक्षेत्रे सङ्ख्यायाः लेखने तु अयमेव क्रमः अनुस्त्रियते । पठने तु अन्यः क्रमः । लिखितायाः सङ्ख्यायाः भागभूताः दशकशतकादिषु स्थानेषु स्थिताः अङ्काः आत्मनः मौल्यं ज्ञापयन्ति । एतस्य स्पष्टतार्थम् एकम् उदाहरणं पश्याम तावत् ।

२८६४ इत्येषा काचित् सङ्ख्या । अत्र –

↓ षट् दशकानि सूचयति ।

↓ अष्ट शतकानि सङ्केतयति ।

↓ द्वे सहस्त्रे ज्ञापयति ।

अन्यासु भाषासु लेखने या दक्षिणतः गतिः दृश्यते सा एव दृश्यते पठने अपि । अतः तत्र पठने लेखने च समाना एव गतिः । किन्तु संस्कृतक्षेत्रे एषा समानता न दृश्यते । लेखने दक्षिणतः गतिः आश्रीयते । पठने वामतो गतिः । 'अङ्कानां वामतो गतिः' इति उक्तिः सुप्रसिद्धा एव ।

किन्तु अयं क्रमः सङ्ख्यायाः पठने (उच्चारणे) अवगमने च महान्तं क्लेशं जनयति । महान्तः पण्डिताः अपि विषयेऽस्मिन् कष्टम् अनुभवन्ति एव । एषः क्रमः कथं व्यवहारपथम् आगतः इति वयम् अपि न विद्मः । संस्कृत-क्षेत्रमात्रे दृश्यमानस्य, विद्वद्भ्यः अपि क्लेशं यच्छतः एतस्य क्रमस्य परिवर्तने किमर्थं वा मतिः न करणीया ?

एतस्य क्लेशस्य कारणतः एव छन्दश्शास्त्रज्योतिषशास्त्रादिषु सङ्ख्यायाः निर्देशाय विभिन्नाः एव उपायाः आश्रिताः । छन्दश्शास्त्रे तु लोकप्रसिद्धिम् अवलम्ब्य सङ्ख्यासूचनाय अब्धिभूतरसादयः शब्दाः प्रयुक्ताः । तथा हि वृत्तरत्नाकरे - *'अब्धिभूतरसादीनां ज्ञेयास्सङ्ख्यास्तु लोकतः'* इति ।

अत्र अब्धिः चतुष्ट्वं, भूतशब्दः पञ्चत्वं, रसः षट्त्वं च द्योतयति इति अवगन्तव्यम् । उदाहरणं यथा -

परिधेः सामान्यं परिमाणं ज्ञापयति कश्चन श्लोकार्धः -

*व्यासे भनन्दाग्निहते विभक्ते खबाणसूर्यैः परिधिस्स सूक्ष्मः ॥*

अत्र भं नाम नक्षत्रम् । नक्षत्राणि सप्तविंशतिः । अतः अत्र भं सप्तविंशति-सङ्ख्यां सङ्केतयति । नन्दशब्दः नवत्वं सङ्केतयति । यतः नव नन्दाः ख्याताः लोके । अग्नयः त्रयः । अतः अग्निः त्रित्वं ज्ञापयति । तस्मात् 'भनन्दाग्नि'पदं ३९२७ इत्येतां सङ्ख्यां ज्ञापयति । ('अङ्कानां वामतो गतिः' इति व्यवस्था अत्रापि अन्विता भवति इति स्मर्तव्यम् ।) एवमेव 'खबाणसूर्याः' इत्यस्य अर्थः १२५० इति । खं नाम आकाशः । सः शून्यं सङ्केतयति । मन्मथस्य पञ्च बाणाः ख्याताः । अतः बाणः पञ्चत्वं ज्ञापयति । आदित्याः द्वादश । अतः सूर्यपदं द्वादशत्वं स्मारयति । वामतो गतिः अवलम्बिता चेत् १२५० इत्येषा सङ्ख्या प्राप्यते । तस्मात् श्लोकस्य तात्पर्यं सिद्ध्यति - 'व्यास-परिमाणाय ३९२७ इत्यनया सङ्ख्यया गुणनात् यः राशिः प्राप्येत तं खबाणसूर्यैः (१२५०) भाजयेम चेत् परिधेः सामान्यं (Approximate) परिमाणं प्राप्यते' इति ।

खबाणसूर्यादिपदानां श्रवणमात्रेण अविलम्बेन सङ्ख्याबोधः न भवेत् निपुणस्यापि । अवगमनाय कश्चन कालविलम्बः स्यात् एव । श्लोकरचनादिषु अयं क्रमः विशेषतः उपकरोति इत्यतः ज्योतिषशास्त्रादिषु अयम् आदृतः स्यात् इति भाति । अन्यच्च, रसादिपदेषु प्रयुक्तेषु भोज्यरसाः षड् इत्यतः षट्त्वं ग्रहीतव्यम्, उत काव्यशास्त्रे रसानां नवत्वम् उक्तम् इत्यतः नवत्वम् इति सन्देहः अपि भवेत् एव । एवम् अवगमने कालविलम्बः, क्वचित् अस्पष्टता, श्लोकादिष्वेव आनुकूल्यम् इत्याद्याः काश्चन परिमितयः सन्ति एव एतस्य क्रमस्य ।

इदानीं 'कटपयादि'क्रमं किञ्चित् परिशीलयाम । नियमज्ञापकः श्लोकः तावत् -

*नञावचस्य शून्यानि सङ्ख्याः कटपयादयः ।*

*मिश्रा चान्त्यहलस्सङ्ख्या न च चिन्त्या हलः स्वराः ।।* इति ।

'नकारः ञकारः स्वराः (व्यञ्जनेन असंवलिताः) च शून्यं सङ्केतयन्ति । कटपयाः एकत्वम्, खठफराः द्वित्वं च सङ्केतयन्ति । एवमेव अग्रे अपि । संयुक्ताक्षरे अन्तिमः व्यञ्जनवर्णः आदर्तव्यः, न तु पूर्वतनः । व्यञ्जनैः सह स्थिताः स्वराः सङ्ख्यासूचनावसरे न उपादेयाः' इति एतस्य श्लोकस्य तात्पर्यम् । एतदेव कोष्ठकरूपेण यथा -

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | ० |
|---|---|---|---|---|---|---|---|---|---|
| क् | ख् | ग् | घ् | ङ् | च् | छ् | ज् | झ् | ञ् |
| ट् | ठ् | ड् | ढ् | ण् | त् | थ् | द् | ध् | न् |
| प् | फ् | ब् | भ् | म् | | | | | |
| य् | र् | ल् | व् | श् | ष् | स् | ह् | | |

एतस्याः एव व्यवस्थायाः शीघ्रस्मरणाय उक्तिरेषा श्रूयते - *'कादि नव, टादि नव, पादि पञ्च, याद्यष्टौ'* इति ।

एकम् उदाहरणं पश्याम तावत् । आर्यभटीयः प्रयोगः कश्चन - 'शिथुगन्धास्सर्ववेद्धाला' इति । अत्र शि (श्) = ५, थु (थ्) = ७, ग (ग्) = ३, न्धा (ध्) = ९, स्स (स्) = ७, र्व (व्) = ४, वे (व्) = ४ द्धा (ध्) = ९, ला (ल्) = ३ । 'अङ्कानां वामतो गतिः' इति क्रमः अत्रापि अनुसरणीयः । तस्मात् 'शिथुगन्धास्सर्ववेद्धाला' इत्येतत् पदं ३९,४४, ७९,३७५ (नवत्रिंशत्कोटिं, चतुश्चत्वारिंशल्लक्षं, नवसप्ततिसहस्रं, पञ्चसप्तत्यधिकत्रिशतं च) सूचयति इति सिद्धम् ।

सङ्गीतशास्त्रे रागाणां यानि नामानि भवन्ति तेषाम् आद्यौ व्यञ्जनवर्णौ तस्य रागस्य स्थानं सूचयतः । 'धीरकाम्भोजी' इति नाम ज्ञापयति यत् अयं रागः २९ तमः इति । (धीर = २९) 'मायामालवगोवल'रागः तु पञ्चदशः । (माया = १५) । महाभारतस्य अपरं नाम 'जय'ग्रन्थः इति । जयः इति

पदम् अष्टादशत्वं (१८) सूचयति । (जयः = १८) महाभारते अष्टादश पर्वाणि सन्ति, भगवद्गीतायाम् अष्टादश अध्यायाः सन्ति इत्यादिकं ज्ञापयति 'जय'शब्दः इति भावयन्ति श्रद्धालवः ।

एतस्मिन् अपि क्रमे सङ्ख्यावगमने विलम्बः, अङ्कानां वामतो गतेः आश्रयणम् इत्यादयः सन्ति एव । अतः सङ्ख्यायाः शैघ्र्येण अवगमने अयम् अपि क्रमः न उपकारकः ।

आर्यभटेन (प्रथमेन) अन्यः अपि क्रमः आदृतः दृश्यते । अक्षराणि वर्गीयाणि अवर्गीयाणि स्वराः चेति विभज्य एकैकस्य अक्षरस्य एकैका सङ्ख्या तेन निश्चिता । ज्ञापकः श्लोको यथा -

*वर्गाक्षराणि वर्गेऽवर्गेऽवर्गाक्षराणि कात् ङ्मौ यः ।*
*खद्विनवके स्वरा नव वर्गेऽवर्गे भवन्त्यवर्गे ।।*

(विस्तरभयात् अत्र अर्थः न विवृतः ।)

अत्र या कल्पना कृता सा च अतिक्लिष्टा । अतः एव एषः क्रमः अन्यैः आधिक्येन न उपयुक्तः एव । अत्रापि 'अङ्कानां वामतो गतिः' इत्यस्य अन्वयः तु अस्ति एव ।

एतस्य सर्वस्य परिशीलनानन्तरं कश्चन प्रश्नः उद्भवेत् - 'इतरभाषासु यथा, तथैव संस्कृतक्षेत्रे अपि सङ्ख्याकथनविषये सरलः क्रमः कश्चन कुतो न आद्रियेत ?' इति । अन्यासु भाषासु 'दक्षिणतः गतिः' आदृता । अतः एव सारल्यं सिद्धं तत्र । सा एव रीतिः संस्कृतक्षेत्रे अपि यदि आद्रियेत तर्हि सारल्यम् अवश्यं स्यात् एव । अतः मम तु मतं यत् स एव क्रमः (दक्षिणतः गतिः) आदर्तव्यः सरलतार्थम् इति ।

यदि दक्षिणतः गतिः आश्रीयेत तर्हि अत्रापि द्वयी गतिः चिन्तयितुं शक्या - समस्तप्रयोगः असमस्तप्रयोगः चेति । 'अष्टौ सहस्राणि नव शतानि चतुर्दश' (८९१४) इति तु एकः क्रमः । अत्र सहस्रादीनि पदानि असमस्ततया उच्चारितानि । अत्र स्थानबलेन सङ्ख्यास्वरूपं दश-शत-सहस्रादिरूपेण प्रतीयते एव । अयम् एकः क्रमः भवितुम् अर्हति । अथवा 'अष्टसहस्रनवशतचतुर्दश' इति वा प्रयुज्यताम् । अत्र समासः कृतः । मध्यमपदलोपी समासः अत्र वक्तुं शक्यः ।

क्रमद्वये अपि व्याकरणदोषः तु कोऽपि नास्ति । अतः अनयोः अन्यतरस्य आदरणे तु व्याकरणविरोधः न भवति कोऽपि ।

'अङ्कानां वामतः गतिः' इति नियमः संस्कृतक्षेत्रे सर्वत्र अनुस्त्रियमाणः अस्ति इति अहम् अङ्गीकरोमि । तस्य विषये अनादरः अपि नास्ति मम । किन्तु ततः सारल्यं न सिद्ध्यति इति तु अतिरोहिता वस्तुस्थितिः । संस्कृतं सर्वत्र उपयुक्तं स्यात् इति यदि इष्येत तर्हि सरलः कश्चन क्रमः विद्वद्भिः दर्शनीयः एव । व्याकरणाविरुद्धः क्रमः कश्चन दर्शयितुं शक्यः अपि अत्र । अतः तस्मिन् क्रमे आदरः, तस्य क्रमस्य अनुमोदनं च भवतु इति विद्वत्सु भवत्सु मम भवति नम्रं निवेदनम् ।

दक्षिणतः गतेः आश्रयणविषये केचन प्रश्नाः उद्भवेयुः । यथामति तेषाम् अपि समाधानं प्रस्तोतुम् इच्छामि ।

शतपर्यन्ताः सङ्ख्याः लोके यथा प्रसिद्धाः तथैव प्रयोक्तव्याः । 'चत्वारिंशत्' इत्येषा अत्र 'चत्वारिंशदेकम्' इति प्रयोक्तव्या नास्ति । शतपर्यन्तासु प्रसिद्धिः एव आश्रयणीया । तासु 'वामतः गतिः स्यात् उत दक्षिणतः गतिः' इति चिन्तनं न आवश्यकम् ।

अन्यः प्रश्नः उद्भवेत् यत् 'दक्षिणतो गतिः' इत्येषः क्रमः किं प्राचीनैः क्वापि आदृतः इति । न आदृतः इति तु नास्ति । कानिचन उदाहरणानि यथा –

- दशसहस्राणां चतुश्शतानि चत्वारि च (१०४०४)
  – दीधितिकारः ।
- शतानि त्रीणि षट्पञ्चाशत् (३५६) – शुल्बसूत्रम् ।
- सहस्रमेकं दश च ददामि तव सुव्रत (१०१०)
  – (रामा. बाल. ५२.१९)
- चतुर्लक्षद्वात्रिंशत्सहस्राणाम् (४,३२,०००)
  – हेमाद्रिपुराणम्
- द्वादशलक्षसप्तचत्वारिंशत्सहस्रचतुश्शतद्विसप्ततिकोटयः पञ्चलक्षाः षट्सप्ततिसहस्राणि । (१२, ४७४७२,०५,७६,०००)
  – लल्लाचार्यः (शिष्याभिवृद्धिदतन्त्रे)

अन्यः प्रश्नः उद्भवेत् यत् अष्टसहस्रनवशतचतुर्दश (८९१४) इत्यादिषु स्थलेषु कः समासः आश्रयणीयः इति । 'मध्यमपदलोपी समासः' अत्र वक्तुं शक्यः इति मया पूर्वम् उक्तम् एव । अतः 'अष्टसहस्रयुक्तं नवशतयुक्तं चतुर्दश' इति विग्रहवाक्यं भवितुम् अर्हति तत्र । एकादशादौ प्राचीनैः अयम् एव क्रमः आश्रितः ।

पूरणप्रत्ययान्ताः अपि सङ्ख्याः लोके प्रयुज्यन्ते प्रायः । 'अष्टोत्तरशततमे वर्षे' (१०८) 'सप्तोत्तरनवशतोत्तरचतुर्दशसहस्रतमे वत्सरे' (१४९०७) इत्यादयः तमडन्ताः प्रयोगाः ये भवेयुः तेषां विषये किञ्चित् चिन्तनीयम् । आदौ तमट्प्रत्ययसम्बद्धां व्यवस्थां सङ्ग्रहेण वदामि ।

'विंशत्यादिभ्यः तमडन्यतरस्याम्' (५.२.५६) इति हि सूत्रम् । 'विंशत्यादयः एव तमट्प्रत्ययं विकल्पेन अर्हन्ति' इति तस्य तात्पर्यम् । दशान्तेभ्यः सः प्रत्ययः न विहितः । अतः एकादशादयः तमट्प्रत्ययं न अर्हन्ति । तस्मात् एकादशतमादयः प्रयोगाः दुष्यन्ति एव । 'एकादशः' इत्यादयः एव प्रयोक्तव्याः । (तमट् विकल्पेन । तमडभावे डट् प्राप्यते 'तस्य पूरणे डट्' (५.२.४८) इति सूत्रेण । स च अंशः विस्तरभयात् अत्र न विवृतः ।)

दक्षिणतो गतिः इति पक्षे एषः नियमः अपि अवश्यं मनसि स्थापनीयः भवेत् । 'वामतो गतिः' इति पक्षे अयं क्लेशः न जागर्ति । यतः तत्र सर्वत्र शतसहस्रलक्षादयः एव अन्ते श्रूयन्ते । ते सर्वे विंशत्यादिषु अन्तर्भूताः एव इत्यतः तत्र तमटः योजनात् न कोऽपि दोषः । किन्तु 'दक्षिणतो गतिः' इत्यस्य पक्षस्य आश्रयणे कृते तु अन्ते विंशत्यादयः दशान्ताः वा श्रूयन्ते । दशान्तेषु श्रुतेषु तमट्प्रत्ययः न योजनीयः । यथा -

- नवसहस्रनवशतपञ्चमे वर्षे (९९०५)
- अष्टसहस्रद्विशतचतुर्दशे वर्षे (८२१४)
- एकसहस्रनवशतनवदशे वर्षे (१९१९)

विंशत्यादिषु अन्ते श्रुतेषु तमट् योजयितुं शक्यः एव । यथा - एकसहस्र-नवशतत्रिंशत्तमे वर्षे (...त्रिंशे वर्षे इति वा) (१९३०)

- द्विसहस्रविंशतितमे वत्सरे (...विंशे वत्सरे इति वा) (२०२०)

(शतस्थाने यत्र किमपि न उच्चार्यते तत्र शून्यं लेखनीयम् इति नियमः सर्वत्र स्मर्तव्यः एव । अन्यासु अपि भाषासु अयं नियमः जागर्ति एव ।) डट्प्रत्ययान्तं तमट्प्रत्ययान्तं च रूपं समानम् एव अर्थं यद्यपि बोधयति, तथापि तमडाश्रयणे आनुकूल्यम् अधिकम् इति सुधियः जानीयुः एव ।

यत्र असमस्ताः सङ्ख्याः प्रयुज्येरन् तत्र तमटः योजनम् अशक्यम् । अतः यत्र पूरणप्रत्ययान्तता इष्यते तत्र सङ्ख्यानां समासः एष्टव्यः एवं इति तु स्मर्तव्यम् ।

एवम् अङ्कानां दक्षिणतः गतिविषये मया यथामति किञ्चित् उक्तम् । विद्वत्सु महाजनेषु मम निवेदनं यत् उपर्युक्तः विषयः सश्रद्धं विमृष्टव्यः, सङ्ख्यायाः प्रयोगः व्यवहारे गड्डुः यथा न भवेत् तथा चिन्तनीयं च इति ।

★ ★ ★

[एतस्य लेखस्य प्रतिस्पन्दरूपेण मान्येन श्रीरमणशर्मणा 'सङ्ख्याशब्देषु सुचिन्तनीया मर्यादा' इत्यस्मिन् लेखे (यश्च सम्भाषणसन्देशे २०१० तमवर्षस्य 'मे'मासे प्रकाशितः आसीत्) स्वीयः अभिप्रायः आविष्कृतः आसीत् । दक्षिणतः गतेः आश्रयणे (सहस्रद्विशतादिप्रयोगे) 'सङ्ख्यायाः अल्पीयसः' इति वार्तिकस्य तद्भाष्यस्य च विरोधः इत्यादयः अंशाः तेन तत्र प्रतिपादिताः आसन् विस्तरेण । वयःकारणात् पठितुम् अक्षमः मान्यः रङ्गनाथशर्मवर्यः मित्रमुखात् तं लेखं द्विः श्रुत्वा स्वीयम् अभिप्रायम् आविरकरोत् । सः इत्थम् -

## अगृहीतार्थस्य ज्ञापनम्

'सङ्ख्यायाः वामतो गतिः' इति विषयम् अधिकृत्य प्रवृत्तं मदीयं लेखनं सम्भाषणसन्देशे पूर्वं प्रकटितम् । तदुद्दिश्य श्रीरमणशर्ममहोदयैः लिखितः विस्तृतः प्रबन्धः प्रहितश्च । वयोनिमित्तकेन वायसेन दोषेण विद्धोऽहं विनष्टनेत्र-शक्तिः तं प्रबन्धं द्रष्टुम् अशक्तः, मन्मित्रैः वाचितं द्वाभ्यामपि श्रोत्रपुटाभ्याम् अपिबम् । तच्च श्रीरमणीयं लेखनं रमणीयमपि शब्दार्थवैभवेन नरमणीयमिति भृशमतुष्यम् ।

भाषासु क्लेशाः भवन्त्येव । संस्कृतभाषायां क्लेशाः अधिकाः इति

विशेषः । यदि ते शास्त्रीयाः तर्हि नास्माभिः किमपि कर्तुं शक्यते । 'सङ्ख्यानां वामतो गतिः' इति तु न शास्त्रविधिः । 'पञ्चविंशतिः', 'त्रयस्त्रिंशत्', 'अष्टोत्तरशतनामावलिः' 'वयं पञ्चोत्तरं शतम्' इत्यादिषु दृष्टः एव अयं विधिः । ज्योतिषधर्मशास्त्रादिषु एतदनुसारेण निबद्धाः श्लोकाः बहवो लभ्यन्ते । छन्दोबन्धनार्थं क्रमोऽयं सौलभ्यम् आवहति, किञ्च वसु-नेत्र-सूर्यग्रहादिशब्दैः अल्पाक्षरैः दीर्घा सङ्ख्या सुलभेन वचनेन बोधयितुं शक्यते इत्यादिनिमित्तो वामतो विधिः प्रवृत्तः इति ज्ञेयम् ।

इदानीम् अस्माभिः परिहर्तव्या समस्या अन्या । सम्भाषणसमये, सभायाम्, उपन्यासकाले च प्राप्यमाणा दीर्घा सङ्ख्या कथं बोधनीया ? न खलु पूर्वोक्तेन वामतो गतिरिति न्यायेन । असौ च भाषणकालः, न तु लेखनकालः । लेखने विमृश्य विमृश्य शक्यं लेखितुम् । तत्र अस्ति विचारकालः । भाषणकाले तु मुखबन्धो न युक्तः । मुखबन्धे वक्तुः मुखभङ्गः एव जायेत । तस्मात् 'वामतो गतिः' इति प्राचीनं न्यायं परित्यज्य अन्यासु भाषासु दृष्टः सुलभो मार्गः अन्वेषणीयः एव । किं च वसुनेत्रादिशब्दानाम् अर्थाः आधुनिकैः न ज्ञायन्ते । नतरां पाश्चात्त्यैः इत्यपि ज्ञेयम् ।

तस्मादस्माभिः संस्कृतभाषां सुलभीकर्तुं, जनप्रियतां तस्याः सम्पादयितुं च प्रवृत्तैः दीर्घसङ्ख्याबोधने कश्चिन्नूतनो मार्गः आविष्करणीयः एव इति निश्चित्य मदीयं तल्लेखनं प्रवृत्तम् । नानेन कोऽपि शास्त्रविरोधः । न हि 'वामतो गतिः' इति वचनं शास्त्रीयम् इति उक्तमेव ।

श्रीरमणमहोदयैः स्वीये प्रबन्धे प्रवृत्तं व्याकरणशास्त्रे चङ्क्रमणम् अकालिकम् । मत्सूचितदिशा दीर्घसङ्ख्याबोधने कश्चन नूतनः पन्थाः सुलभतरः सङ्गतार्थः विद्वत्सम्मतश्च आविष्क्रियताम् । ततश्च व्याकरणशास्त्रेण परिष्करण-मार्गः विचारणीयो भविष्यति । श्रीरमणमहोदयोऽपि अस्मिन् विषये सहायको भविष्यतीति अस्मदाशयः ।

इति सुधियां सम्मुखे निवेदनम् ।

**– विद्वान् एन्. रङ्गनाथशर्मा]**

# १७. जीवद्भाषा एवेयम्...

इह तावद् भरतवर्षे चिरान्निखिलमुनिजनमनोमनीषितं प्रतिबिम्बयन्ती, बादरायणगौतमकणादपाणिनिपतञ्जलिप्रमुखमेधावितमोविभूतिमाविर्भावयन्ती, वाल्मीकिभासकालिदासभारविबाणप्रभृतिकविकदम्बककोकिलान् कूजयन्ती, वैद्यज्योतिषगजशास्त्राश्वशास्त्रादिप्रवीणान् चरकादिशास्त्रज्ञान् चेतयन्ती, गीत-नाट्यशिल्पादिकलाकुशलान् भरताद्याचार्यान् चोदयन्ती, आसेतुहिमाचल-पर्यन्तं भारतीयानां नवनवां प्रतिभाम् उन्मेषयन्ती, धर्मं धारयन्ती, कर्मणो मर्म बोधयन्ती, कर्णाटकादिदेशभाषासमुदयं पोषयन्ती, अखण्डभरतखण्डस्य अखण्डतां वज्रलेपेनेव सुभाषितेन घटयन्ती विराजते सनातनी सुरसरस्वती । अनया च भाषया दिव्यया सदा नव्यया इव विभाव्या । एनया पुराण्या कति जना उद्धृताः, कति च सम्पोषिताः, कति पुनस्तर्पिताः, कति सुखं प्रापिताः, कति पथि स्थापिताः इति विमर्शं विधातुं न शक्यते कस्यचिच्चेतसा साम्प्रतम् ।

सैषा पुण्यतमा भाषा न केवलं मुनिभिः आचार्यैः पण्डितैश्च आदृता, अपि तु सर्वैः भारतीयैः लोकैः । संस्कृतगिरा हि निबद्धानि दशविधानि रूपकाणि प्रथन्ते, येषां द्रष्टारः सहृदयाः सामाजिकाः । समाजं हि समवेताः पुरुषाः सार्ववर्णिकाः । अपि च लोकानुचरितानि रूपकाणि, येषु ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राः किरातप्रभृतयश्च निबद्धाः संस्कृतभाषाम् अभिज्ञाय प्रवर्तन्ते । परःशतानि च शिलाशासनानि विभिन्नैः नृपालैः संस्कृतगिरा समुट्टङ्कितानि सर्वाः प्रजाः प्रबोधयितुम् । यदि नाम संस्कृतगीः सर्वजनीना सर्वेषाम् अविदिता नाभविष्यत् कथङ्कारं किमर्थं तानि तया भाषया निबद्धानि अभविष्यन् इति चिन्तनीयम् । अमरकोशे च नामलिङ्गानुशासने वैश्यवर्गे शूद्रवर्गे च शतशः तादृशाः शब्दाः पठिताः अमरसिंहेन, ये च वणिक्कृषीवलकुलेष्वेव प्रसिद्धाः तेषामेव उपयुक्ताः । पाणिनीये च व्युत्पादिताः इमे शब्दाः परिशीलनम्

अर्हन्ति । समांसमीना गौः । 'समांसमीना सा यैव प्रतिवर्षं प्रसूयते ।' द्वितीयं तृतीयं वा कर्षणं करोति - द्वितीयाकरोति, तृतीया-करोति । बीजेन सह कर्षति - बीजाकरोति । अनुलोमं कृष्टं क्षेत्रं प्रतिलोमं कर्षति - शम्भाकरोति । शूलाकरोति रोटिकां - शूलेन पचति इत्यर्थः । व्रीहीणां भवनं क्षेत्रं व्रैहेयम् । एवं शालेयम् । अवीनां सङ्घातः अविकटः । मेषाणां सङ्घातो मेषकटः । एवं निष्वणति, अवष्वणति - सशब्दं भुङ्क्ते इत्यर्थः । इष्टकाभिः चितम् - इष्टकचितं गृहम् । सुखशयनं पृच्छति - सौखशायनिकः । दध्ना संस्कृतं - दाधिकम् । वृद्ध्यर्थं धनं प्रयच्छति अधमर्णेभ्यो - वार्धुषिकः । काकपेया नदी - अल्पजला इत्यर्थः । इति दिङ्मात्रम् उदाहृतानि एनानि अन्यानि च पदानि संस्कृतभाषायाः व्यवहारोपयुक्ततां समर्थयन्ते ।

इदञ्च अवश्यं मननीयं मनीषिभिः । यदुक्तम् व्याकरणमहाभाष्ये पतञ्जलि-महर्षिणा संस्कृतभाषाम् अधिकृत्य - 'महान् शब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती, त्रयो लोकाः साङ्गाः सरहस्याः बहुधा भिन्ना, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यं नवधार्थर्वणो वेदः, वाकोवाक्यमितिहासः, पुराणं, वैद्यकमित्येतावान् शब्दस्य प्रयोगविषयः' इति । भाष्ये साङ्गम् इत्यस्य संहिता इत्यर्थः । अङ्गानि च -

शिक्षा व्याकरणं छन्दो निरुक्तं ज्योतिषं तथा ।
कल्पश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः ।। इति कीर्तितानि ।

रहस्यमुपनिषत् । बाह्वृच्यम् ऋग्वेदः । वाकोवाक्यं नाम प्रश्नोत्तररूपः ग्रन्थविशेषः । इदम् उपलक्षणं धनुर्वेदगान्धर्ववेदार्थशास्त्रादिग्रन्थानां काव्य-नाटकादीनां च ।

अद्यापि भारतदेशे शतद्वयाधिकानि गृहस्थकुलानि सन्ति, येषां संस्कृतभाषा मातृभाषा । यत्र स्थितो बालाश्च अनयैव गृहेषु व्यवहरन्ति इति केन्द्रशासन-ज्ञापनपत्रात् विज्ञायते । उदीच्याः हिन्दीबङ्गालीप्रभृयः सर्वाः अपि भाषाः संस्कृतादेव उत्पन्नाः । अवाच्याः (दाक्षिणात्याः) कन्नडतमिलुप्रभृतयः यद्यपि संस्कृतात् न उत्पन्नाः, तथापि संस्कृतशब्दभूयिष्ठाः संस्कृतपरिपोषिताः इति निश्चप्रचम् । कर्णाटकदेशे कन्नडभाषायां समुपलभ्यमानशासनेषु कदम्ब-काकुस्थवर्मणः हल्मिडिशासनं प्राचीनतमम् इति तद्विदो भाषन्ते । तच्च क्रिस्तीयपञ्चमशतकम् अवगाहते । तत्र प्रथमो मङ्गलश्लोकः संस्कृतभाषया

निबद्धः । नृपतुङ्गस्य कविराजमार्गनामको ग्रन्थः क्रिस्तीयनवमशतके रचितः । ग्रन्थस्य नाम एव घोषयति संस्कृतभाषायाः प्रभावम् । कन्नडे लभ्यमानानि व्याकरण-अलङ्कारशास्त्राणि सर्वाणि अपि संस्कृतशास्त्रमूलकानि । कन्नडव्याकरण-शास्त्रीयाः धातुप्रातिपदिकविभक्तिप्रत्ययादयः सर्वेऽपि शब्दाः संस्कृतव्याकरणे परिभाषिताः एव । भट्टकलङ्कः नाम विद्वान् शब्दानुशासनं नाम कन्नड-व्याकरणशास्त्रं संस्कृभाषाया एव जग्रन्थ इति हन्त, किम् अपरम् अवशिष्यते वक्तुम् । कन्नडलिपयोऽपि देवनागरीलिपेः विकाराः इति वदन्ति ऐतिहासिकाः ।

सेयं दिव्यवाणी सनातनी विविधरूपेण समस्तं भरतखण्डम् आप्नुवाना भारतीयसंस्कृततिस्त्रोतोवहा मणिगणान् इव अखिलभारतीयान् धारयन्ती सूत्रायमाणा भगवन्नारायणमूर्तिरिव प्रकटितविश्वरूपा चिराय राराज्यते । अस्याः प्रामुख्यम् अनुलक्ष्य भारतीयकेन्द्रशासनम् अधिकृतभाषासु अन्यतमत्वेन इमाम् अजीगणत् ।

सत्यप्येवम् इह केचित् कलुषितचेतसः जनाः अन्धाः इव बधिराः इव गीर्वाणवाण्याः महिमानम् अगणयित्वा प्राज्ञं मन्यमनसो भाषामिमां मृताम् आचक्षते । हन्त, शोचामस्तेषां दुर्विदग्धताम् ।

यदा खल्वयं भाषाविशेषः पाश्चात्त्यानां दृष्टिगोचरीबभूव तदा खलु संस्कृत-पदाभिलप्यमानमिदं न केषाञ्चिद् व्यवहारपदे वर्तते इत्येतावन्मत्वा संस्कृतम् उद्दिश्य Dead पदं प्रायुञ्जत । तदनुवदन्तश्च अत्रत्याः मृतपदं प्रयुञ्जते । पाश्चात्येषु 'लेटिन्'नाम्नी भाषा वर्तते । या पुस्तकमात्रशरणा, न क्वचित् भाष्यते, न व्यवह्रियते च, तत्सदृशं संस्कृतमपि इति मत्त्वा अनभिज्ञैः पाश्चात्त्यैः प्रयुक्तं मृतपदं कैश्चित् भारतीयैः अपि अनुकरणशरणैः अभिमानशून्यैः अविचार्यवादिभिः प्रयुज्यमानं व्रजति हास्यास्पदताम् ।

न कदाचिद् इयं गीर्वाणवाणी ल्याटिन्भाषासादृश्यम् अधिरोहति । अद्यापि विद्योतन्ते कानिचित् कुटुम्बकानि भारतदेशे येषां दैनन्दिनव्यवहारभाषा इयमिति प्राग् अवोचाम । अद्यापि संस्कृतभाषा भारते सर्वेषु राज्येषु विविधपाठशालासु असङ्ख्यातैः च्छात्रैः अधीयते । प्रतिसंवत्सरं सहस्त्रशो काव्यानि शास्त्राणि च विरच्यन्ते सुधीभिः । मासपत्रिकाः, पक्षपत्रिकाः, वारपत्रिकाः, दिनपत्रिकाश्च

संस्कृतभाषामय्यः प्रकट्यन्ते विभिन्ननगरेभ्यः । सन्ति च संस्कृतभाषाभिज्ञाः संस्कृतपण्डिताः सहस्रशो भारतदेशे ये खल्वनया भाषया निरर्गलं लेखितुं भाषितुं च प्रभवन्ति । न हि कश्चित् इदानीं लेटिन्भाषाम् अवगच्छन् भाषमाणो वा जनानां कर्णगोचरम् आसादितः ।

अद्यत्वे आसेतुहिमाचलं सर्वत्र मठेषु देवागारेषु प्रवचनमन्दिरेषु च भागवतादीनां पुराणानां प्रवचनं प्रतिदिनं प्रवर्तते । यत्र अहमहमिकया श्रोतुकामाः सहस्रशः अनुधावन्ति । वैदिकानाम् आस्तिकानां च गृहेषु वेदमन्त्राणां प्रार्थनाश्लोकानां च पठनं पारायणश्च प्रत्यहम् आकर्ण्यते । न च एषा दशा ल्याटिन्भाषायाः ।

केचित्तु वदन्ति – 'ये च यावन्तश्च उपयोगप्रकाराः भाषान्तराणां सन्ति, ते च तावन्तश्च संस्कृतस्य न सन्ति, यथा विपणि-व्यवहारादौ । अनेन विशेषेण संस्कृतस्य मृतत्वव्यवहारः' इति । अत्र अभिदध्महे – अस्तु, अभ्युपगच्छामः अमुं विशेषम् । परन्तु व्यवहारे तदनादरो हि मनुष्याणां दोषो, न भाषायाः । अभ्यस्य विपणिव्यवहारेऽपि संस्कृतम् उप-युञ्जानान् आर्यमिश्रान् को नु खलु दण्डम् आदाय वारयति ? इदमपि निदर्शनम् आलोचयितुं युक्तम्, अति-विशालस्य नगरस्य प्राच्यां दिशि कतिपयवृद्धसेवितं देवालयं प्रकाशयन्ती कचिदस्ति प्रद्योतमाना दीपिका नगरस्य प्रतीच्यां दिशायां तु बह्व्यो दीपिकाः पङ्क्तिशो निक्षिप्ताः प्रकाशन्ते । नागरकेषु बहवो बालाः युवानः अकृतधियो भोगिनः स्त्रियश्च मनो विनोदयितुं प्रतीच्यां समुच्चीयन्ते । किमत्र नगरजनेषु भूयांसो यस्मात् न उपयुज्यन्ते, तस्मात् कतिपयविद्वज्जनाश्रितं देवालयं प्रद्योतयन्ती देदीप्यमाना देवालयदीपिका नष्टा इति व्यवहारम् अर्हति ?

वस्तुतस्तु राजकीयैः पुरुषैः अन्याः भाषाः यथा पाल्यन्ते प्रोत्साह्यन्ते पुष्टिम् आपाद्यन्ते, न तथा संस्कृतभाषा इत्येतदेव अस्याः अप्रकाशे हेतुः । यथा राजा तथा प्रजाः इति न्यायेन प्रजाः अपि दिव्यभाषाम् इमां न अभिनन्दन्ति इति न चित्रम् । धाराधिपे भोजराजे प्रशासति कुविन्दप्रभृतयः अपि अनया व्यवहरन्ति स्म इति कथा प्रथीयसी । कश्चित् कुविन्दो भोजराजम् आह –

काव्यं करोमि न हि चारुतरं करोमि
यत्नात् करोमि यदि चारुतरं करोमि ।
भूपालमौलिमणिमण्डितपादपीठ

हे साहसाङ्क कवयामि वयामि यामि ।।

कश्चित् कुम्भकारो भोजराजसमीपस्थं रत्नपूर्णं कलशं प्रवीक्ष्य प्राह -

राजचन्द्रं समालोक्य त्वां तु भूतलमागतम् ।
रत्नश्रोणीमिषान्मन्ये नक्षत्राण्यभ्युपागमन् ।।

अपरे वदन्ति - 'व्यावहारिकाणि भाषान्तराणि अहरहं वर्धमानानि दृश्यन्ते, नैवं संस्कृतम् । तदेतत् निमित्तीकृत्य अस्य मृतत्वव्यवहारः' इति । एतदपि न वयं रोचयामहे । भाषान्तराणां वृद्धिरिति किम् अभिप्रेतम् ? किं भूयसां ग्रन्थानां निर्माणेन वृद्धिरिति वा, अहोस्वित् नूतनशब्दानाम् आविर्भावेण वृद्धिरिति वा ? अत्र प्रथमपक्षो न प्रकल्पते, शास्त्रप्रबन्धकविताकथामयानां नूतनग्रन्थानां निर्माणस्य प्रत्यहं दर्शनात् । द्वितीयपक्षे तु अस्ति नूतनशब्दानाम् अविर्भावः अद्यापि इति ब्रूमः । तथा हि विद्युच्छक्तिः, आकाशवाणी, राष्ट्रपतिः, राज्यपालः, विधानसभा, विधानपरिषत्, संविधानम् इत्येवमादीनि परःसहस्राणि पदानि नूतनार्थे सङ्केत्य प्रयुज्यमानानि नूतनान्येव इति शक्यं वदितुम् । न ह्येतानि पदानि कन्नडादिदेशभाषासु कल्पितानि कल्पयितुम् अशक्यानि वा इत्यहो महदुपकृतं संस्कृतभाषया । या खलु देशभाषाः उज्जीवयति सा एषा निर्जीवाइति वदतां न शीर्यते जिह्वा इति अनुकम्पितं खलु भगवत्या सरस्वत्या । यदि तु Plastic, Radio, Motor इत्यादीनां नूतनतया आविष्कृतानां वस्तूनां वाचकाः शब्दाः न सन्तीति, तर्हि देशभाषासु अपि तादृशाः शब्दाः न सन्ति इति तासाम् अपि मृतत्वम् आपद्येत । यदि ते एव आङ्ग्लशब्दाः देशभाषासु प्रयोक्तुं शक्यन्ते, तथैव देवभाषायाम् अपि इति को विशेषः ? निर्मीयतां वा नूतनो वैज्ञानिकशब्दकोशः । को वारयति ? कामदुघा हि सुरसरस्वती नूतनशब्दनिर्माणे बहूपकरिष्यति, या खलु शब्दानाम् अक्षयो निधिः । यदुक्तम् - 'एवं हि श्रूयते बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्त्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, नान्तं जगाम । बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता । दिव्यं वर्षसहस्त्रमध्ययनकालः, न चान्तं जगाम ।' इति ।

यावत् स्थास्यन्ति गिरयः सरितश्च महीतले ।
तावत् संस्कृतभाषेयं लोकेषु प्रचरिष्यति ।।

★ ★ ★

## १८. सद्विद्यासञ्जीविनीमहापाठशालायाः द्विसङ्ख्योत्तर-शततमवर्षीयस्य महोत्सवस्य सदसः अध्यक्षभाषणम्

प्रथममिदानीं परमपूज्यानां श्रीशारदापीठे विराजमानानां श्रीजगद्गुरुमहास्वामिनां चरणारविन्दयोः पतन्तु मदीयाः भक्तिपुरस्सराः प्रणामाः । अयि भोः माननीयाः विद्वद्वरेण्याः आस्तिकमहाजनाः, प्रियाश्छात्राश्च । अस्याः सद्विद्यासञ्जीविनीमहापाठशालायाः द्विसङ्ख्योत्तरशततमवर्षीये महोत्सवे प्रवृत्तस्य अस्य सदसः अध्यक्षस्थानं वोढुं, श्री गौरीशङ्करमहोदयैः सादरम् अहम् आहूतोऽस्मि । अत्रत्यानां विद्वत्तल्लजानां भवतां पुरः पीठम् आरोढुं जिह्रेति इव मे मनः । तथापि पूज्यपादानां श्री श्री जगद्गुरूणाम् अनुग्रहलेशेन आप्यायितः अहं पीठमिदम् अध्यासितुमपि प्रभवामीति मदीयं भाग्यमेतत् । सत्यापितश्च इदं वचनं यत् 'पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्यते' इति ।

इयं हि सद्विद्यासञ्जीविनीमहापाठशाला शताधिकानि वर्षाणि श्री शृङ्गेरी-शारदापीठाध्यक्षाणां पूज्यश्रीजगद्गुरुपादानां कृपाकटाक्षेण परम्परया पोष्यमाणा शुक्लपक्षीयचन्द्रकला इव प्रतिदिनं वर्धमाना शोभते । शुक्लाम्बरधरायाः सर्वशुक्लायाः निर्धूतान्धतमसायाः सरस्वत्याः दयाशुद्धे कटाक्षे जगति अस्याः कृष्णपक्षः एव न सम्भवतीति चन्द्रकलातोऽपि अहो, महापाठशालायाः अस्ति विशेषः ।

सद्विद्यासञ्जीविनीमहापाठशालायाः कृतं नामधेयं पूर्वजैः गुरुभिः । सती विद्या सद्विद्या । साध्वी सनातनी वा विद्या इत्यर्थः । सतो विद्या सद्विद्या इति वा षष्ठीसमासः । सत्पदेन ब्रह्म अभिधीयते । 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति गीतावचनम् । आत्मा च ब्रह्म । उभयथापि सद्विद्याशब्दस्य अध्यात्मविद्या इत्यर्थः पर्यवस्यति । 'अध्यात्मविद्या विद्यानाम्'

इति भगवदुक्तेः का नु नाम स्यात् साध्वी अपरा विद्या अध्यात्मविद्यातः ? अध्यात्मशास्त्रञ्च वेदः एव । तदर्थज्ञानानुकूलत्वेन तदर्थविवरणात्मकत्वेन च वेदाङ्गानि, शिक्षादीनि, वैशेषिकादीनि दर्शनानि च शास्त्राणि इति अभिधीयन्ते ।

'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येतव्यो ज्ञेयश्च' इति आगमवाक्यम् उदाजहार महाभाष्यकारः । 'निष्कारणम्' इत्यत्र कारणशब्दः फलपरः । लौकिकं दृष्टं फलम् अनपेक्ष्य वेदः अध्येयः तदर्थः च ज्ञेयः इति तात्पर्यम् ।

एषु शास्त्रेषु परमपुरुषार्थसिद्धिप्रदं वेदान्तशास्त्रं मूर्धन्यतमं राजते । 'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्' इत्युक्तरीत्या शास्त्राण्यन्यानि वेदान्त-शास्त्रस्य सोपानक्रमोण उपकारकाणि अङ्गभूतानि । सर्वमिदं शास्त्रजातं संस्कृतभाषायाम् अवतीर्णमिति एतद्भाषायाः अध्येयत्वं महत्त्वं च स्वतः सिध्यति । तथाहि -

तत्रभवान् महाभाष्यकारः पतञ्जलिः ग्रन्थारम्भे 'अथ शब्दानुशासनम्' इति प्रकृत्य - 'केषां शब्दानाम् ? लौकिकानां वैदिकानां च । तत्र लौकिकास्तावत् गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इति । वैदिकाः खल्वपि - शन्नो देवीरभीष्टय । इषेत्वोर्जे त्वा । अग्निमीळे पुरोहितम् । अग्न आयाहि वीतये' इत्याह । शब्दानां वैदिकलौकिकत्वेन द्वेधा विभागः कृतो महाभाष्यकारेण । लोके विदिताः भवाः वा लौकिकाः, वेदे विदिताः भवाः वा वैदिकाः इति व्युत्पत्तिप्रदर्शनेन अनयोः विभाजकोपाधिः स्पष्टीकृतः कैयटेन । परन्तु ये खलु लौकिकत्वेन उक्ताः गौरश्वः पुरुषो हस्तीत्यादयः शब्दाः वेदेऽपि दृश्यन्ते । नः, त्वा, अग्निं, पुरोहितम्, आयाहि इति वैदिकत्वेन प्रदर्शिताः शब्दाः लोकेऽपि दृश्यन्ते । एवञ्च अनयोः साङ्कर्यं प्राप्तमिति चेत् । अत्राह कैयटः - 'वैदिकानां लौकिकत्वेऽपि प्राधान्यख्यापनाय पृथगुपादानम्' इति । एवञ्च लोके प्रयोज्यप्रयोजकवृद्धव्यवहाररूपायां भाषायां प्रयुज्यमानानां शब्दानां लौकिकत्वम् । वेदमात्रान्तर्गतानां कर्णेभिः, देवासो, गृभ्णामि इत्यादिशब्दानां वैदिकत्वम् । वेदमात्रप्रयुक्तशब्दातिरिक्तपरता लौकिकशब्दस्य इति सिध्यति । सर्वैरपि वेदप्रामाण्यवादिभिरपि दर्शनकारैः अपौरुषेयो वेदः नित्यश्च इति स्वीकारात् तत्र प्रयुक्तानां संस्कृतशब्दानां नित्यत्वं दण्डापूपिकान्यायसिद्धम् । देवेन परमात्मना उपदिष्टत्वात् देवैः उपयुज्यमानत्वात् इमां भाषां देववाणी इति ब्रूमः ।

सेयं देववाणी संस्कृतभाषा कदाचित् समस्तजगद्व्यापिनी बभूव इति महाभाष्याद् अवसीयते । पस्पशाह्निके 'सर्वे देशान्तरे' इति वार्तिकं व्याचक्षाणो भाष्यकारः आह - 'महान् शब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः साङ्गाः सरहस्याः...' इत्यादि । अत्र च त्रयो लोकाः संस्कृतशब्दप्रयोगविषयत्वेन उत्कीर्तिताः । तेन संस्कृतभाषायाः देववाणीत्वं भाष्यकारसम्मतत्यित्र नास्ति सन्देहः । 'सप्तद्वीपा' इत्यनेन समस्तभूमण्डलम् उक्तम् । महता कालेन वागियम् अशक्तैः अभिधातृभिः अवकीर्णा अपभ्रंश-पङ्कमलिनीकृता बभूव । उक्तञ्च पतञ्जलिना - 'एकैकस्य शब्दस्य बहवः अपभ्रंशाः । तद्यथा गौरित्यस्य गावीगोणीगोतागोपोतलिकात्येवमादयः अपभ्रंशाः' इति । आह च भगवान् भर्तृहरिः वाक्यपदीये - 'दैवी वाग् व्यवकीर्णेयम् अशक्तैरभिधातृभिः' इति ।

एतेन इदमपि सिद्धं भवति यदेषा अमरवाणी जगति विद्यमानानां सर्वासां भाषाणां प्रसवभूः इति । महता कालव्यवच्छेदेन देशभेदकृतसम्पर्काभावेन च प्रवृत्तया अपभ्रंशपरम्परया च परस्परसम्बन्धरहिताः भिन्नाः एव इमाः भाषाः इति भान्ति । संस्कृतशब्दाः बहुधा रूपान्तराणि आपद्य असङ्ख्यात-भाषाजनने कारणानि बभूवुः । भरतखण्डस्य उत्तरभागे व्यवह्रियमाणाः हिन्दी-गुजराती-पञ्जाबी-काश्मीरी-बङ्गालीप्रभृतयो भाषाः संस्कृतात् उत्पन्नाः इति भाषाशास्त्रविदाम् आम्नायः । कन्नडप्रभृतयो द्राविडभाषास्तु अन्यमूलाः, न तु संस्कृतमूलाः इति तेषाम् उद्घोषः । द्राविडभाषाः अपि संस्कृतमूलाः इति शक्यम् उन्नेतुम् । वन्यैः आयुधजीविभिः कैश्चिद् अङ्गुलिमेयाः केचिदेव शब्दाः स्वयम् उत्पादिताः भवेयुः । एवं जगति अस्मिन् स्वयम् उत्पादिताः अल्पसङ्ख्याकाः शब्दाः सम्भवन्त्येव । तथा मनुष्येण नूतनतया निर्मितानां वस्तूनां वाचकानि पदानि कल्पनीयानि भवन्ति । तावता सम्पूर्णा भाषा एव नूत्नतया कल्पिता इति तु रिक्तं वचः । वर्णोच्चारणमेव अजानद्भिः मूकैः संनह्य व्यवहारार्थं भाषा निर्मीयते इति को वा मतिमान् विश्वस्यात् ? तस्मात् अस्त्येषा प्रजोपकाराय भगवदुपदिष्टा इयं देववाणी, यथा सर्वाः अपि अन्याः भाषाः अपत्यसन्ततिकल्पा जज्ञिरे इति वयम् आतिष्ठामहे । लक्षोपलक्षवर्षेषु अतीतेषु तासां परस्परसादृश्यं बहुधा लुप्तम् । यथा एकस्माद् एव मूलपुरुषात् प्रवृत्तेषु सगोत्रेषु जनेषु वर्णाकृतिगुणस्वभावादयो भिद्यन्ते तथा इति मन्तव्यम् ।

भाषास्वपि –

*वर्णाकृतिविभेदस्तु सहजः प्राकृतैर्गुणैः ।*
*एकगोत्रा यथा लोके मनुजा भिन्नमूर्तयः ।।*

यदा खलु निमित्तान्तरैः दैनन्दिनव्यवहारपथात् लुप्तं संस्कृतं, तदा नित्य-व्यवहारगोचराः संस्कृतशब्दाः ग्रन्थेष्वपि अदर्शनं गताः । ते च प्राकृतद्राविडादि-भाषासु रूपान्तरधारिणो नटाः इव उपलभ्यन्ते । कन्नडभाषायां विद्यमानाः शुद्धकन्नडत्वेन अभिमन्यमानाः संस्कृतशब्दाः केचिदेव इह विदुषां चमत्काराय उदाहर्तुम् इच्छामि ।

| पाणिनीयधातुपाठे | कन्नडभाषायाम् |
|---|---|
| १. अट्ट अतिक्रमणहिंसनयोः । अट्टते । | ಅಟ್ಟುತ್ತಾನೆ |
| २. धक्क नाशने । धक्कयति । | ಧಕ್ಕೆ ಮಾಡುತ್ತಾನೆ |
| ३. कुट्ट छेदनभर्त्सनयोः । कुट्टति । | ಕುಟ್ಟುತ್ತಾನೆ |
| 'कुट्टाकभावकुतुकं कुरुते स्म भीमः' इति चम्पूभारते । | |
| 'कुट्टलुण्टवृङः ,षाकन्' इति षाकन्प्रत्यये कुट्टाकः । | |
| ४. हिष्क हिंसायाम् । हिष्कयति । | ಹಿಸುಕುತ್ತಾನೆ |
| ५. चुट च्छेदने । चोटयति । | ಚೂಟುತ್ತಾನೆ |

एवमन्येऽपि बहवः शब्दाः कन्नडभाषीयत्वेन अभिमताः संस्कृतजन्याः एव वेदितव्याः । दिङ्मात्रम् उदाहरणम् –

| संस्कृतम् | कन्नडभाषायाम् |
|---|---|
| १. दुःखेन दम्यते इति दूढ्यः, उद्धतः इत्यर्थः । | ಧಡಿಯ |
| २. जबारूः = वेगशाली | ಜೋರಾಗಿ ಓಡುತ್ತಾನೆ |
| ३. जल्हुः (वेदे) = निःसारः | ಜೊಳ್ಳು |
| ४. रम्भः = दण्ड इति यास्को निरुक्ते । | ರಂಬೆ |

पितृवाचकः तातशब्दः प्राकृते 'ताय' इति भवति । जैनकविना रामचन्द्रेण सत्यहरिश्चन्द्रनाटके बहुकृत्वः प्रयुक्तश्च । 'ताय'शब्दः एव मन्ये स्त्रियां कन्नडे 'ತಾಯಿ' इति मातृवाचको जातः । पितृवाची 'तात'शब्दः पितामहवाची कन्नडभाषायाम् । 'अम्बा'शब्दनिष्पन्नः अस्ति 'ಅಮ್ಮ'शब्दः । विचित्रा हि शब्दगतिः ।

अखण्डेऽस्मिन् भरतखण्डे सर्वत्र संस्कृतभाषा व्याप्य अवतस्थे इत्यत्र पाणिनीयव्याकरणशास्त्रं प्रमाणपदवीम् अवगाहते । सार्धसहस्रद्वयवर्षेभ्यः पूर्वं पाणिनिः बभूव इति बहूनाम् अस्ति मतं विदुषाम् । व्याकरणशास्त्रं हि मतधर्मनिरपेक्षम् (Seculer) इत्यत्र न कस्यापि विप्रतिपत्तिः । शिलाशासनमिव शास्त्रमिदं प्रमाणं सत् भारतदेशस्य बहुमुखं परिचयम् आनुषङ्गिकतया जनयति । शास्त्रम् आरभमाणेन पाणिनिना कस्याः भाषायाः व्याकरणम् इदम् इति कुत्रापि नोक्तम् । अष्टाध्याय्यां 'भाषायां, छन्दसि' इत्येवं वदता सूत्रकारेण शिष्यमाणाः शब्दाः क्वचिदेव द्वेधा विभक्ताः । भाषाशब्देन लौकिकः सर्वसाधारणाो भाषाव्यवहारो गृहीतः । न च वार्तिककारेण भाषा-विशेषः उक्तः, नापि भाष्यकारेण । केषां शब्दानाम् अनुशासनम् इदम् इति अनुयुज्य लौकिकानां वैदिकानां च इति स्वयमेव उत्तरम् अभिहितम् । लैकिकत्वेन संस्कृतशब्दाः एव उदाहृताः । एतेन सर्वत्र लोकप्रसिद्धा संस्कृतभाषा एव आसीत्, भाषाविशेषजिज्ञासा एव न उदेति स्म इति स्फुटम् आवेद्यते ।

'कापिश्याः ष्फक्' (४.२.९९) इति पाणिनीयसूत्रेण कापिश्यां जातं कापिशायनं मधु, कापिशायनी द्राक्षा इत्यादिशब्दाः निष्पादिताः । का नाम कापिशी नगरी ? इदानीम् अफघानीस्थाने प्रसिद्धस्य काबूल्नगरस्य वायव्यदिशि कस्मिंश्चित् ग्रामे समुपलब्धे शिलालेखे कपिशेति स्थलनाम उट्टङ्कितम् । काबूल्समीपे प्रवहन्ती काबूल्नाम्नी नदी च वैदिकी कुभाननदी एव इति इतिहासविदां निश्चयः । 'कच्छादिभ्यश्च' (४.२.१३३) इति सूत्रविषयभूते कच्छादिगणे कच्छ-सिन्धु-गान्धार-कम्बोज-काश्मीरादयो जनपदवाचिनः पठिताः । 'द्व्यञ्मगधकलिङ्गसूरमसादण्' (४.२.१७०) इति सूत्रे सूरमसो नाम देशविशेषः कथितः । अधुना अस्साम्राज्ये प्रवहन्त्याः सुर्मानद्याः तटवर्ती देशोऽयम् इति आहुः इतिहासविदः । दक्षिणस्यां दिशि पाण्ड्य-चोल-केरलदेशाः शब्दविशेषनिष्पत्त्यर्थं गृहीताः वार्तिककारेण । पश्चिमायां दिशि पर्शुनामा आयुधजीविसङ्घः कथितः पाणिनिना । पर्शुश्च पार्सीकदेशः इति, स एव इदानीं इरान् इराक् इति द्वेधा विभक्तः प्रसिद्धिम् आगतः इत्याहुः इतिहासविदः । 'हिमवद्भ्यामण्' (४.५.१२३) इति सूत्रे हिमवत्पर्वतो नामतो निर्दिष्टः । एवं पाणिनीयशास्त्रेण भारतदेशस्य चतस्रः सीमाः शक्यन्ते अनुमातुम् । भारतदेशे विशिष्टानां मगधादिदेशानां,

तक्षशिलादिनगराणां, ग्रामाणां, नदीनां, गिरीणां, वनानाञ्च नामानि स्पष्टम् उपलभ्यन्ते पाणिनीये । एवमायुधजीविनां, नानावृत्तिनिरतानां, वणिजां, कार्मिकाणां, कर्षकाणाञ्च व्यवहारगोचराः विपुलाः शब्दाः व्युत्पादिताः । एवं द्यूतकारैः सुरापायिभिश्च उपयुज्यमानाः शब्दाः प्रकृतिप्रत्ययविभागेन निदर्शिताः । समाजे क्षुद्रजनैः भर्त्सनायां प्रयुज्यमानाः असभ्याः अपि शब्दाः व्युत्पादिताः आचार्येण । एतेन सर्वजनीना इयं संस्कृतभाषा बभूव इति सुकरम् अवबोद्धुम् । 'प्रत्यभिवादेऽशूद्रे' इत्यादिसूत्रपर्यालोचनया, 'अजेर्व्यघञपोः' इत्यादिसूत्रस्य भाष्यपर्यालोचनया च संस्कृतभाषा इयं व्यावहारिकी सर्वजातीयैः उपयुज्यमाना बभूव इति शक्यते निर्णेतुम् । तथाहि 'प्रत्यभिवादेऽशूद्रे' इति सूत्रस्य अर्थः - 'अशूद्रविषये प्रत्यभिवादे यद्वाक्यं तस्य टेः प्लुतः स्यात्' इति । 'अभिवादये देवदत्तोऽहम् । आयुष्मान् एधि देवदत्त३' इति उदाहरणम् । अशूद्रे इति पर्युदासस्य 'कुशल्यसि तुषजक' इत्युदाहरणं भाष्ये । तुषजकः इति कस्यचित् शूद्रस्य नाम । सः यदा अभिवादयते तदा प्लुतो न प्रयोक्तव्यः इति सूत्रभाष्ययोः आशयः । शूद्रस्य संस्कृतज्ञाने सत्येव खलु एवम् अभिवादप्रत्यभिवादयोः सम्भावः । 'अजेर्व्यघञपोः' इति सूत्रस्थेन भाष्येण विलोमजातीयः सारथिरपि व्याकरण-शास्त्रं सम्यग् अधीतवान् आसीद् इति विज्ञायते । सोऽयमर्थः सूतवैयाकरणयोः संवादरूपेण अभिव्यक्तः । संवादस्य अर्थं वेदितुं प्रथमं किञ्चित् विवरणम् अपेक्षितम् । अज प्रेरणे इति धातोः कर्तरि तृचि प्राजति रथमिति 'प्राजिता' इति रूपं सिध्यति । 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः ।

'अजेर्व्यघञपोः' इति सूत्रेण तु घञमपं च वर्जयित्वा अजेर्वीभावः आदेशो विधीयते आर्धधातुकविषये । तथा च सूत्रमते प्राजति इति 'प्रवेता' इति भवितव्यम् । भाष्यकारस्तु अत्र वीभावं विकल्पेन इच्छति । एवञ्च 'प्राजिता' इति रूपमपि साधु इति स्थितम् । कश्चित् वैयाकरणः, येन भाष्यं नाधीतं भाष्यकारस्य इष्टिः न ज्ञाता, सः प्रवेता इत्येव रूपं साधु इति भावयति । किञ्च असौ वैयाकरणखसूचिः सूतशब्दे सु + उतः इति पदच्छेदं कृत्वा वेञ्धातोः क्तप्रत्यये धातोः सम्प्रसारणे 'सूत'शब्दो निष्पाद्यः इति मन्यते । वस्तुतस्तु षू प्रेरणे इति धातोः वर्तमाने कर्तरि क्तप्रत्यये सुवति रथं प्रेरयतीति सूतः इति निष्पत्तिः । सारथिस्तु व्याकरणे परिष्कृतमतिः सर्वमिदं जानाति ।

इदानीं वक्ष्यमाणभाष्यार्थः सुज्ञानः । भाष्ये -

''इदमपि सिद्धं भवति प्राजितेति । किञ्च भो, इष्यत एतद्रूपम् ? बाढमिष्यते । एवं हि कश्चिद् वैयाकरण आह कोऽस्य रथस्य प्रवेतेति । सूत आह - अहम् आयुष्मन्नस्य रथस्य प्राजितेति । वैयाकरण आह - अपशब्द इति । सूत आह - प्राप्तिज्ञो देवानां प्रियः, न त्विष्टिज्ञः इष्यत एतद्रूपमिति । वैयाकरण आह - अहो नु खल्वनेन दुरुतेन बाध्यामहे इति । सूत आह - न खलु वेञः सूतः, सुवतेरेव सूतः । यदि सुवतेः कुत्सा प्रयोक्तव्या, दुःसूतेनेति वक्तव्यम्'' इति ।

अत्र सूतशब्दस्य विचारः अप्रकृतोऽपि तदुत्कीर्तनं क्वचित् प्रवृत्त एवायं संवादो भाष्यकारेण अनूदितः इत्यर्थं द्रढयति ।

श्रीमद्रामायणस्य फलश्रुतौ -

पठन् द्विजो वागृषभत्वमीयात्
स्यात् क्षत्रियो भूमिपतित्वमीयात् ।
वणिग्जनः पुण्यफलत्वमीयात्
जनश्च शूद्रोऽपि महत्त्वमीयात् ।।

इति स्मर्यते । संस्कृतम् अजानानः शूद्रः कथं रामायणं पठेत् ?

'स्त्रीशूद्रद्विजबन्धूनां श्रुतिर्न श्रुतिगोचरा ।
इति भारतमाख्यानं कृपया मुनिना कृतम् ।।

इति वचनमपि इममेव अर्थं दर्शयति इति सङ्क्षेपः ।

अतिविशालम् इदम् अस्मद्राष्ट्रं नानाजातिमतपद्धतीः अनुरुन्धानैः शताधिकाः भाषाः भाषमाणैः सम्पूरितम् । अङ्गवङ्गकलिङ्गादिभिः बहुभिः राज्यैः सङ्कीर्णं च बभूव इदानीमपि पूर्वावस्थातो नातिरिच्यते । तथापि भारतम् अस्माकं राष्ट्रम् इति एकताप्रत्ययः सर्वासां जागरितोऽस्ति प्रजानाम् । अत्र किं निमित्तमिति निभाल्यमाने संस्कृतसाहित्यसमुद्भूतां संस्कृतिं सभ्यताञ्च विना नान्यत् निमित्तं द्रष्टुम् ईश्महे । आ रामेश्वरात् काश्मीरदेशपर्यन्तं व्याप्ता वैदिकी संस्कृतिः इमं विशालं भारतदेशं नानाराज्योपजुष्टम् अनादिकालाद् एकतया बबन्ध । अद्यापि यथा वेदाः कन्याकुमार्याम् अधीयन्ते, सभाज्यन्ते तदुदितकर्माणि चानुष्ठीयन्ते तथा हिमालयपर्यन्तेषु सर्वेषु देशेषु अधीयन्ते सभाज्यन्ते अनुष्ठीयन्ते च । पुराणेतिहासकाव्यादीनां प्रभावः सर्वेषु भारतीयराज्येषु, सर्वासु कर्णाटकादिभाषासु सहस्रांशुरिव सूर्यः प्रकाशते । नास्त्येव काचिदपि

भारतीयभाषा, यस्याः साहित्यग्रन्थेषु श्रीमद्रामायण-महाभारत-भागवतानां कथाः न सन्ति । कर्षकः, कार्मिकः, पांसुलपादो ग्रामीणः सर्वोऽपि जनः स्त्रीपुंसादिभेदराहित्येन सीताद्रौपद्यादीनां सतीनां हरिश्चन्द्रादीनाञ्च चरितलेशमपि जानात्येव । सर्वोऽपि भारतीयः मूर्तिपूजाम् अनुमोदते । एते काशीक्षेत्रादि-तीर्थयात्रासु श्रद्धा, मूर्तिपूजा, जन्मान्तरविश्वासः, पापपुण्ययोः विवेकः, देवालयादिषु भक्तिः इत्यादयः सर्वत्र एकरूपाः विराजन्ते । अस्याः एक-रूपतायाः संस्कृतभाषैव हेतुः, न अन्यत् । मालानिबद्धानि विभिन्नवर्णानि कुसुमानि इव सूत्रं, विभिन्नभाषामयानि राज्यानि संस्कृतभाषाजन्यसंस्कृतिरेका धारयति ।

एवं सत्यपि केचिद्भारतीयाः एव – 'संस्कृतभाषायां किमस्ति, तत्र केवलं जातिमतसम्बद्धाः नियमाः, देवतानां राक्षसानां च कथाः, पौराणिकानि कल्पितचरितानि च सन्ति । किं प्रयोजनमनया पुरोहितभाषया' इति जल्पन्तो विजृम्भन्ते । एते भारतीयाः एव सन्तः एवं वदितुं न लज्जन्ते इति चित्रमेतत् । एभिः संस्कृतवाग्देव्याः चरणरजःकणोऽपि न दृष्टः ।

उपनिषत्प्रतिपाद्या अध्यात्मविद्या पाश्चात्त्यविद्वद्भिरपि मुक्तकण्ठं प्रशंसिता जगत्यस्मिन् अद्वितीया विराजते । शिक्षानिरुक्तादीनि षडङ्गानि अन्यत्र न विलोक्यन्ते । कणादादिमुनिभिः बौद्धैः जैनैश्च प्रवर्तितानि आध्यात्मिकानि विचारशास्त्राणि संस्कृतभाषायाः अन्यत्र नोत्पन्नानि ।

संस्कृतवाङ्मयं हि प्रायेण द्वेधा विभज्यते – पारमार्थिकम् ऐहलौकिकञ्च इति । सर्वजनहिताय प्रवृत्ता इयं संस्कृतसरस्वती । पूर्वमुक्तं दर्शनं बुद्धिजीविनां प्रियं पारमार्थिकम् । सर्वप्रजासुखकामनया प्रवृत्तम् ऐहलौकिकं वाङ्मयं किञ्चित् परामृशामः ।

चरकसंहिता, सुश्रुतसंहिता इति संहिताद्वयं प्रमाणभूतम् आयुर्वेदशास्त्रे । रोगाणां निदानं, रोगनिर्णयः, चिकित्सा, आरोग्यमिति चतुर्व्यूहमिदं शास्त्रं सर्वतोऽभिवर्धितं शार्ङ्गधरादिभिः वैद्यशास्त्रे प्राज्ञैः । औषधनिर्माणक्रमोऽपि तेषां ग्रन्थेषु निरूपितः । सुश्रुतेन तु शस्त्रचिकित्सापद्धतिः विवृता । विंशत्यधिक-शतत्रयसङ्ख्याकाः शस्त्रभेदाः सुश्रुतसंहितायाम् उपवर्णिताः । Surgical Instruments in Anciant India इत्येको ग्रन्थः आङ्ग्लभाषया सचित्रः प्रकटितः

अस्ति । ग्रन्थोऽयं मया सकौतुकं पठितश्च । सुश्रुताचार्यः काशीनगरवास्तव्यः स्वतः शवच्छेदं कृत्वा कृत्वा मानुषाणाम् अङ्गोपाङ्गानां वर्णनं कृतवान् । चरकसंहिता सुश्रुतसंहिता चेति द्वयमपि अराबिक्भाषया परिवर्तितं स्यात्, ततः ऐरोप्यदेशे प्रसारितम् इति ऐतिहासिकाः । वाग्भटस्य अष्टाङ्गहृदयम्, माधवनिदानम् इत्यादयः बहवः प्रमाणभूताः ग्रन्थाः संस्कृतभाषायाम् इदम्प्रथमतया लिखिताः समुपलभ्यन्ते । एवं पशुचिकित्सा, हस्त्यायुर्वेदः, वृक्षचिकित्सा इत्यादयोऽपि संस्कृतभाषायां सन्ति । जीवको नाम नेत्रवैद्यः अक्षिपात्रे नूतनां कनीनिकां योजयति स्म इति स्मर्यते ।

एवमेव वाणिज्यप्रकारेषु, अर्थशास्त्रे, सङ्गीते, भरतनाट्ये च प्रमाणभूताः आकरग्रन्थाः संस्कृतवाङ्मये बहवो विद्यन्ते । तथैव काव्यनाटकादिषु, काव्यमीमांसायां च प्रथितानि ग्रन्थरत्नानि विदितान्येव । वास्तुशिल्पे च मानसारः, मयमतम् इत्यादिषु ग्रन्थेषु स्कन्धावारशिबिरादीनां रचनाप्रकारः, इष्टकानां निर्माणक्रमः, Cement सदृशस्य वज्रलेपस्य निर्माणम् इत्यादिः विचारः विस्तरेण अभिहितः ।

ज्योतिःशास्त्रे च फलम्, मुहूर्तः, गणितमिति त्रिधा विभागः । तत्र गणितं मुख्यमस्ति प्रमेयम् । अत एव वेदाङ्गज्यौतिषे -

यथा शिखा मयूराणां नागानां मणयो यथा ।
तद्वद् वेदाङ्गशास्त्राणां गणितं मूर्ध्नि संस्थितम् ।। इत्युक्तम् ।

गणितशास्त्रं हि आधुनिकविज्ञानशास्त्राणां मूलस्तम्भायते । खगोलशास्त्रं गणितशास्त्रञ्च इदम्प्रथमतया भारतदेशे संस्कृतभाषायां प्रादुर्भूतानि इति विल्डुराण्ट्प्रभृतयः सुप्रसिद्धैतिहासिकाः मुक्तमनस्कतया स्फुटं लिलिखुः । आर्यभटेन वर्गसमीकरणम्, त्रिकोणवर्तुलादीनां क्षेत्रफलदर्शनसूत्राणि च दर्शितानि । गणिते दशमांशपद्धतिः भारतीयानाम् आविष्कारः । भूगोलस्य दैनन्दिनी, सांवत्सरिकी च चलनगतिः तेन निर्दिष्टा । ब्रह्मगुप्तेन चन्द्रग्रहस्य व्यासप्रमाणं स्फुटम् उक्तम् । भास्कराचार्येण Radical Sign, Purmutation and Combination इत्यादिगणितप्रकारो दर्शितः । सूर्यचन्द्रयोः ग्रहणे राहुः निमित्तं न इति सयुक्तिकं वराहमिहिराचार्येण बृहत्संहितायां प्रतिपादितम् । तथाहि -

भूच्छायां स्वग्रहणे भास्करमर्कग्रहे प्रविशतीन्दुः ।
प्रग्रहणमतः पश्चात् नेन्दोर्भानोश्च पूर्वार्धात् ।।
राहुरकारणमस्मिन् इत्युक्तः शास्त्रसद्भावः ।। इति आर्याः ।

संस्कृतभाषां प्रस्तुवतो मम जिह्वा नैव विरामम् अभिकाङ्क्षति । किन्तु औचित्यप्रज्ञा जिह्वाम् अधिकप्रसरणात् अपकर्षति । अपारेऽस्मिन् संस्कृत-ग्रन्थसंसारे -

कति नष्टाः कति शिष्टाः कति दृष्टा भुवीति को वक्तु ।
दुर्ग्रहदूषितमनसां सुग्रहसम्पत्तये कृतो यत्नः ।।

सर्वविद्याधिदेवतायाः सरस्वत्याः कटाक्षस्पन्देन सर्वज्ञपीठेति विराजितस्य काश्मीरदेशस्य परिस्थितिरिदानीं चिन्त्यताम् । कल्हणो राजतरङ्गिण्यां लिखति -

सिकन्दरधरानाथो यवनैः प्रेरितः पुरा ।
पुस्तकानि च सर्वाणि तृणान्यग्निरिवादहत् ।।

सिकन्दरो नाम कश्चित् दस्यूनां प्रभुः म्लेच्छः काश्मीरदेशे सरस्वती-भाण्डागारस्थितानि पुस्तकानि नाशयामास । सिकन्दरो नाम सिकन्दरखान्नामको महम्मदीयो राजा, न तु ग्रीस्देशीयः अलेक्साण्डरः ।

श्रीशङ्करभगवत्पादानां वेदेषु परमः आदरः । नियतरचनावतो विद्यमानस्यैव वेदस्य अभिव्यक्तिः, पुरुषनिःश्वासवत् च पुराणबुद्धिप्रयत्नपूर्वकः । अतः 'प्रमाणनिरपेक्ष एव स्वार्थे' इति बृहदारण्यकभाष्ये (२.४.१०) लिखन्ति । 'वेदस्य हि निरपेक्षं स्वार्थे प्रामाण्यं रवेरिव रूपविषये' इति, (२.१.१) 'श्रुतिश्च नः प्रमाणमतीन्द्रियविज्ञानोत्पत्तौ' इति च सूत्रभाष्ये । एवं सर्वेषु वेदाङ्गेषु, सर्वेषु दर्शनशास्त्रेषु, पुराणेतिहासादिषु च परिनिष्ठितज्ञानवद्भिः सर्वज्ञैराचार्यैः वैदिकधर्मसंरक्षणार्थं भरतखण्डस्य दिक्चतुष्टये स्थापितेषु मठेषु शृङ्गगिरिस्थोऽयं मठः सर्वातिशयेन शोभते । यतः श्रीशङ्करभगवत्पादानां प्रियमिदं क्षेत्रम् । ते च स्वयं तुङ्गातटे विहरन्तो भाष्यम् अध्यापयन्तः कतिचित् दिनान्युषुः, श्रीशारदामूर्तिं च स्वीयकरकमलाभ्यां प्रतिष्ठापयामासुश्च । ततश्च श्रीजगद्गुरुपीठम् अधिष्ठिताः सर्वेऽपि आचार्याः श्रीभगवत्पादाभिलषितं श्रद्धया पूरयन्तो वैदिकधर्मरक्षणे तत्पराः बभूवुः ।

वैदिकधर्मसंरक्षणार्थमेव च इयं सद्विद्यासञ्जीविनीमहापाठशाला निर्मिता ।

तत्र श्रीदेवालयसमीपे यात्रिकजनसम्मर्दबहुले स्थले छात्राणाम् अध्ययनाध्यापनादि-कार्यम् अन्तरायोपघ्नम् इति मन्वानाः श्री श्री जगद्गुरुमहास्वामिनः अस्मिन् नृसिंहवनपरिसरे मनोरमे प्रदेशे पाठशालां छात्रेषु अकम्पया अनुकम्पया निर्मापयामासुः इति अतिशोभनम् ।

श्री श्रीजगद्गुरुमहास्वामिभिः निरन्तरम् अधीक्षिते गुरुकुले, विद्वदग्रेसरैः अध्यापकैः अध्याप्यमाणानां छात्राणां भाग्योपनतोऽयम् अध्ययनावकाशः । इमश्च अध्ययनावकाशं सर्वे विद्यार्थिनः सार्थकयन्तः, क्षणशः कणशश्च विद्यां सञ्चित्य, श्री श्री जगद्गुरुमहास्वामिनामनुग्रहपात्राणि भूत्वा परमं श्रेयः प्राप्नुवन्तु इति आशास्य मदीयकृतज्ञतापूर्वकान् प्रणामान् सर्वेभ्यः समर्प्य विरमामि । इदमस्तु भरतवाक्यम् -

प्राज्ञा विज्ञानविद्यापरिणतमतयो राष्ट्रिया भारतीयाः
प्राचीनाचार्यपुष्टा विमलसुरगवी दुग्ध एवामृतं नः ।
बुद्धेरुल्लासमुच्चैरपघनघनतामादधानं प्रधानं
पीत्वा रंरम्यतां तत् किमु विगतरसासारलघ्वा यवाग्वा ।।

शृङ्गेरीपुरवासिनी श्रुतिशिरःसञ्चारिणी तारिणी
तुङ्गातीरविहारिणी सकलविद्वाणी भवोत्सारिणी ।
श्रीमच्छङ्करदेशिकेन्द्रवचनं सम्पालयन्ती ध्रुवम्
भक्तानां वरदा बुधस्तुतपदा पायात् सदा शारदा ।।

अङ्कुशं द्वैतवादस्य शङ्कराचार्यमाश्रये
मद्गुरुं सद्गुरुं साक्षादद्वितीयं जगद्गुरुम् ।

जहौ गृहसुखं वशी सपदि निर्व्रजन् शैशवे
पपौ गुरुमुखेरितं श्रुतिरसायनं शङ्करः ।
जगौ दिशि दिशि भ्रमन् भवविदारि तत्त्वं नृणां
कलौ किमपरः कृती तदुपमो मुनिर्वीक्षितः ।।

अभिनवगुणलक्ष्मीं वाक्प्रवृत्तौ दधानाः
निरुपममतिशक्तिं शास्त्रजातेऽपि शुद्धाम् ।।
मधुसमकरुणार्द्रां भक्तवृन्दे च दृष्टिम्
विदधतु कुशलं श्रीभारतीतीर्थपादाः ।।

★ ★ ★

## १९. अखिलकर्णाटकसंस्कृतपरिषदः पञ्चमे सम्मेलने अध्यक्षभाषणम्

### (आदिचुञ्चनगिरिक्षेत्रे, १९८४)

*कवीन्द्राणां चेतःस्फुरणमुपकल्प्याप्रतिहतं*
*हतं लोकं जाड्यादमृतरससेकेन निभृतम् ।*
*समुज्जीव्य श्रेयःसुभगचतुरस्त्रं विदधती*
*जयत्येका वाणी निखिलभुवनानन्दजननी ।।*

सम्मान्याः राज्यपालाः श्री ए.एन्.ब्यानर्जिमहोदयाः, आदिचुञ्चनगिरि-क्षेत्रीयमठस्य पीठाध्यक्षाः श्रीबालगङ्गाधरनाथस्वामिनः, अखिलकर्णाटक-संस्कृतपरिषदः अध्यक्षाः पदाधिकारिणश्च, उपस्थिता विद्वांसः सज्जनाः, महिलाः, सुहृदश्च !

अखिलकर्णाटकसंस्कृतपरिषदा समायोजितं पञ्चमं कर्णाटकसंस्कृतसम्मेलनम् इदं प्रकृतिमनोहरे पवित्रेऽस्मिन् आदिचुञ्चनगिरिक्षेत्रे प्रवृत्तमिति महान्तं प्रमोदं जनयति सर्वेषां संस्कृतप्रणयिनाम् । अस्य महासम्मेलनस्य अध्यक्षत्वेन यदहं वृतोऽस्मि, तत्र तु अस्याः संस्कृतपरिषदः अध्यक्षाणां कार्यकर्तॄणां भवताञ्च सौहार्दसम्मिलितम् औदार्यं विना नान्यत् कारणम् उपलक्षये । सत्सु च मत्तोऽपि ज्ञानवृद्धेषु वयोवृद्धेषु विद्वदग्रणीषु प्राज्ञेषु, सेयं विश्वासपूर्णा महती सम्भावना मयि प्रदर्शिता । तदर्थम् एभ्यः सर्वेभ्यो भवद्भ्यश्च भवन्ति मदीयाः कृतज्ञता-पूर्णाः प्रणामाः समर्पिताः ।

‘ओङ्कार एव सर्वा वाक्, सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति’ इति श्रुतिः, ‘अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा’ इति स्मृतिः,

'सिद्धे शब्दार्थसंबन्धे, सिद्धन्तु नित्यशब्दत्वात्' इति कात्यायनवार्तिकम्, 'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्' इति वाक्यपदीयवचनञ्च संस्कृतभाषाम् अधिकृत्य प्रवृत्तानि इति स्फुटं तद्विदाम् । सेयं संस्कृतभाषा सर्वव्यापिनी सर्वविज्ञानप्रसूः अवगम्यते, यदाह तत्रभवान् भाष्यकारः - 'महान् शब्दस्य प्रयोगविषयः, सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः साङ्गाः सरहस्याः' इत्यादि । इदानीं समुपलभ्यमानमेव ग्रन्थजातं वैपुल्येन सारवत्तया च सर्वम् अन्यभाषामयं साहित्यमतिशेते इति चित्रीयते चेतः । प्राचीनैः विरचितेषु ग्रन्थेषु 'कति नष्टाः कति दग्धाः कति शिष्टाः' इत्यपि न जानीमः । आह च कल्हणो राजतरङ्गिण्याम् -

सिकन्दरधरानाथो यवनैः प्रेरितः पुरा ।
पुस्तकानि च सर्वाणि तृणान्यग्निरिवादहत् ।। इति ।

अपि च अष्टाध्याय्याम् उणादिसूत्रेषु च व्युत्पाद्यमानाः बहवः शब्दाः इदानीम् उपलभ्यमानेषु ग्रन्थेषु नावलोक्यन्ते । प्रयुक्तानामेव शब्दानां किल भवति व्याकरणेन अन्वाख्यानम् । सन्ति च शब्दाः अप्रयुक्ताश्चेति विप्रतिषिद्धम् । तस्मात् इदानीं ग्रन्थेषु अनुपलभ्यमानो व्युत्पाद्यमानश्च अयं शब्दसन्दोहः एव अनुमापयति विनष्टं ग्रन्थराशिं धूमः इव वह्निम् ।

**संस्कृतभाषायाः व्याप्तिः**

ऋषिभिः दार्शनिकैः वैद्यकादिशास्त्रकारैः कविभिश्च प्रकामम् उपलालिता इयं भाषा कदाचिद् व्यावहारिकी बभूव इत्यत्र नास्ति संशीतिः । नहि लोके तादृशी काचिदस्ति कृत्रिमा भाषा या व्यवहारपथम् अतिक्रान्ता, पण्डितैः जनोपयोगिग्रन्थेषु उपयुज्येत । 'भाषणाद् भाषा' इति निर्वचनमपि सामान्यजनैः भाष्यमाणत्वम् अस्याः व्यनक्ति । आचार्यः पाणिनिः अष्टाध्याय्यां संस्कृतं भाषा इत्येव व्यवहरति । पाणिनेः पूर्वम् अस्मिन् भारतदेशे संस्कृतमेव जनैः उपयुज्यते स्म इत्यत्र शक्यं प्रमाणं दर्शयितुम् । अपि च तिष्ठद्गु, वहद्गु, गोगोष्ठम्, शम्बाकरोति, उष्ट्रगोयुगम् इत्यादयः शब्दाः कृषीवलेषु, पशु-पालकेषु, वाणिज्यजीविषु, आयुधोपजीविषु, द्यूतकारादिषु च प्रसिद्धाः शास्त्रग्रन्थविषयाः एव न भवन्ति । पात्रेसमितः, गेहेनर्दी, ग्रामसण्डः, नगरकाकः, अश्नीतपिबता इत्यादयः शब्दाः पाणिनीये व्युत्पादिता दैनन्दिनिक-

व्यवहारगोचराः एव । 'न हि शब्दाः क्रियन्ते, प्रयुक्तानामिदमन्वाख्यानम्' इति महाभाष्यकारस्य स्फुटोक्तिः, ग्रामवाचकानां निरुक्तिः, 'प्राच्येषु, उदीच्येषु कम्बोजेषु' इत्यादिना देशभेदात् शब्दस्वरूपस्य अर्थस्य च भेदप्रदर्शनं संस्कृतभाषायाः स्वाभाविकत्वं व्यवहारगोचरत्वञ्च स्फुटयति इति अलं विस्तरेण ।

इयं हि चिरात् निखिलमुनिजनमनीषितं प्रतिबिम्बयन्ती, बादरायणजैमिनि-कपिलगौतमप्रमुखदार्शनिकतपोविभूतिम् आविर्भावयन्ती, व्यासवाल्मीकि-भासकालिदासजिनसेनप्रभृतिकविकोकिलकदम्बकान् कूजयन्ती, जैनबौद्ध-पाशुपतवीरशैवादिशास्त्रनिष्णातान् प्रेरयन्ती, वैद्यकज्यौतिषगजशास्त्र-अश्वशास्त्रादिप्रवीणान् चरकार्यभटादिमेधाविनः चोदयन्ती, आसेतुहिमाचल-पर्यन्तं भारतीयानां नवनवां प्रतिभाम् उन्मेषयन्ती, धर्मं धारयन्ती, कर्मणो मर्म बोधयन्ती, कर्णाटकादिदेशभाषासमुदयम् आप्याययन्ती, भरतखण्डस्य अखण्डतां समानरूपेण शिष्टाचारेण चिन्तनप्रकारेण च वज्रलेपेनेव घटयन्ती विराजते सनातनी सुरसरस्वती । अनया च भाषया पुराण्या सदा नव्ययेव विभाव्यमानया कति जना उद्धृताः, कति च सम्पोषिताः, कति च सन्तोषिताः, कति सुखं प्रापिताः, कति पथि स्थापिताः इति गणयितुं न शक्यते पुरुषायुषेण अपि ।

सेयं संस्कृतभाषा कन्नडमहाराष्ट्रादिनिखिलदेशभाषासु देशीयकाव्यशास्त्रेषु आचारविचारेषु च समस्तं भरतखण्डं विविधरूपेण व्याप्नुवाना, भारतीय-संस्कृतिस्त्रोतोवहा मणिगणानिव अखिलभारतीयान् धारयन्ती सूत्रायमाणा भगवन्नारायणमूर्तिरिव प्रकटितविश्वरूपा चिराय राराज्यते ।

**संस्कृतभाषादेशभाषयोः अविरोधः**

कन्नडप्रभृतयो देशभाषाः संस्कृतेन पुष्टाः इति तु निर्विवादम् । भूयसः शब्दान् अलङ्कारव्याकरणवेदान्तादिशास्त्रीयविषयांश्च प्रदाय देशीयभाषावाङ्मयं भृशं पोषितवती इति सूर्यप्रकाशवत् स्पष्टं प्रतीयते मनीषिणाम् । पम्पषडक्षरदेव-प्रभृतयः कवयः कन्नडकुलतिलकायमानाः संस्कृतसाहित्ये परां प्रौढिमासेदुः । नागवर्मा भट्टाकलङ्कश्च कन्नडव्याकरणशास्त्रं संस्कृतभाषया विरचयामासतुः । इत्थं कर्णाटकराज्ये संस्कृतकन्नडभाषयोः अन्योन्यमैत्री अविच्छिन्ना चिराय

जागर्ति । सत्यप्येवं क्षीरे क्षारमिव पश्यन्तः केचित् संस्कृतं विरुन्धन्तः इमां भाषां प्रौढशालाभ्यः उच्चाटयितुकामाः महता कोलाहलेन व्यजृम्भन्त इति नाविदितं भवताम् । उत्तरप्रत्युत्तररूपेण विषयेऽस्मिन् बहु पराक्रान्तं सूक्ष्म-वेदिभिः । अनल्पं लिखितं भाषितञ्च । विवादोऽयम् उच्चन्यायालयं परमोच्चन्यायालयञ्च प्रापदिति संस्कृतविरोधिनां छलग्रन्थिः विस्मापयते समस्तान् । अन्ते च अग्नौ आध्मापिता सुवर्णशलाका इव संस्कृतवाणी नितराम् अशोभत इति सुतरां शोभनम् ।

अस्याश्च जयप्राप्तौ केचन महाभागाः संस्कृतानुरागिणः दैहिकेन मानसेन च आयासेन बहुधनव्ययेन च शश्रमुः । तेभ्यः सर्वेभ्योऽपि महाभागेभ्यः, अहमिदानीं संस्कृतप्रणयिनां प्रतिनिधीभूय कृतज्ञतापूर्वकान् सादरान् प्रणामान् समर्पयामि ।

वयं तावत् कर्णाटके जनपदे सम्भूताः संवर्धिताश्च । कन्नडभाषा भवत्यस्माकं मातृभाषा । तयैव वयं मातुरुत्सङ्गे लालिताः वर्धिताः शिक्षिताश्च । न कदाचित् वयं मातृभूतायाः कन्नडभाषायाः विरोधं मनसापि चिन्तयामः । कन्नडभाषा सर्वात्मना पुष्टिं प्राप्नुयात् पालयताच्च अस्मान् इति अस्मदीया निश्चिता मतिः । सोमेश्वरो नाम कार्णाटः संस्कृतकविः ब्रह्मसृष्टौ कर्णाटदेशः सारभूतः इति साभिमानं वर्णयति विंक्रमाङ्काभ्युदये –

*देशानन्यान् पूर्वमभ्यासहेतोः*
*कृत्वा मन्ये लब्धशिल्पप्रकर्षः ।*
*पश्चाच्चक्रे यं विधिः सृष्टिसारं*
*स व्यावर्ण्यः कैर्न कर्णाटदेशः ।।* इति ।

संस्कृतभाषाध्ययनेन एव कन्नडभाषायाः पुष्टिः तुष्टिश्च, नो चेन्महती विनष्टिः इति तु दृढं मन्यामहे । तस्मात् –

*मातृवद् भगिनीवच्च या नः पुष्णाति मातरम् ।*
*गैर्वाण्यपि च सा जीयादित्येवास्माकमाशयः ।।*

## कर्णाटके संस्कृतम्

कर्णाटकदेशे प्राचीनकालादारभ्य विद्वद्वराः कविवराश्च सुरसरस्वतीं साधु संसेव्य कृतकृत्याः बभूवुः । क्रिस्तीयपञ्चमशतके कदम्बराजस्य शान्तिवर्मणः

आस्थानं कुब्जो नाम कवीश्वरो भूषयामास इति तालगुन्दशिलालेखाद् अवसीयते। कन्नडदेशीयेषु पण्डितेषु कविषु च बहवो जैनमतीयाः इति तु मननीयो विशेषः। तत्र हेमसेनेन राघवपाण्डवीयं नाम दुष्करं श्लेषकाव्यं विरचितम्। वादीभसिंहेन गद्यचूडामणिः, क्षत्रचूडामणिश्चेति गद्यकाव्यद्वयं निर्मितम्। तथा सोमदेवसूरेः यशस्तिलकचम्पूः, जिनसेनाचार्यस्य रसनिर्भरं महापुराणम्, वादिराजस्य यशोधरचरितम्, पार्श्वनाथचरितश्च प्रामुख्यतो गणनीयानि जैनकाव्यानि। एवं कुन्दकुन्दाचार्यः, उमास्वामी, पूज्यपादः अमृतचन्द्रसूरिः, भट्टाकलङ्कः इत्यादयो विद्वत्तल्लजाः जैनाः कार्णाटाश्च बहून् तर्ककर्कशान् जैनसिद्धान्ते प्रौढग्रन्थान् विरचयामासुः।

अपि च याज्ञवल्क्यस्मृतेः सुप्रसिद्धव्याख्याता विज्ञानेश्वरः कन्नडदेशीयः। सोमदेवस्य अभिलषितार्थचिन्तामणिः नाम विश्वकोशः, केलदीबसवराजेन्द्रस्य शिवतत्त्वरत्नाकरः, विद्याचक्रवर्तिनो रुक्मिणीकल्याणम्, त्रिविक्रमपण्डितस्य उषाहरणम्, गङ्गादेव्याः वीरकम्पणरायचरितम्, तिरुमलाम्बायाः वरदाम्बिका-परिणयः, अनन्तभट्टस्य भारतचम्पूः इत्यादयो विपुलाः सन्ति कृतयः, याः किल कर्णाटकदेशीयैः संस्कृतसरस्वत्याः उपहारीकृताः।

श्रीमन्मध्वाचार्याः तदनुयायिनश्च बहवः कर्णाटकदेशीयाः, यैः किल द्वैत-वेदान्तस्थापकाः विपुलाः प्रौढाश्च ग्रन्था विरचिताः। विजयनगरसाम्राज्ये च श्रीविद्यारण्यसायणाचार्यभोगनाथादीनां विद्वद्दिग्गजानां वेदभाष्यादिनिर्मातॄणां समुदायः एव आसीत्। वीरशैवेषु खल्वपि पाल्कुरिकेसोमनाथषडक्षरदेवादयः पण्डिताः कवयश्च कर्णाटकदेशं भूषयामासुः।

अधुनातनेष्वपि श्रीविरूपाक्षशास्त्रिणः, लक्ष्मीपुरं श्रीनिवासाचार्याः, पण्डित-रामचन्द्राचार्याः, श्रीसच्चिदानन्देन्द्रसरस्वतीस्वामिनश्च पण्डितप्रकाण्डाः अस्माभिः प्रत्यक्षीकृताः। महाकविषु खल्वपि जग्गूशिङ्गैय्यङ्गार्याः, आल्वारय्यङ्गार्याः, पण्ढरीनाथाचार्याः, अन्ये च सन्तीति अविच्छिन्नां विद्वत्परम्परां साभिमानं निवेदयामि।

**कर्णाटकदेशे संस्कृताध्ययनस्य परिस्थितिः**

एकीकरणात् पूर्वं मैसूरुदेशे महाराजकृपापोषिता संस्कृतभारती सुचिरं शोभते स्म। एकीकरणादनन्तरमपि उदारहृदयेन सर्वकारेण नूतनाः संस्कृत-

महापाठशालाः पाठशालाश्च अनुदानप्रदानेन संस्थापिताः । यथाशक्ति यथार्हञ्च कर्णाटकसर्वकारेण प्रोत्साह्यते संस्कृताध्ययनमिति प्रमोदास्पदम् । कासुचित् प्रौढशालासु विश्वविद्यालयेषु च विद्यते संस्कृताध्ययनस्य अवकाशः । तथा शृङ्गेरीजगद्गुरुभिः स्वतन्त्रतया संस्थापिता महापाठशाला, पाठशाला, सुर-सरस्वतीसभा चात्र स्मर्तव्यतां भजन्ते ।

सर्वकारेण चाल्यमानासु अष्टसु महापाठशालासु शतत्रयादप्यधिकासु पाठशालासु च सांप्रदायिकम् अध्ययनं प्राचीनरीत्या प्रवर्तते । महापाठशालासु व्याकरणम्, नवीनन्यायः, सर्वे वेदान्तभेदाः, पूर्वमीमांसा, ज्यौतिषम्, धर्मशास्त्रम्, अलङ्कारः, जैनसिद्धान्तश्च इत्येतेषु शास्त्रेषु वेदेषु आगमेषु च प्रौढपाण्डित्यसम्पादनाय कल्पितोऽवकाशः ।

## प्रौढपाण्डित्यम्

अत्र परमोच्चा विद्वदुत्तमपरीक्षाः प्रवर्तन्ते, यासु छात्राणां गभीरं पाण्डित्यम् अपेक्षितं शास्त्रेषु इत्यस्ति नियमः । परमिदानीं तादृशं प्रौढं पाण्डित्यं विरलप्रायम् आसीदिति खेदास्पदम् ।

स्वाध्यायप्रवचनाभ्यां शास्त्रसंरक्षणं भवति । तच्च न सिध्यति पल्लवग्राहि-पाण्डित्येन । शास्त्ररक्षार्थं परं प्रौढपाण्डित्यप्रोत्साहनार्थं च विदुषां वाक्यार्थसभा प्रचाल्यते कैश्चिन्मठाधिपतिभिरिति सांप्रतम् । अयमेकः प्रकारः शास्त्ररक्षायाः । अहं तु मन्ये – सर्वैरपि मठाधिपतिभिः एषा प्रतिज्ञा कर्तव्या यदेकैकस्मिन्नपि मठे अन्यतमस्य शास्त्रस्य सर्वात्मना पोषणं संरक्षणञ्च विधीयते इति ।

यदि इदं गभीरं तलस्पर्शि च पाण्डित्यं न संरक्ष्येत, तर्हि महती विनष्टिः । पूर्वजैः यत्नेन सम्पादितो निधिः अपहस्तितो भवेत् । शास्त्रेषु कृतस्तेषां महान् श्रमो व्यर्थताम् इयात् । विद्वत्परीक्षाम् उत्तीर्णाः जनाः केनापि वेतनप्रदायिना नियोगेन तृप्तिम् आवहन्ति, विरम्यते च तेषाम् अध्ययनवार्तया । जीविका-निर्वहणस्य व्यवस्थितौ, किमर्थं पुनः औदासीन्यम् अध्ययनेषु इति चिन्तास्पदम् । यया विद्यया वयं जीविकां निर्वहामः तस्यां विद्यायां परिनिष्ठित-ज्ञानसम्पादनं, ग्रन्थनिर्माणं, प्रवचनं, प्रचारः इत्यादिकार्यजातम् अस्माकं प्रथमः कल्पः । सर्वथा वयम् अधमर्णाः स्मः संस्कृतसरस्वत्याः ।

## आधुनिकसंस्कृतवाङ्मयम्

'इमे खलु संस्कृतज्ञाः प्राचीनस्य संस्कृतवाङ्मयस्य वैभवं प्रदर्शयन्तः तुष्यन्ति, न तु नूतनं वाङ्मयं सृजन्ति' इति तु मिथ्यालापः । अस्मिन्नेव क्रिस्तीये विंशे शतके महाकाव्यानि, खण्डकाव्यानि, नाटकानि, चम्पूकाव्यानि च सहस्रशः संस्कृतकविवरैः प्रणीय प्रकाशितानि । व्याकरणवेदान्तादिशास्त्रेष्वपि वैदुष्य-पूर्णानि प्राचीनपण्डितानां ग्रन्थैः समकक्षतां प्राप्तानि व्याख्यानानि विद्वद्वरैः निर्मितानि ।

नवनिर्मितानां ग्रन्थानां परिचयार्थमिमे निबन्धाः विलोक्यन्तां यदि कुतूहलम् -

१. अर्वाचीनसंस्कृतसाहित्यम् (प्रा. श्रीवर्णेकरमहोदयैः निबद्धम्)
२. विद्वद्वृत्तम् (पं. श्रीकालीप्रसादशास्त्रिभिर्निबद्धम्)
३. नवदिल्लीसाहित्यप्रतिष्ठानतः प्रकाश्यमानायाः 'संस्कृतप्रतिभा'याः निकषोपलनामा समालोचनस्तम्भः
४. Modern Sanskrit Writings (By Dr. V. Raghavan)

तत्र आधुनिकमहापुरुषान् इतिहासप्रसिद्धशिवाजीप्रभृतींश्च अधिकृत्य महा-काव्यानि प्रणीतानि इति विशेषः । इमे ग्रन्थाः विशेषतः स्मरणीयाः -

१. मदनमोहनमालवीयमहाभागम् अधिकृत्य कृतं मालवीयमहाकाव्यम् ।
२. गान्धिमहात्मानम् अधिकृत्य रचितं गान्धिचरितम् ।
३. डा. वर्णेकरविरचितं विवेकानन्दविजयम् ।
४. तैरेव प्रणीतं श्रीशिवराज्योदयम् ।
५. अणेमहाशयनिर्मितः श्रीतिलकयशोऽर्णवः ।
६. जवाहरलालमहाभागम् उद्दिश्य प्रणीतं विशालभारतम् ।
७. रमेशचन्द्रशुक्लप्रणीतो बङ्गलादेशः ।
८. दिनेशप्रसादपाण्डेयरचितं भारतायनम् इत्यादि ।

कर्णाटकदेशेऽपि श्रीपण्ढरीनाथाचार्यादिभिः प्रणीतानि सन्ति बहूनि काव्यानि नाटकानि च । डा. के.कृष्णमूर्तिमहाभागैः बहवः काव्यालङ्कारग्रन्थाः कन्नड-भाषायाम् अनूदिताः । कुन्तकस्य वक्रोक्तिजीवितं भूयसा परिश्रमेण सम्पाद्य अङ्ग्लभाषया परिवर्तितश्च इति विशेषतः स्मरणीयम् ।

तथा पत्रिकाक्षेत्रेऽपि प्रशंसार्हं कार्यम् अनुष्ठितं संस्कृतज्ञैः । दैनिकी,

साप्ताहिकी, पाक्षिकी, त्रैमासिकी, षाण्मासिकी, अनियतकालभवा चेति शतशः प्रकाश्यन्ते पत्रिकाः । कर्णाटके च श्रीवरदराज-अय्यङ्गार्यमहोदयैः, मैसूरुनगरात् प्रकाश्यमाना सुधर्मा नाम दिनपत्रिका विशेषतः समुल्लेखम् अर्हति ।

**भाषायाः सरलीकरणम्**

आकाशवाणी तावद् द्विवारं संस्कृतभाषया प्रत्यहं वार्ताः प्रसारयति । सोऽयं कार्यक्रमः संस्कृताभिमानिनां प्रियो जातः । लौकिकराजकीयविषयान् अपि बोधयितुं समर्था इयं भाषा इति एतेन प्रमाणीकृतम् । तथापि जागर्ति अयम् उद्घोषः क्वचित् 'संस्कृतभाषा कष्टा, व्याकरणं कष्टम् । तस्मादेषा सरलीकरणीया' इति । अत्रैवं प्रतिभाति - जगति विद्यमाना सर्वापि भाषा कठिनैव आदौ भासते । सर्वत्र व्याकरणाध्ययनमेव परिशुद्धवाक्यप्रयोगे हेतुः । सर्वास्वपि भाषासु व्याकरणं कष्टमेव । विना श्रमं न कश्चिदभ्युदयो लोके दृष्टः । किञ्च संस्कृताध्यापनक्रमे पाठ्यपुस्तकनिर्माणे च सन्ति बहवो दोषाः । तान् अहम् इदानीं साकल्येन परिशीलयितुं नेच्छामि । इदन्तु वक्तव्यम् - संस्कृतस्य प्राथमिकशिक्षणम् आरभ्य प्रौढशिक्षणपर्यन्तं कन्नडभाषया आङ्ग्लभाषया वा अध्यापयन्ति शिक्षकाः । अयमेको महान् हेतुः संस्कृतं कष्टम् इत्युद्घोषे । विषयेऽस्मिन् गभीरं चिन्तयितव्यम् अस्माभिः । न हि कोऽपि आङ्ग्लभाषां शिक्षयितुकामो भाषान्तरं माध्यमत्वेन आश्रयति । यदि प्राथमिकशिक्षणे छात्राणां हितदृष्ट्या कन्नडभाषायाः आश्रयणं क्वचित् आवश्यकं तत्र तथैव भवतु नाम, परन्तु तत्र भूयोव्यवहारः संस्कृतेन एव भवितुम् अर्हति । तथा सति बहून् संस्कृतशब्दान् व्यवहारेणैव सुलभतया गृह्णन्ति छात्राः । व्यवहारो हि शक्तिग्राहकशिरोमणिः । विना व्यवहारसम्बन्धं भाषाध्ययनं नैव सौलभ्याय कल्पते । महापाठशालासु विश्वविद्यालयेषु च भाषान्तरं माध्यमत्वेन उपयुज्यते, न तु संस्कृतमिति कोऽयं प्रकारः ? अध्यापकानाम् असामर्थ्यं प्रायशः तत्र हेतुः । इदम् असामर्थ्यं तदध्यापकेभ्यः तेषु संक्रान्तमिति परम्परिता इयं शृङ्खला । यदि च अस्याः शृङ्खलायाः न मुच्यामहे तर्हि परित्यज्यतां संस्कृतस्य सरलीकरणे प्रचारे च प्रत्याशा ।

संस्कृतभाषायां भवन्ति साधारणशब्दाः विशेषशब्दाश्चेति । तत्र विशेषशब्देषु नामपदानां क्रियापदानाञ्च उपयोगस्तावत्, विना प्रौढशिक्षणं दुष्करो भवति ।

साधारणशब्दानां प्रयोगस्तु सुलभः एव । नात्र व्याकरणे विशिष्टज्ञानम् अपेक्षितम् । तैश्च साधारणशब्दैः सर्वोऽपि व्यवहारः कल्पते एव । कन्नड-भाषायां बहवः सन्ति संस्कृतशब्दाः सुप्रयुक्ताः । तेषां परिचयः समस्त्येव सर्वेषां जनानाम् । अव्ययानि क्रियापदानि च प्रायेण तेषाम् अपरिचितानि । तानि च दैनन्दिनिकव्यवहारोपयुक्तानि कानिचिदेव । तेषां परिचायनं नैव कष्टम् आवहति । क्रियापदानां स्थाने कृदन्तानां प्रयोगः सुकरः । इदं सर्वं मनसिकृत्य यदि प्रयत्यते संस्कृतज्ञैः, तर्हि भाषा इयं कष्टा इति मतिः अपास्ता भवति छात्राणाम् ।

सरलीकरणाय यतमानैर्न कदाचिद् व्याकरणशास्त्रम् उपेक्षितव्यम् । शब्दानां लिङ्गनियमो वा धातूनाम् आत्मनेपदपरस्मैपदव्यवस्था वा, गणव्यवस्था वा यद्युदस्यते, तर्हि भाषेयं संस्कृतैव न भवति, अपरा इयम् अपभ्रंशभाषा भवेदिति मन्तव्यम् ।

**संस्कृतप्रचारः**

भारतीयेषु संस्कृताभ्यासकुतूहलम् इदानीं विभिन्नकारणैः प्रच्छादितम्, अत एव बहुशो निष्क्रियश्च । तदिदम् उद्बोधयितुम् अवश्यम् अस्माभिः प्रयत्नः कर्तव्यः । पाठशालास्थापनं केवलं नास्मिन् अभ्युपायः । विद्यमानासु पाठशालासु विरलाः सन्ति छात्राः । यदि संस्कृताभ्यासकौतुकमेव न स्यात् जनानाम्, तर्हि पाठशालाभिः किं क्रियेत ? तस्मात् अस्माभिः अभ्यासकुतूहलं तावद् उद्बोधयितव्यं जनानाम् । इदश्च संप्रधार्य बेङ्गलूरुनगरस्थेन हिन्दूसेवा-प्रतिष्ठानेन चाल्यमानानि संस्कृतसम्भाषणशिबिराणि प्रशंसनीयानि प्रमुखाणि च इति मे मतिः । एतानि शिबिराणि जनप्रियाणि भूत्वा दिने दिने प्रत्याशा-समुत्पादकानि अभवन् । विभिन्नजीविकावृत्तीन् जनान् इमानि शिबिराणि यशस्वितया समाकर्षन्ति । संस्कृतं सुलभमिति बुद्धिः उत्पादिता तेषाम् । एतादृशानि सम्भाषणशिबिराणि अखिलेऽपि कर्णाटके ग्रामेषु नगरेषु च यत्नेन योज्यानि, महाजनैः प्रोत्साहनीयानि च ।

एवमेव जनप्रियं नाटकं तत्र तत्र प्रदर्शनीयम् । बेङ्गलूरुजयनगरोपनगरे N.M.K.R.V. First Grade College for Women इत्यत्र प्रयोज्यमानो नाटकोत्सवः अत्र आदर्शभूतः समेषाम् । प्राचीनानां नाटकानां प्रदर्शने

दीर्घकालसापेक्षत्वात् नेपथ्यभूयिष्ठत्वाच्च तदपेक्षया सामाजिकानि ऐतिहासिकानि च अभिनेतुम् अर्हाणि भवन्ति । तादृशानि लघुनाटकानि चाधुनिकैः संस्कृत-कविभिः विरचितानि सन्तीति सन्तोषास्पदम् । भूयोऽपि कविभिः अस्मिन् विषये प्रयत्नः करणीयः । समयेऽस्मिन् अस्माभिः महता सम्भ्रमेण स्मरणीयम् इदमस्ति, यत् श्रीमता जी.वी.अय्यर्महोदयेन 'आदिशङ्कराचार्य'नामकं चलनचित्रं संस्कृतभाषायाम् इदम्प्रथमतया निर्मितम्, तच्च सुवर्णकमलप्रशस्तिं जिगाय इति । दिशि दिशि समुद्घोषितं संस्कृतस्य सौलभ्यम् ।

संस्कृतप्रचारविषये श्री वासुदेवद्विवेदिमहोदयैः सुरभारतीसन्देशाख्ये ग्रन्थे लिखिताः इमाः सूक्तयो मननीयाः । तत्र सुरभारती भारतीयान् सन्दिशति -

*बहुव्रतानि कुर्वन्ति भवन्तः प्रतिवत्सरम् ।*
*इदानीमिदमप्येकं व्रतं स्वीक्रियतां नवम् ।।*
*व्याख्यानेनाथ लेखेन सभासम्मेलनादिभिः ।*
*आयोजनेन गोष्ठीनां सङ्गीताभिनयैस्तथा ।।*
*प्रदर्शिनीभिर्ग्रन्थानां कविसम्मेलनेन च ।*
*पुराणवचनैश्चापि तथा प्रहसनादिभिः ।।*
*विद्यालयानां सर्वेषां छात्रैरध्यापकैस्तथा ।*
*आरम्भो मत्प्रचाराय स्वीये क्षेत्रे विधीयताम् ।।* इति । (पु. सं. १९)

## नूतनशब्दनिर्माणम्

व्यवहारपथे यदि संस्कृतम् आनेतुं प्रयतामहे, तर्हि क्लेशानुभवोऽपि दुर्निवारः । साम्प्रतं नूत्नतया आविष्कृतानां गृहोपकरणानां यान्त्रिकवस्तूनां वाणिज्यादिषु उपयुज्यमानानां भूयसां पदार्थानां वाचकाः शब्दाः नोपलभ्यन्ते । इमं क्लेशं परिहर्तुं त्रेधा अस्माभिः परिहारः शक्यते कर्तुमिति मे प्रतिभाति ।

**१.** कौटिल्यस्य अर्थशास्त्रे, शुक्रनीतिसारे, नाट्यशास्त्रे, वास्तुशिल्पग्रन्थे, वैद्यके, पाकशास्त्रे, धर्मशास्त्रे, वात्स्यायनकामसूत्रादिषु च प्रयुक्ताः एव सन्ति विभिन्नाः शब्दाः, ये तावदिदानीं व्यवहारपथात् लुप्ताः । ते च यत्नतः संग्राह्याः ।

**२.** अर्थविशेषे नूतनाः अपि शब्दाः शक्याः निर्मातुम् । तथैव निर्मिताश्च

सूरिभिः । यथा - राष्ट्रपतिः, राज्यपालः, लोकसभा, राज्यसभा, संसत्, विधानसभा, संविधानम् इत्यादयः । तथा विद्युच्छक्तिः, आकाशवाणी, दूरदर्शनम् इत्यादयश्च ।

**३.** संज्ञापदानि तावत् परिवृत्तिं न सहन्ते । तस्मात् नेहरूमहाशयः, मद्रास्नगरम् इत्येव वक्तव्यं भवतीति स्पष्टम् । एवमेव संस्कृतपदसामानाधिकरण्येन अन्यभाषाशब्दानां क्वचित् प्रयोगे का हानिः ? यथा - रैल्वेयानम्, बस्वाहनम्, चेक्पत्रम् इत्यादि ।

अस्मिन् विषये प्रयत्तं च मनीषिभिः । इमानि पुस्तकानि अवलोकनार्हाणि ।

१. डा. रघुवीरसम्पादितो महान् व्यवहारकोशः
२. महापण्डितराहुलसांकृत्यायनसम्पादितः कोशः
३. हिन्दूसेवाप्रतिष्ठानसम्पादितो व्यवहारकोशः ।

**संशोधनम्**

विश्वविद्यालयेषु Ph. D.पदवीप्राप्तये पदवीधराणां संशोधनस्य अवकाशः कल्पितः । साम्प्रदायिकीषु महापाठशालासु विदुषाम् अवकाशोऽयं न कल्पितः । किमर्थोऽयं पक्षपातः इति न विद्मः । संशोधनप्रबन्धाः अपि काव्यैः अलङ्कार-शास्त्रेण सीमिताः भवन्ति प्रायेण । वेददाङ्मये सांख्यादिदर्शनेषु विशेषतो जैनबौद्धसिद्धान्तेषु संशोधनं विरलप्रायं सञ्जातम् । वेदो नाम भगवन्निर्मितं काव्यम् इत्यभिप्रायेण 'देवस्य पश्य काव्यम्' इत्याह आथर्वणी श्रुतिः । आलङ्कारिककल्पिताः सर्वेऽपि अलङ्काराः ध्वनिप्रकाराश्च समुपलभ्यन्ते वेदेषु । किमत्र संशोधनस्य अवकाशो नास्ति ? वेदेषु राष्ट्रियभावना, गणराज्यप्रकारः, वैदिकी संस्कृतिः, आधुनिकसंमतं विज्ञानम् इत्यादयो बहवः अंशाः यान्ति संशोधनस्य विषयताम् । अपि च पाणिनिः आचार्यः छन्दोऽधिकारे भूयसः शब्दान् व्युत्पादयति । तेषु कति शब्दाः वेदेषु उपलभ्यन्ते, कति च न इति नाद्यापि निर्णीतम् ।

किञ्च सत्यपि समुद्रवद्विशाले गभीरे च संस्कृतसाहित्ये 'वैज्ञानिकाः विचाराः दुर्लभाः, श्रद्धाजाड्यमेव प्रदर्शयन्ति संस्कृतग्रन्थाः' इति रूढमूलोऽयम् अपवादः । अस्य अपवादस्य उन्मार्जनाय कियान् प्रयत्नः कृतः संशोधकैः ? श्रीदयानन्दसरस्वतीमहाभागेन एतदपवादोन्मूलनाय किञ्चित् प्रयत्तं, निर्मूलने

च पन्थाः प्रदर्शितः । अत्र श्रीवेङ्कटरमणय्यमहोदयेन रचितः 'सनातनविज्ञान-समुदय'ग्रन्थो विलोकनीयः । तत्र च भौतविज्ञानम् (Physics), रसायनविज्ञानम् (Chemistry), सस्यविज्ञानम् (Botany), भूविज्ञानम् (Geology), प्राणि-विज्ञानम् (Zoology), शरीरविज्ञानञ्चेति (Physiology) विज्ञानस्य षट्सु प्रकारेषु प्राचीनभारतीयैः अवलीढो विषयः समाहारेण निरूपितः ।

सूर्यस्य उदयास्तमयौ न स्तः इति स्पष्टम् उल्लिखितं छान्दोग्योपनिषदि - 'नैवोदेता नास्तमेता एकल एव मध्ये तिष्ठति' इति (छां. ३-११).

'चन्द्रग्रहणस्य भूच्छाया निमित्तम्, सूर्यग्रहणस्य चन्द्रो निमित्तम्, न तु राहुः' इति स्पष्टमाह वराहमिहिरो बृहत्संहितायाम् -

*'भूच्छायां स्वग्रहणे भास्करमर्कग्रहे प्रविशतीन्दुः'* इति,

*'राहुरकारणमस्मिन्नित्युक्तः शास्त्रसद्भावः'* - इति च ।

'भूमिश्च गगनमध्ये शक्तिविशेषात् तिष्ठति, न तु दिग्गजैः उह्यते' इति स एवाह - *'मेढीभूता खमध्यस्था'* इति ।

चन्द्रमसि दृश्यमानः किणः भूच्छाया इति निश्चित्य वर्णयति कालिदासो रघुवंशे - 'छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः' इति । - (रघु. १४-४०)

छान्दोग्ये त्रिवृत्करणप्रसङ्गे रोहितं, कृष्णं, शुक्लमिति त्रीण्येव रूपाणि इत्युक्तम् । रूपं नाम वर्णः । त्रयः एव वर्णाः मूलभूताः । एतद्व्यतिरेकेण दृश्यमानो हरिद्वर्णादिः वर्णत्रयस्य सम्मिश्रणम् इति तत्रत्यशाङ्करभाष्याद् अवसीयते । तदिदं वैज्ञानिकानां 'Tricolour Theory'तो नातिरिच्यते इति स्पष्टम् । अनया दिशा प्राचीनभारतीयानां विज्ञानावगतिः कियती बभूव इति संशोधनस्य विस्तृतोऽस्त्यवकाशः ।

**आलङ्कारिकाणां कर्तव्यशेषः**

अन्यच्च मे हृदयं सदा दुनोति, यत् पण्डितराजजगन्नाथप्रणीतो रस-गङ्गाधराख्यः अलङ्कारग्रन्थः दैवदुर्विपाकात् अर्धावशिष्टो, न पूर्णः । अलङ्कार-शास्त्रमूर्धन्यभूतोऽयं ग्रन्थराजः उत्तरालङ्कारपर्यन्तः एव उपलभ्यते । तदुदाहरण-भूतः श्लोकोऽपि अपूर्णः । सन्त्येव अद्यापि अलङ्कारशास्त्रनिष्णाताः

विद्वद्वराः । परन्तु न केनापि रसगङ्गाधरं पूरयितुं प्रयत्तम् । भोजराजस्य चम्पूरामायणम्, भवभूतेः महावीरचरितम्, बाणस्य कादम्बरी चेति त्रीणि काव्यानि एवमेव अर्धावशिष्टानि पूरितान्येव पूर्वसूरिभिः इति स्मरणीयम् ।

**सर्वकारस्य कर्तव्यविशेषः**

कर्णाटकसर्वकारेण यथार्हं संस्कृताध्ययनस्य प्रोत्साहो दत्तः इति पूर्वम् आवेदितम् । तदर्थं मया धन्यवादपूर्वकाणि अभिनन्दनानि समर्प्यन्ते । अपरेयं भवति अस्मदीया प्रार्थना । अस्मिन् राज्ये सर्वासु प्रौढशालासु संस्कृताध्ययनस्य अवकाशो न कल्पितः । नूतनतया आरभ्यमाणासु प्रौढशालासु विषयोऽयं नैव परिशील्यते इति विषादनीयम् । अतः,

१. सर्वासु प्रौढशालासु संस्कृताध्ययनस्य अवकाशो नियमेन कल्पनीयः ।
२. इदानीं बह्वीषु प्रौढशालासु, विद्यमानान्यपि संस्कृताध्यापकस्थानानि नैव पूरितानि । चिरेण शून्यानि इमानि स्थानानि अध्यापकानां नियोजनेन शीघ्रं पूरणीयानि ।
३. सर्वासु P. U. C.महापाठशालास्वपि संस्कृताध्ययनस्यावकाशो नियमेन कल्पनीयः ।
४. संस्कृतवाङ्मयस्य पोषणार्थम् उत्तेजनार्थं च संस्कृतप्रतिष्ठानम् एकं निर्मातव्यम् ।
५. जम्मु-नवदेहली-गुरुवायूरु-तिरुपतिप्रदेशेषु इव केन्द्रीयविद्यापीठमेकं स्थापनीयम् ।

**संस्कृतज्ञानां कर्तव्यविशेषः**

संस्कृतज्ञेषु विशेषतः अध्यापकेषु भवति इयं मदीया प्रार्थना । सौहार्देन क्रियमाणा इयं सहृदयतया प्रतिगृह्यताम् । यदधीतं शास्त्रं तत् पुनः पुनः अवलोकनेन दृढीकरणीयम् । प्रवचनेन अध्ययनपरम्परा संरक्षणीया । आलस्यं विहाय संस्कृतप्रचाराय आत्मा नियोजनीयः ।

अखिलकर्णाटकसंस्कृतपरिषदा संस्कृततरङ्गिणीति मासपत्रिका प्रकाश्यते साम्प्रतम् । तदस्तु नाम परिषदो मुखपत्रम् । अन्या च परिषत्पत्रिका विद्वज्जनप्रिया प्रकाशनीया इति मे मतिः । सा च भवतु त्रैमासिकी षाण्मासिकी वा, यत्र पाण्डित्यपूर्णाः संशोधनात्मकाश्च प्रबन्धाः प्रकाशं भजेरन् ।

अयि विद्वज्जनाः मान्याः सभासदः,

एतावता यन्मे मनसि विद्यमानं तत् उद्घाटितं समाहारेण । नाहं निराशः संस्कृतस्य आयतौ । सन्त्येव संस्कृताभिमानिनो युवानः, विद्वांसो विविदिषवश्च कार्यकर्तारः संस्कृताभिवृद्धये बद्धकङ्कणाः । तेषु किल भारोऽयम् आरोपितः । सनातनी संस्कृतसरस्वती चिरं विराजताम् ।

*गुरुशङ्करफणभृद्वरपरिमार्जितपादे*
*कविशेखरनिवहार्पितनवमौक्तिकहारे ।*
*वसुधार्चितबुधनिर्मितमणिचित्रकिरीटे*
*जय भारति करुणेक्षितजगतीतलभाषे ।।*

# २०. संस्कृतोत्सवसमारम्भस्य उद्घाटनभाषणम्

कवीन्द्राणां चेतःस्फुरणमुपकल्प्याप्रतिहतं
हतं लोकं जाड्यादमृतरससेकेन निभृतम् ।
समुज्जीव्य श्रेयःसुभगचतुरस्त्रं विदधती
जयत्येका वाणी निखिलजनहृन्मध्यनिलया ।।

करे धृत्वा वीणां मधुमधुरनिःस्वानरुचिरां
वसाना वासोऽच्छं विमलशरदिन्दुच्छविहरम् ।
स्वयंशुक्ला शुभ्रस्मितरदनकान्तिर्विजयिनी
परा वाग्देवी सा क्रथयतु ममाज्ञानतिमिरम् ।।

विदितमेव इदं समेषां भवतां यत् सर्वोत्तमायाः भारतीयसंस्कृतेः मातृसदृशं मूलं संस्कृतभाषावाङ्मयम् इति । वेदः, रामायणं, महाभारतश्चेति त्रिकूटेन शोभितः सस्कृतग्रन्थसङ्घातः समुद्रमिव गाम्भीर्ये हिमालयमिव वैशाल्ये अतिशय्य विराजते । अनेन च संस्कृतवाङ्मयेन समुद्दीपिते ब्राह्मक्षात्रे च तेजसी इमं भारतदेशं पवित्रं विदेशीयानाम् आक्रमणात् अभिषेणनाच्च संरक्ष्य परिपालयामासतुः । कालमहिम्ना च अभिभूते ब्राह्मे तेजसि विदेशीयानाम् आक्रमणं प्रवृत्तम् । ततश्च क्षात्रेऽपि तेजसि अभिभूते, राष्ट्रस्यास्य स्वातन्त्र्यम् अपि अपहतम् । अत एव श्रीशङ्करभगवत्पादाः गीताभाष्ये - 'ब्रह्मक्षत्रे च सम्यक् परिपालिते जगत्परिपालयितुम् अलम्' इति व्याजहतुः । अथवा अलमनेन विवादसम्भावनास्पदेन व्याहृतेन । संस्कृतभाषा तु दर्शनशास्त्रेण, काव्यसाहित्येन, नानाविधकलाभिमर्शिना ग्रन्थजातेन, अक्षय्येण शब्द-भाण्डागारेण च जगति दृष्टम् अन्यभाषासाहित्यम् अभिभूय प्रकाशते इत्यत्र

नास्ति मतिमतां विवादः ।

न केवलम् अध्यात्मशास्त्रे, किन्तु आयुर्वेद-ज्योतिष-खगोल-गणित-शिल्प-सङ्गीत-नाट्य-नृत्य-काव्यालङ्कारेषु, योगे, तर्के, व्याकरणे, राजनीतौ, सामान्य-नीतिशास्त्रे, किं बहुना, मानवबुद्धिगोचरासु षष्ट्यधिककलास्वपि अस्मदीयाः प्राचीनाः मनीषिणः प्रौढान् ग्रन्थान् निर्माय वाग्देवतां भूषयित्वा अर्चयामासुः । अस्मिन् विषये 'नमः परमऋषिभ्यः, नमः परमऋषिभ्यः' इत्येतावदेव अभिधाय अस्मदीया वाणी विरमति ।

महत्या तपश्चर्यया भूयसा यत्नेन च अस्मदुपकारार्थमेव मेधाविभिः प्रणीतान् ग्रन्थान् साकल्येन संरक्षितुमपि निर्भाग्याः वयं न प्राभवाम इति चिन्तयतो मम विषण्णं भवति मानसम् । तेष्वपि ग्रन्थजातेषु -

कति नष्टाः कति शिष्टाः कति दृष्टा इति च को वक्तु ।
आलस्यदूषितानां जाड्यं नः केवलं निन्द्यम् ।।

इदानीमपि अवशिष्टानाम् अमुद्रितानां ग्रन्थानां परिष्करणपूर्वकं मुद्रापणं करणीयम्, संस्कृतभाषायाम् आदरो जनानां जननीयः, अध्येतुम् इच्छताम् उत्साहः चोदनीयः, अस्याः अमरवाण्याः विषये कटुवचनानि उद्गिरतां दुर्ग्रहो निग्रहणीयः इत्यादिः महान् कार्यभारः अस्ति संस्कृताभिमानिनां विदुषाम् । इदन्तु खेदयति अस्मादृशां चित्तभित्तिं यदद्य संस्कृतपण्डिताः केचन संस्कृताध्यापकत्वेन नियुक्ताः शालासु कृतकृत्यम् आत्मानं मन्यमानाः संस्कृत-भाषायां परम् औदासीन्यम् आस्थिताः । अधीतं शास्त्रमेव विस्मृत्य चेष्टन्ते । व्याकरणविद्वान् कतिपयरूप्यकाणि आदाय सिद्धान्तकौमुदीं विक्रीणीते । तर्कविद्वान् सिद्धान्तमुक्तावलीं विक्रीणीते । संस्कृतकार्यक्रमेषु न क्वचिद् उपतिष्ठते । अहो कृतघ्नता पण्डितानाम् एतेषाम् !

वयं खलु संस्कृतसरस्वत्या दत्तम् अन्नम् अश्नीमः । तया दत्ते गृहे वसामः । तद्दत्तानि वस्त्राणि वस्महे । तदनुग्रहेणैव अस्मज्जीविका निर्वर्तते । तथापि तत्सेवाम् ईषदपि कर्तुं नोत्सहामहे । कदाचिन्मम मुखात् निर्गतमिदं पद्यं संस्कृतवाणीम् उद्दिश्य -

शरीरे मेऽन्तःस्थं रुधिरकणमेकैकमपि ते
कृपालेशो व्याप्तः किमिह परिशिष्टं भगवति ।

गृहं वस्त्रं वान्नं सकलमपि सौख्यं तव वशे
अहो मे सौभाग्यं तदुपरि च विद्या शुभकरी ।।

देवऋणम्, ऋषिऋणं, पितृऋणम् इति ऋणत्रयम् अस्माकं शिरसि निपतितं विभाव्यताम् । अकृत्वा संस्कृतसरस्वतीसेवाम् ऋणमिदं नैव शुध्यति । नैव अपाक्रियते ।

ऋणं तदनपाकृत्य योऽन्यत्र कुरुते श्रमम् ।
वृथैव जीवितं तस्य किं ब्रूमो वैकृतं तस्य ।।

पश्यन्तु भवन्तः एवास्मिन् गिरिनगरे 'अक्षरम्' इति निर्देशेन प्रवर्धमानां 'संस्कृतभारती'संस्थाम्, यत्र विनापि वेतनं, विनापि स्वप्रयोजनम् अहोरात्रं संस्कृतसेवायां निमग्नाः सन्ति युवानो युवतयश्च । यद्यपि सन्त्येव डा बि.एस्. रामकृष्णरावसदृशाः केचन उत्साहशीलाः संस्कृतसेवाधुरन्धराः, तथापि तत्कार्येषु दीयमानम् आचर्यमाणञ्च साहाय्यकम् अत्यल्पमेव इति उत्पश्यामि । पश्यत च सुगृहीतनाम्नः पण्डितगुलामदस्तगीर–अब्बास–अलीबिराजदार–महोदयान् । ते विश्वसंस्कृतप्रतिष्ठानस्य महामन्त्रिणः विश्वभाषायाः प्रधानसम्पादकाश्च सन्तः संस्कृतसेवायां बद्धपरिकराः विराजन्ते । महम्मदीयाः अपि सन्तः अमरवाण्याः गुणनिकया आकृष्टचित्ताः तत्सेवां विदधते । तेषां विस्मयावहा राष्ट्रभक्तिः अस्मान् ह्रेपयेत् ।

मान्याः सभासदः, संस्कृतोत्सवसमारम्भोऽयम् उद्घाटितः । एतस्मिन् सन्तोषदायके समारम्भे विद्वद्वरेण्याः सम्माननीयाः इति निर्णीय विश्वसंस्कृत-प्रतिष्ठानमिदं कांश्चन विद्वन्मूर्धन्यान् आदरेण समाह्वयत् । ते च माननीयाः अस्मदीयप्रार्थनां कृपया अङ्गीकृत्य समागताः । सर्वेऽप्येते विभिन्नसंस्कृत-साहित्यप्रकरेषु कृतभूरिपरिश्रमाः उपस्थिताः इति महदिदं प्रमोदस्थानम् अस्माकम् । कण्ठवेदनया पीड्यमानः अहं किञ्चिदेव एतावत् उक्त्वा विरमामि ।

गुरुशङ्करफणभृद्वरपरिमार्जितपादे
कविशेखरनिवहार्पितनवमौक्तिकहारे ।
वसुधार्चितबुधनिर्मितिमणिचित्रकिरीटे
जय भारति करुणेक्षितजगतीतलभाषे ।।

★ ★ ★

# २१. श्रीतिरुमलाम्बाप्रशस्तिप्रदानकार्यक्रमे डा. वनमालाभवालकरमहोदयायाः परिचयः

सम्मान्याः अध्यक्षमहोदयाः. सर्वोच्चज्ञानपीठप्रशस्तिविजेतारः डा. बीरेन्द्रकुमारभट्टाचार्याः, वेदिकायां विराजमानाः विद्वांसो विदुष्यश्च, सभास्ताराः, महिलामहोदयाः, संस्कृतप्रणयिनः सुहृदश्च,

अनया एन्.एम्.के.आर्.वि.महिलामहाविद्यालयस्य राष्ट्रियशिक्षण-समित्या प्रतिष्ठापितां नञ्जनगूडुतिरुमलाम्बाप्रशस्तिं, संख्यया सप्तमीमिमां विजितवतीं श्रीमतीं डा. वनमालाभवालकरमहाभागां परिचाययितुम् इदानीम् उत्सहे, नन्दामि च । मम च इदं प्रमोदस्थानम् उपनतम् । परन्तु श्रीमती वनमालाभवालकरमहोदया सभायाम् अस्यां नोपस्थातुं समर्था अभूत्, अनारोग्येण निमित्तेन इति खिद्यते च मनः । तथापि तस्याः स्नुषा - पुत्रस्य धर्मपत्नी - श्रीमती शान्तिभवालकरमहाभागा इमां प्रशस्तिं श्वश्रूप्रतिनिधिः सती स्वीकर्तुम् आगता इति तस्याः हार्दं स्वागतं व्याहृत्य प्रकृतोचितं किञ्चित् प्रस्तोतुम् अभिलषामि ।

इयं हि एन्.एम्.के.आर्.वि.महिलामहाविद्यालयस्य राष्ट्रियशिक्षणसमितिः प्रतिसंवत्सरं भारते प्रसिद्धायाम् अन्यतमभाषायां श्रेष्ठनिबन्धकर्त्र्यै प्रथित-यशस्कायै महिलायै नञ्जनगूडुतिरुमलाम्बाप्रशस्तिं वितीर्य सम्मानयति । अस्मिन् च वत्सरे संस्कृतभाषायां प्रशंसार्हकृतिं विरचितवत्यै प्रशस्तिप्रदानं भवत्विति निर्णयः कृतः । ततश्च समागतसंस्कृतग्रन्थमौल्यमापनार्थं काचन विद्वत्समितिः मदाध्यक्ष्ये निर्मिता । प्रशस्तिप्राप्तये संस्कृतकृतीनां प्रवेशार्थम् आह्वानं सर्वासु प्रसिद्धपत्रिकासु प्रकाशितम् । अस्माकं हृदयम् आरम्भे एव शङ्काकुलम्

अभूत् यदस्मिन् अभिनवमधुलोलुपे काले अपि नाम संस्कृतभाषा-रचितानां काव्यानां प्रवेशो भविता, तत्रापि काचिद् वनिता प्रशस्तकृतिरचयित्री सम्भाव्येत इति । मासद्वयेन बहुसंख्याकाः कृतयः अस्माभिः उपलब्धाः । उच्छ्वसितमिव अस्मदीयं हृदयम् । हन्त, अमरवाणीयं शाश्वती न कदाचन पराभवम् अनुभवति ।

मौल्यमापकसमितौ समितैः अस्माभिः परिशीलितासु विभिन्नलेखिकानां कृतिषु काव्यानि, नाटकानि, स्तोत्राणि, मुक्तकानि, कथाः, परिशोधकप्रबन्धाः, संस्कृतभाषया परिवर्तिताः ग्रन्थाश्च आसन् । तत्र यद्यपि इतरलेखिकानामपि कृतयः प्रशंसाम् अर्हन्ति स्म, तथापि डा.वनमालाभवालकरप्रणीताः कृतयो विशेषतः प्रशंसाम् अलभन्त इति सैव कवयित्री अस्माकम् ऐककण्ठ्येन प्रशस्तिपात्रम् अभूदिति निवेदयितुं हृष्यति मे मनः । अनया प्रेषिताः षोडशाधिकाः कृतयः परामृष्टाः । अन्ये च केचित् ग्रन्थाः संस्कृतभाषायाम् अनया प्रणीताः, केनापि कारणेन न मुद्रिताः । तेषां नामानि परं प्रेषितानि ।

श्रीमती वनमालाभवालकरमहोदया एम्.ए.-पिएच्.डि.पदवीधरा मध्य-प्रान्तीयसागरनगरे सागरविश्वविद्यालयस्य संस्कृतविभागे प्रवाचिका(Reader)-स्थानम् अधितिष्ठन्ती बहून् च्छात्रगणान् संस्कृतम् अध्यापयामास । इदानीम् उद्योगान्निवृत्ता संस्कृताध्ययने ग्रन्थरचनायाञ्च शेषं वयो विनियोजयन्ती प्रथते । संस्कृतकवयित्रीषु वयसा विद्यया च ज्येष्ठ असौ डा. वनमाला-भवालकरमहोदया अधुना अशीतिवर्षदेशीया । इयञ्च पूर्वं विश्वविद्यालये छात्रान् अध्यापयन्ती पतिमती पुत्रवती सद्गृहिणी बहुलसंसारबन्धनापि सती विशालेऽध्ययने ग्रन्थ-विरचने च आत्मानं व्यापारयामास इति परमश्लाघास्पदम् एतत् ।

अनया प्रणीतेषु ग्रन्थेषु 'पार्वतीपरमेश्वरीयं' नाम मनोज्ञं सङ्गीतप्रधानं दृश्यकाव्यम्, 'प्राददण्ड'नामकं सम्भाषणप्रधानं रूपकञ्च विशेषेण उल्लेखम् अर्हति । 'पञ्चसु महाकाव्येषु चन्द्रः' 'शाकुन्तलस्य नाट्यशास्त्रीयमनुशीलनम्' 'महाभारते नारीशिक्षा' इत्येते प्रबन्धाः परिशोधनात्मकाः प्रबन्धनिर्मात्र्याः परिदृढं सूक्ष्मम् अध्ययनं प्रद्योतयन्ति । 'इस्लाम्धर्मानुयायिनां संस्कृतसेवा' इति लेखने महम्मदीयाः अपि संस्कृतम् अभ्यस्य ग्रन्थान् प्राणैषुः इति कौतुक-

बहुलो विषयो निरूपितः ।

प्रायेण श्रीमत्याः वनमालाभवालकरमहोदयायाः कविताविरचने महत् कौतूहलम् । मङ्गलाष्टकम्, स्वागतपद्यमाला, वधूवरयोराशीर्वादः इत्यादि-विषयेष्वपि अस्याः लेखनी निरर्गलं बहुधा प्रवृत्ता । अन्यभाषास्विव संस्कृतभाषायामपि काचिदस्ति विशिष्टशैली, काचन वाचोयुक्तिः । अभिज्ञामात्रविज्ञेया पदरचनारूपा रीतिरिति नाविदितं विदुषाम् । तादृशी शैली, तादृशी वाचोयुक्तिः, तादृशी रीतिः च अनया कवयित्र्या सर्वत्र प्रकटीकृता इति हर्षस्थानमिदम् । एषा च विदुषी संस्कृतभाषामिव इङ्ग्लीष-हिन्दी- मराठीभाषाः सम्यग् जानाति ।

किञ्च प्रशस्तिघोषणानन्तरं मया विज्ञातं यदेषा श्रीमती वनमालामहाभागा, पूर्वम् अस्माकं बेलगाम्नगरम् अध्युषितवती कन्नडभाषामपि सम्यग् विजानाति इति । तदिदम् अस्माकं हर्षातिशयं जनयति ।

एषा वर्षीयसीविदुषी यवीयसीनां कवीनां स्फूर्तिम् उद्दीपयन्ती, मार्गं दर्शयन्ती, उत्साहं वर्धयन्ती भगवदनुग्रहेण चिरकालं जीवतात्, इतोऽपि कल्याणातिशयेन युज्यताम्, राराज्यताञ्च विदुषां समाजे इत्याशास्महे ।

चित्रवर्णपदन्यासैर्ग्रथिता वनमालया ।
कृतिः संस्कृतवाग्देव्याः वनमालायते ध्रुवम् ।।

एवम् अस्माकं समितेः सदस्यानां ग्रन्थमौल्यमापनावकाशदानेन एतादृश-रसमयग्रन्थपरिशीलनसौभाग्यं स्नेहेन विश्वासेन च कल्पितवद्भ्यः राष्ट्रिय-शिक्षणसमितेः पदादिकारिभ्यः मौल्यमापनसमितेः परतः सप्रश्रयान् प्रणामान् अर्पयामि । तथा अस्माकं मौल्यमापनकार्ये सकलसौकर्यं सौहार्देन कल्पितवतीम् अस्य महाविद्यालयस्य प्रांशुपालां विद्याविनयसम्पन्नां सहृदयां सुहृदयां मूर्तिमतीमिव क्रियाशक्तिं, श्रीमतीं चि.न.मङ्गलां सर्वमङ्गलाम् अभिनन्दन् सबहुमानम्, प्रणामपूर्वकान् धन्यवादान् निवेदयामि । इति शम् । नमः सर्वेभ्यः ।

★ ★ ★

# २२. भूषणसारसमीक्षा (ग्रन्थपरिचयः*)

श्रीकौण्डभट्टप्रणीतस्य वैयाकरणभूषणसारस्य समीक्षात्मकः अयं ग्रन्थः । अस्य ग्रन्थस्य प्रणेतारः डा के.वि. रामकृष्णमाचार्याः व्याकरणन्यायवेदान्तेषु सम्यगधिगतवैदुष्याः ग्रन्थमिमं प्रणीय विद्यावारिधिपदवीं प्राप्नुवन् । समीक्षायाः परिशीलनेन स्फुटीभवति आचार्याणां ग्रन्थ-प्रणयनपटीयसी मेधा, विभिन्नशास्त्रेषु अकुण्ठिता प्रज्ञा, सारासारविवेचिनी नैपुणी च । ग्रन्थरचनायां नवीना रीतिः आदृता । वस्तुप्रतिपादनशैली च नूतना, या वाचकानाम् उत्पद्यमानशङ्काकलङ्कम् अपि मार्जयति । वैयाकरणभूषणसारस्य मूल-भूतायाः सिद्धान्तकारिकायाः कर्ता सुप्रसिद्धः भट्टोजिदीक्षितः । तम् आरभ्य श्रीकौण्डभट्ट-पर्यन्तानाम् एकवंशीयानां विदुषां, ग्रन्थकर्तुः समकालस्थितानां जगदीशादीनां, भूषणसार-टीकाकर्तॄणाम् च देशकालादिवृत्तान्तः यत्नेन गवेषयित्वा ग्रन्थारम्भे प्रकाशितः । आधुनिकमनोभावजुष्टानाम् अयं प्रीतिं जनयति । भट्टोजिदीक्षितः, तदनुजः रङ्गोजीभट्टः, तस्य पुत्रः कौण्डभट्टः च इति पण्डितत्रयी कर्णाटकदेशस्थकेलदीसंस्थानस्य प्रभूणाम् आस्थाने अराजत इति ऐतिहासिकोदन्तः कार्णाटानाम् अभिमानास्पदं, विशेषतश्च मम, येन मया केलदीग्रामे स्थितायां संस्कृतपाठशालायाम् इदम्प्रथमतया पाणिनीयशास्त्रम् अध्येतुम् आरब्धम् । महति पाणिनीयशास्त्रे प्रणीतग्रन्थानां द्वयी गतिः । प्रकृतिप्रत्ययविभागादिना साधुशब्दव्युत्पादनपरा शब्दप्रधाना एका । प्रकृति-प्रत्ययाद्यर्थान् शाब्दबोधपर्यन्तं विमृशन्ती अर्थप्रधाना द्वितीया । अर्थप्रधानेषु एव ग्रन्थेषु महान् पराक्रमः दृश्यते विदुषाम् । अस्य च अर्थप्रधानस्य समीक्षाग्रन्थस्य प्रणयनोद्देशः तु समीक्षितृभिः एवं निरूपितः – 'तत्तत्काले तेषां तेषाम् आर्थिकविचारसरणिः कीदृगासीत्, तत्र कोऽपि क्रमिकः विकासः

---

* 'सम्भाषणसन्देश'पत्रिकायां 'ग्रन्थपरिचय'विभागे प्रकाशितः लघुलेखः अयम् ।

विपरिणामः वा दृश्यते वा, तथा चेत् तत्र निदानं किम् इत्यादि पर्यालोचनीयम् । न क्वापि पर्यालोचितम् अनया दृट्या । अतः विशिष्टम् अध्ययनं कृत्वा प्रणीतः अयं ग्रन्थः' इति । अस्यां समीक्षायां भागद्वयं वर्तते । प्रथमभागे च पूर्वोक्तानां विदुषां देशकालग्रन्थादिकं विमृश्य धात्वाख्यातार्थनिर्णयः विस्तरेण निरूपितः । मीमांसकनैयायिकादीनां तदेकदेशिनाञ्च धात्वर्थविषये मतभेदान् प्रतिपाद्य, प्राचीनवैयाकरणानां नवीनानां च आशयः सम्यक् उपवर्णितः । सर्वत्र शाब्दबोधप्रकारः दर्शितः । नैयायिकादीनां मतेषु दोषः अपि प्रादुर्भावितः । वैयाकरणमतस्य साधुत्वम् अपि दर्शितम् । उपसंहारक्रमेण पुनः अवलोकनं कृत्वा, स्वप्रतिज्ञानुसारं स्वाभिप्रायः प्रकाशितः । इयमेव परिपाटी सर्वेषु विवादेषु समादृता । धात्वर्थादीनां विकासक्रमः च विचारितः । 'भावप्रधानमाख्यानम्' इति जोघुष्यमाणवाक्ये आख्यातपदार्थः कः ? किं तिङन्तम्, उत तिङ्, आहोस्वित् धातुः ? यास्कादिभिः सर्वैः प्राचीनाचार्यैः आख्यातपदं तिङन्तम् इत्यर्थे प्रयुक्तम् । तदज्ञानेन अर्वाचीनेषु महान् विवादः प्रावर्तत । नवमशतकात् परं शालिकानाथादिभिः तिङ्प्रत्ययः इत्यर्थे प्रयुक्तं दृश्यते इति विपुलप्रमाणानि प्रदर्श्य साधितम् । तदेतत् ग्रन्थकाराणां बहुदृश्वताम् अभिव्यनक्ति । आख्यातः धातुः इति मतम् उपेक्षितम् । ततः कालस्वरूपे विभिन्नशास्त्रकाराणां मतं प्रदर्श्य लकारार्थः निरूपितः । अनेन एव प्रकारेण द्वितीयभागे सुबर्थनामार्थयोः निर्णयः, एकार्थीभावः, शक्तिस्वरूपम् इत्यादयः विचाराः सुलभया शैल्या साकल्येन प्रस्तुताः । समीक्षणन्तु सर्वत्र वर्तते । इदं समीक्षणन्तु नानामतेषु विद्यमानगुणदोषान् परीक्ष्य मौल्यं निर्धारयति इति बहु उपयुक्तम् । अन्ते च स्फोटवादः सम्यक् एव परामृष्टः । तदुपरि प्रवृत्ते समीक्षणे नित्ये अपि स्फोटे ध्वनिव्यङ्ग्याः नित्याः वर्णाः अवयवाः सन्ति इति स्फोटस्य सावयवत्वं स्वीकृतम् । निराकृतः निरवयववादिनः नागेशस्य मतम् । स्फोटस्य सावयवत्वे, सावयवस्य कथं नित्यतासिद्धिः इति तु ग्रन्थकारैः न विचारितम् । स्यादेतत् । श्रीमतां डा. के.वि.रामकृष्णमाचार्याणाम् उद्यमोऽयं प्रशंसनीयः सार्थकश्च । ग्रन्थोऽयं प्रबोधकोऽस्ति व्युत्पित्सूनां व्युत्पन्नानां च ।

ग्रन्थरत्नमिदं नूनं संग्राह्यं सर्वशाब्दिकैः ।
इत्याशयेन तस्यैवं स्थूलः परिचयः कृतः ।।

★ ★ ★

# २३. सारस्वताराधनम्

- वि० के.एस्.भास्करभट्टः

ॐकारमन्दिरमनोहररत्नदीपाम्
अज्ञानगाढतिमिरापहचित्प्रकाशाम् ।
सृष्टिस्थितिप्रलयकौतुककेलिशीलां
विद्यामनादिनिधनां हृदि भावयामि ।।

अथ, अहैतुककृपाजलधेः निखिलकल्याणनिधेः भगवतो विविधावतार-लीलाविलासभूमिः, वर्तमानभूतभविष्यद्वस्तुनिश्चयं करतलबदरवदवलोकयतां दीर्घतपसां कश्यपादीनां पूर्वेषां परमर्षीणां तपस्यागारम्, अध्यात्मज्ञानिनां जनकादीनां राजर्षीणाम् अध्यात्मिकविचारमन्दिरम्, वेदशास्त्रादिचतुर्दश-विद्यानाम् अध्ययनक्षेत्रम्, गङ्गातुङ्गादिनैकपुण्योदवाहिनीनां सलिलावगाहेन सङ्क्षालनीयनिखिलमानसिककषायाणां निर्णेजनगृहम्, सनातनधर्मप्रसारकाणां शङ्कराद्याचार्याणां धर्मपीठसंस्थापनधर्मानुष्ठानस्थानम्, संस्कृतप्राकृतापभ्रंश-देश्यादिनिखिलभाषाविदाम् अनेकेषां कविपुङ्गवानां च आश्रयः, अनेकासां कलानां विज्ञानादीनां च विविधविश्वविद्यालयानां सञ्चालनस्थानम्, सनातन-तदितरधर्मानुयायिसर्वप्रजाजीवातुहेतुः, भारतीयानाम् अस्माकं प्राक्तनानां च जन्मभूः, धरणीमण्डलमण्डनायमाना सेयं भारतवसुन्धरा प्राचीनानि अर्वाचीनानि उच्चावचानि च अनर्घाणि विद्वद्रत्नानि रत्नाकरो वज्रवैडूर्यादिबहूनि रत्नानीव आत्मनो गर्भे दधाना रत्नगर्भेत्यन्वर्थनामधेया सम्प्रत्यपि स्वीयेन महिम्ना रोचमाना वरीवर्तीति महद्गौरवस्थानम् अस्माकम् ।

अत्र भारते औत्तराहाः इव दाक्षिणात्याः, प्राचीनाः इवार्वाचीनाः पण्डिताः गैर्वाण्यां वाण्यां देश्यायां भाषायां च काव्यशास्त्रपुराणेतिहासादिषु आकरेषु

स्वाभिलषितं विषयम् अधिकृत्य स्वमनीषया मीमांसितानि नूतनतया विमृष्टानि विपुलानि ग्रन्थजातानि प्रकाशयांचक्रिरे । ते एते यथामति सारस्वताराधनेन वेदम् उपबृंहयन्तः परिणतवयस्काः स्वजीवनं कृतार्थीकुर्वन्तः विराजन्ते ।

किञ्च ते एते महाभागाः विद्वांसः कवयश्च नवनवोन्मेषशालिन्या प्रज्ञया स्वानुभवसिद्धं सिद्धान्तं मण्डयन्तः प्रतिवादिभयङ्कराः विद्वत्सभासु, स्वाध्यायाध्यापनपटिष्ठाः विद्यार्थिलोकेषु, सरसकविताचतुराः काव्यगोष्ठीषु, लौकिकन्यायविचक्षणाः लौकिकविद्यावत्सु च गौरवम् आदधानाः विविध-धर्माचार्यपीठेन भारतीयराजकीयप्रशासनेन च पुरस्कृताः यशस्कामाः शोभन्ते इत्येतत् प्रमोदास्पदं समेषाम् ।

अस्ति हि कर्णाटकराज्ये प्रकृतिरमणीयः शिवमुखाभिधानः प्रान्तविशेषः, (Shimoga District) यत्र शरावतीसरित्सलिलशीकरनिर्झरपातजर्जरशब्दाय-मानं केन्द्रीयभारतप्रशासनस्थापितं जोगाभिधानं विद्युदुत्पादकं क्षेत्रं प्रथितम् । तत्र हि प्रान्ते पुरा केलदिसंस्थानिकभूपालप्रशासितं, कमनीयकाननपरिवृतं, गन्धतरुसुरभिगन्धवहगन्धवाहाधिवासितं, गन्धसारद्रुमतक्षणकुशलकरकला-कोविदैः अध्युषितं, भगवतः श्रीरङ्गनाथस्वामिनः करुणावारिसेकसुभगं, दण्डावतीतीरस्थितं सुरभिनामकं पुरं (Soraba) विद्यते खलु । तत्सुरभिपुरं निकषा सस्यश्यामलशालेयवनावनीविलसिते पूगवाटीशतपरीवृते प्रदेशे सदाचारपूतैः विद्वत्कुलीनैः तपःकृतात्मसंस्कारैः निर्मलमनोभिः नानागोत्रीयैः गृहमेधिभिः हव्यकैः द्विजैः अधिष्ठिता नडहल्लीनाम्नी काचन पल्ली विजयतेतराम्, या खल्वभिनन्दनीयचरितस्य धवलयशसो महाविदुषः सुगृहीतनाम्नः श्रीमतो रङ्गनाथशर्मणः पितृपितामहप्रभृतिभिः मेधाविभिः अभिजनैः अध्युषिता जन्मभूमिः ।

तत्र खलु गोत्रेण वैश्वामित्रः सूत्रेण बौधायनः स्वाध्यायेन यजुषा तैत्तिरीयः सदाचारेण पूतो वंशेन शुद्धो जन्मना ब्राह्मणः प्रकृत्या धीरोऽध्यात्मानुरागी देवद्विजगुरुसमाराधनपरः आर्यगृह्यो भगवतो रङ्गनाथस्वामिनः चरणारविन्दसेवा-पर्युत्सुकान्तरङ्गः पातिव्रत्येन सीतासावित्रीसध्रीचया जानकीति नामधेयया जायया गृहमेधी कोऽप्यातिथेयः सभ्यः तिम्मप्पनामा गृहस्थो निवसति स्म ।

तयोः जानकीतिम्मप्पाख्ययोः दम्पत्योः १८३६ तमे शालिवाहनशके राक्षससंवत्सरे वैशाखमासि शुक्लपक्षे पञ्चम्यां तिथौ बुधवासरे सुमुहूर्ते पुत्रोत्सवो

महान् आसीत् । ततः पिता स्वापत्यं यथाकालं जातकर्मणा संस्कृत्य, सुरभिपुराधिदैवतस्य भगवतो नाम्ना 'रङ्गनाथ' इत्याजुहाव । ततो जनन्या वात्सल्यातिशयेन परिपोष्यमाणः शिशू रङ्गनाथः सितपक्षीयः शशीव प्रतिदिनं वर्धमानः परिपुष्टाङ्गयष्टिः बालसहजेन सौकुमार्येण, सौन्दर्येण च मातापित्रोः बान्धवानां च मनो जहार । ततः पित्रा यथाकालं यथाशास्त्रम् उपानीयत । सावित्रीग्रहणानन्तरं कृतसन्ध्योपासनः सोऽयं वटुः 'अग्निर्वै माणवकः' इति श्रुत्यर्थस्य स्वात्मानम् उदाहरणीकुर्वन्निव तेजसा हव्यवाहनः इव आसीत् ।

अनन्तरं स्वग्रामे कन्नडप्राथमिकशिक्षणम् अलभत सोऽयं वटुः । ततः पूर्वजन्मवासनावासितान्तःकरणः इव कुमारो रङ्गनाथः स्वकुलोचितां वैदिकीं विद्याम् अध्येतुं श्रद्धालुः अभवत् । ततो नडेहल्लीपल्लीतो नातिदूरवर्तिनि केलदिग्रामे स्थितायां वेदपाठशालायां प्रायः षोडशवर्षदेशीयस्य अस्य बालकस्य प्रवेशः अभूत् । तत्र तत्रभवतां वैदिकश्रेष्ठानां ब्रह्मश्रीमत्तूरुकेशव-शास्त्रिणां, ब्रह्मीभूतहोसहल्लीब्रह्मश्रीनारायणशास्त्रिणां च सन्निधौ वेदे कालोचितमन्त्रभागान्, संस्कृते बालशिक्षणार्हाणि प्रथमपरीक्षापाठ्यानि, काव्यपरीक्षापाठ्यानि च बालोऽपि पपाठ । ततो मध्यमशालायां प्रौढशालायां च लौकिकविद्यामपि अपाठीत् ।

अथ गुडजिह्विकान्यायेन गैर्वाण्यां सकृदास्वादितकाव्यरसस्य रङ्गनाथस्यास्य चेतोवृत्तिः माघनैषधादिप्रौढकाव्यानि, चम्पूनाटकादीनि च पठितुं त्वरते स्म । तदानीं सोऽयं बालः कल्याणनगरे (Bengaluru) महीशूरमहाराजप्रकल्पितं प्रौढसंस्कृतविद्याभ्याससौविध्यमस्तीति केनापि कथ्यमानम् अश्रौषीत् । अनन्तरम् असौ कल्याणनगरम् आजगाम । तत्रत्यायां श्रीमच्चामराजेन्द्रसंस्कृत-महापाठशालायां चम्पूनाटकादि पठित्वा प्रवेशपरीक्षाम् उत्ततार ।

ततस्तत्र शालायां वैदिकाचारनिष्ठेभ्यः तिरुनारायणैय्यङ्गार्यप्रभृतिभ्यो महावैयाकरणेभ्यः आचार्येभ्यः आपञ्चषवर्षं पाणिनीयं समहाभाष्यं व्याकरण-शास्त्रं यथासम्प्रदायम् अध्यगीष्ट । प्रायः खल्वाचार्याः अपि कुशलमतीन् अन्तेवासिनः सपृच्छापृच्छं सकुतुकम् अध्यापयन्ति । तथापि तेषां मन्दबुद्धिषु न पक्षपातः । प्रकृते कुशलमतिरयं रङ्गनाथो युवा शीघ्रं विद्वत्पदवीम् आरूढः । ततः स्वयम् अलङ्कारशास्त्रमपि अधिजगे । तथापि न हि क्षीणा तस्य पिपठिषा । सूर्यकिरणैः विलीयमानहिमखण्डैः प्रतिक्षणम् एधमानप्रवाहा भागीरथी इव

रङ्गनाथशर्मणः विविदिषा व्यजृम्भत । ततः चन्नपुरीय(Chennai)कन्नड-विद्वत्परीक्षां महीशूरकन्नडपण्डितपरीक्षां च स्वव्यासङ्गेन समुत्ततार । एवं कर्णाटकभाषायामपि गभीरं पाण्डित्यम् आससाद ।

प्रत्यहम् उषःकाले शयनाद् उत्थानम्, शुचित्वम्, अध्ययननिष्ठा, मित-भाषित्वम्, सौजन्यम्, परिकरस्वच्छता, धीरप्रकृतित्वम्, अपरोपतापिता, परोपकृतिः इत्यादयो गुणाः अस्मिन् खलेकपोतन्यायेन सम्मिलिताः आसन् । अत्यैच्च एवं तस्य विद्यार्थिदशा ।

ततश्च अयं विद्याविनयसौजन्यादिभिः सज्जनस्पृहणीयो वयोरूपसम्पदा पतिंवराभिः कन्याभिः वरणीयः सद्यो गुरुकुलात् निवृत्तः स्नातको गार्हस्थ्यम् अभिलषन् यथाशास्त्रं स्वानुरूपान् दारान् पर्यग्रहीष्ट । अनन्तरं जीविकाहेतोः विद्यावदातयशाः महाशयोऽयं भगवतः चन्नकेशवस्वामिनः कृपाकटाक्षैः आकारितः इव वेलापुरीम् (Belur) आजगाम । तत्र पाठशालायां सरसकवीनां वैयाकरणानां विदुषां गुणीत्युपाह्वश्रीगणपतिशास्त्रिणाम् अध्यक्षमहोदयानां साह्येन कश्चित्कालं गैर्वाण्या अध्यापकत्वम् अभजत । ततश्च अनेन प्रौढशालायां कर्णाटकसरस्वत्याः पर्युपासनमिव उपाध्यायवृत्तिः अव्रियत । कञ्चित्कालं तत्र स्थित्वा महामनाः एष तनयप्रवासम् असहमानया जनन्या इव किञ्चित्कर्णे जपित्वा पुनराकारितः इव कल्याणनगर्यां श्रीमच्चामराजेन्द्रसंस्कृतमहापाठशालां तां नाभिगृहमिव प्रत्याजगाम । स्वीचकार आचार्यकं व्याकरणशास्त्रे । प्राचार्यस्यास्य प्रज्ञा तु असाधारणी । अन्यादृशी तु अध्यापनपरिपाटी । अनेन अध्यापिताः विद्यार्थिनः न क्वापि अनुत्तीर्णाः । अन्यत् व्याख्यानकौशलम् । असदृशं शिष्येषु वात्सल्यम् । अनन्यसाधारणं वैदग्ध्यम् । रसिकरोचकं कवित्वम् । अपरिमितो विचारसङ्ग्रहकोशः ।

इदं तावल्लोके दृष्टचरं यद् अन्येषु केषुचित् विद्वत्सु वैदुष्यं पर्याप्तम्, न हि अध्यापनकौशलम् । इतरेषु केषुचित् बोधनकौशलमात्रं, न वैदुष्यमिति । परन्तु प्राचार्ये रङ्गनाथशर्मणि अमुष्मिन् तदुभयमपि एकलतावलम्बिफलद्वयवत् श्लिष्टम् इत्यहो सौभाग्यम् !

श्लिष्टा क्रिया कस्यचितात्मसंस्था सङ्क्रान्तिरन्यस्य विशेषयुक्ता ।
यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव ।।

इति युक्तरूपं हि कविकुलशिरोमणेः कालिदासस्य एतद्वचनम् ।

आबालपण्डितपामरजनरोचको हि अस्य लेखनप्रपञ्चः । कति वा बालोपयोगीनि सस्कृतभाषामयानि सरलसरलानि पुस्तकानि अनेन न रचितानि ? के वा न अश्रृण्वन् पण्डितसभासु एतस्य महाविदुषः पाणिन्युपज्ञपदशास्त्रसूत्रव्याख्यानवैखरीम् ? प्रतिवादिभयङ्करेण वैयाकरणेन श्रीमता रङ्गनाथशर्मणा निरूप्यमाणां पूर्वपक्षनिराकरणचणां सिद्धान्तोपपादिकां प्रक्रियां श्रुत्वा, कया वा विपक्षश्रेण्या स्वपराजयशङ्कया मौनमुद्रा नाद्रियत ? वेदान्तशास्त्रेऽप्यस्य परिश्रमो महान् । अध्यापिपच्च अयं बहून् विद्यार्थिनो वेदान्तशास्त्रम् । भगवद्गीतायाम् उपनिषत्सु च आध्यात्मतत्त्वानि हृदयङ्गमम् उपन्यास्थच्च । अपि च इतो द्वित्राब्देभ्यः पूर्वम् अयम् अमेरिकादेशस्थे (USA) बहुषु विद्यास्थानेषु भारतीयसंस्कृतेः महत्त्वमपि प्रत्यपीपदत् । अधुनातनेभ्यः कविभ्यः काव्यनिर्माणकर्मणि महाभागेन अनेन कृतं प्रशंसास्पदं मार्गदर्शनम् । कति वा क्षोदक्षमं विमृष्टाः दुरूहाः शास्त्रविचाराः ! इतः सप्ताष्टवत्सरेभ्यः पूर्वं चलच्चित्रसंस्थया ऐदम्प्राथम्येन निर्मितस्य, भारतप्रशासनेन प्रदीयमानाम् स्वर्णकमलप्रशस्तिम् उपगतस्य संस्कृतभाषामयस्य 'आद्यशङ्कराचार्यः' इति रूपकस्य कथासङ्घटनाचातुरी श्रीमतो रङ्गनाथशर्मणः तत्रभवतः प्रतिभोट्टङ्किका इति रसिकसमाजो जानात्येव ।

काव्येषु माधुर्यमनोहरेषु कुर्यादखिन्नः श्रवणाभियोगम् ।
गीतेषु गाथास्वथ देशभाषाकाव्येषु दद्यात्सरसेषु कर्णम् ।।

इति कविकण्ठाभरणे क्षेमेन्द्रकृतम् उपदेशम् आददानस्येव श्रीमतो रङ्गनाथशर्मणः संस्कृतकर्णाटकोभयकाव्यमीमांसायां महती श्रद्धा सञ्जाता इति मन्ये । यथा गैर्वाण्यां तथा कार्णाटिक्याम् अनेन कृतं सारस्वताराधनम् अन्यादृशम् ।

कति वा सहृदयधुरीणाः नास्वदन्त, यदेतेन महाशयेन कन्नडभाषया स्वाकूतप्रकाशनपूर्वकं स्वनूदितस्य श्रीमद्रामायणस्य वा विष्णुपुराणस्य वा भागवते द्वादशस्कन्धस्य वा वाङ्माधुर्यम् ? किञ्च के वा विद्वांसो नादद्रिरे, विद्वन्मणिना अमुना संशोधितस्य पम्पकवेः आदिपुराणस्य वा काव्यलाक्षणिकेन कुन्तकेन प्रणीतस्य वक्रोक्तिजीवितस्य वा ग्रन्थस्य परिष्कृतं समग्रं स्वरूपम् ? अपि च एतेन दृश्यकाव्यरचनानिपुणेन श्रीमता रङ्गनाथशर्मणा पुनरेतेषु दिवसेषु रचिते बाहुबलिविजयैकचक्राभिधे रूपके विद्यार्थिनो रङ्गभूम्यां साध्वभिनीय रसिकान् सन्तोषयन्तीति हि प्रत्यक्षम् ।

अतः एतस्य सर्वतोमुखं वैदुष्यम् उपलक्ष्य, विद्याभिमानिनो महाजनमठाधिपतयश्च एनं सममानयन्, 'विद्यावारिधिः' 'व्याकरणशास्त्रप्रवीणः' इत्याद्युपाधिना पुरश्चक्रुश्च ।

किञ्च विद्यावारिधेः रङ्गनाथशर्मणः साहित्यसेवाम् अन्यादृशीं प्रशस्य भारतराजकीयप्रशासनं राष्ट्रियाम् उपदां प्रशस्तिं चामुष्मै दत्त्वा समभावयत् ।

न केवलमस्य शेमुषी पाणिनीये, वेदान्ते, साहित्ये च प्रगल्भते, अपि तु स्वकौटुम्बव्यवहारेऽपि । विद्यया, विनयेन, सौशील्येन च भूषिताभ्यां परिणीताभ्यां दुहितृभ्यां, कृतदारपरिग्रहाभ्यां पुत्राभ्यां च सहितस्य जानकीकृपा इति अन्वर्थाभिधाने स्वकीये सुसद्मनि सुखिनः सुकुटुम्बिनोऽस्य रङ्गनाथशर्मणः स्वानुरूपा कमलाक्षीनाम्नी कौसलेयस्य वैदेहीव बभूव ।

परमनेन सद्गृहस्थेन यावदनूद्य रामायणीयः सीतापरित्यागकथान्तो भागः समाप्तिं नीतः तावद्दैवेन अपनीयमानपत्नीवियोगजन्मा दुस्सहः शोकः अन्वभावि । तदानीं शोकाकुलितचेतसो वाल्मीकेः आदिकवेरिव सुगृहीतनाम्नः सहृदयस्य रङ्गनाथशर्मणो मुखात् काचित् छन्दोमयी वाणी निस्ससार । यथा -

कमलाक्षी च मे पत्नी भर्तारमनुरुन्धती ।
अरुन्धतीव कल्याणी कमलाक्षपदं गता ।। इति ।

तदनु जातनिर्वेदस्य भगवति निबद्धभावस्य धीरप्रकृतेः अस्य मनःपरिपाकदशां सुधियो विदांकुर्वन्तु तदीयया छन्दोनिबद्धया अनया वाण्या । यथा -

या लब्धा भूमिजातारमणकरुणया संस्कृता पाणिनीता
या भावस्निग्धरम्योचितविशदपदस्रग्धरा साधुवृत्ता ।
याजस्रं श्रोत्रपेयामृतरसनिचितं रामनामान्वजापीत्
तां वाणीं तां च पत्नीं हरिपदयुगले निक्षिपन्निर्वृतोऽस्मि ।।
(पाणिनिना + इता, पाणिना + नीता)
(उत्तरकाण्डादुद्धृतं ग्रन्थकारस्य ।)

तथैव -

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ।।

- उत्तरकाण्डम्

एतत्सुभाषितस्य अर्थः सत्यापितः खलु सज्जनस्यास्य चरितेन ।

सम्प्रति तावत्संप्रतीतः श्रीमान् अयं परिणतवयाः - * शिथिलाङ्गयष्टिरपि, मन्ददृष्टिरपि वार्धक्यसहजेन रोगेण पीडितोऽप्युत्थातुम् अशक्तोऽपि, ग्रन्थ-विमर्शने, प्रबन्धलेखने, पुस्तकपठने, काव्यसंशोधने, सहृदयगोष्ठ्यां, गृहागत-सज्जनैः सह सँल्लापने च तरुणायते इति तु नातिशयोक्तिः ।

अविकत्थनप्रकृतेः मितभाषिणः पण्डितावतंसस्य अस्य सौहार्दं रत्नाभरणम् इव अमूल्यम् । अथवा यदि स्यात्तदर्घस्तं मापयितुं भावुकमन्तरा को वा अन्यः साहसिकः पुरुषः प्रभवेत् ? अमूल्या हि सज्जनमैत्री ।

चिरकालाद् अभिनन्दनीयस्य एतस्य रङ्गनाथशर्मणो वैदुष्यसौजन्यादिना समाकृष्टचेताः अभूदयं जनः । ततःप्रभृति निरूढः तदीयः स्नेहानुबन्धः । स एव अद्य विद्यावारिधेः एतस्य सच्चरितानुवर्णननौकासञ्चारे कर्णधारायते इत्यत्र नास्ति संशयलेशः ।

भोः सहृदयाः ! मया तावदेतावता वाक्यजातेन मित्रमणेः अमुष्य वृत्तान्तः स्थलीपुलाकन्यायेन यथामति उपवर्णितः । परं तु अस्य वैदुष्यविषये तदीय-ग्रन्थोदाहरणादि विस्तरभिया न प्रादर्शि ।

विद्वदभिनन्दनं हि शास्त्रसम्मतः सम्प्रदायः । भारतीयसंस्कृतेः अयम् उत्तेजकः । अयं सम्प्रदायः भारतीयैः अस्माभिः अवश्यम् अनुष्ठातव्यः । प्रशंसावहः तावदधुना रङ्गनाथशर्मणः अभिनन्दनसमित्या क्रियमाणोऽयं कार्यविशेषः ।

किञ्चिदिव अत्र मह्यं लेखनीं व्यापारयितुम् अभिनन्दनसमित्या सम्मतिप्रदानेन उपकृतम् । अतः कृतज्ञः अयं जनः । सुगृहीतनामा सुधीन्द्रः सोऽयं रङ्गनाथशर्मा पुरुषायुषं जीयादित्याशंसन् कर्मेदं भगवते समर्प्य विरमत्ययं जनः ।

★ ★ ★

* लेखः अयं मान्यस्य रङ्गनाथशर्मणः जीवितकाले तदीयसम्माननावसरे लिखितः आसीत् । रङ्गनाथशर्मा तु २५.१.२०१४ तमे दिनाङ्के दिवं गतः ।

## २४. महामहोपाध्यायः विद्वान् एन्.रङ्गनाथशर्मा

**- जगदीशः**

महामहोपाध्यायः विद्वान् एन्.रङ्गनाथशर्मवर्यः विद्वदग्रणीषु अग्रगण्यः सन् वैदुष्येण कनिष्ठिकाम् अधितिष्ठन् अनामिकां सार्थवतीम् अकरोत् इत्यत्र न अतिशयोक्तिः । वैदुष्येण तत्सदृशः प्रायः अन्यः न स्यात् । जगच्चक्रवर्ती दिलीपः इव पण्डितचक्रवर्ती रङ्गनाथशर्मवर्यः अपि अधृष्यः अभिगम्यश्च आसीत् । तदीयम् अनेकशास्त्रपाण्डित्यम् अधृष्यतां परिकल्पयति स्म । किन्तु सौजन्यवात्सल्यादयः गुणाः अभिगम्यताम् आपादयन्ति स्म । अतः तम् उपसर्पतां सर्वेषामपि भीतिप्रीतिशबलितहृदयत्वं भवति स्म एव सदापि ।

''रङ्गनाथशर्मवर्यस्य कृतिराशिः विशुद्धविद्वत्तायाः मणिदर्पणः, छलरहित-पाण्डित्यस्य कुलभवनं, स्वोपज्ञसिद्धेः क्रीडाङ्गणं, मौल्यसंवेदनायाः आलयः, सत्यनिष्ठायाः साम्राज्यसीमा, निस्सन्दिग्धतायाः नित्यावतारः, निर्दाक्षिण्य-संवलितस्य निष्पारुष्यस्य रङ्गस्थलम्, भाषासौष्ठवस्य सत्रवाटी, उक्तिसौन्दर्यस्य उपवनवीथी, सारल्यवैशद्ययोः शक्तिशोभां साकल्येन एकत्र समावेशयन्ती सरस्वतीसिद्धिः...'' इत्येवं वर्णयति मान्यः शतावधानी रा.गणेशवर्यः 'वाणीवाहन'नामके रङ्गनाथशर्मजीवनसाहित्यपरिचायके कर्णाटभाषया लिखिते ग्रन्थे । ये रङ्गनाथशर्मवर्यस्य नैकट्यम् अनुभूतवन्तः स्युः ते अवश्यमेव अवगच्छेयुः यत् गणेशवर्यस्य कथने अत्युक्तिलेशोऽपि न समस्ति इति ।

कर्णाटके शिवमोग्गाभिधे जनपदे 'नडहळ्ळी'नामके ग्रामे मान्यस्य रङ्गनाथ-शर्मवर्यस्य जन्म जातं १९१५तमे वत्सरे वैशाखशुक्लपञ्चम्याम् । पिता श्री तिम्मप्पनामा, माता श्रीमती जानकम्माभिधेया । वैशाखशुक्लपञ्चमी शङ्कर-भगवत्पादानां जयन्तीदिनमपि । शर्मवर्यस्य जन्मनक्षत्रं पुनर्वसुः, यस्मिन् च

भगवतः श्रीरामस्य जन्म अभवत् । जन्मकालसुयोगकारणात् एव इति भाति, मान्यः रङ्गनाथशर्मवर्यः शङ्करभगवत्पादानां, भगवतः श्रीरामस्य च परमाराधकः आसीत् । व्याकरणे वेदान्ते साहित्ये च प्रगल्भपाण्डित्यं वहतः तस्य वैदुष्यं यथा, तथैव वात्सल्यपूर्णं परमोदारव्यक्तित्वम् अपि आसीत् अनितर-साधारणमेव ।

'पूर्वसूरिभिः आचार्यैः गुणगात्रगौरवोपेताः ग्रन्थाः बहवः रचिताः । तेषां ग्रन्थानाम् अध्ययनम्, अवगमनम्, अध्यापनं च अस्माकं नित्यकर्म स्यात् । तैः अनुक्ताः विषयाः के वा स्युः, येन वयं स्वोपज्ञतया ग्रन्थान् लिखेम' इति चिन्तयन्ति बहवः संस्कृतविद्वांसः । तादृशानां गणे अन्तर्भूतः अपि मान्यः रङ्गनाथशर्मवर्यः लोकोपकारबुद्ध्या विनेयजनानुग्रहबुद्ध्या च ग्रन्थप्रणयने अपि प्रवृत्तिम् अदर्शयत् यत् तत् संस्कृतलोकस्य सौभाग्यमेव । संस्कृतभाषया कन्नडभाषया च तेन षष्ट्यधिकाः ग्रन्थाः रचिताः । शताधिकाः मौलिकलेखाः च लिखिताः । संस्कृतनिष्ठं ज्ञानं कन्नडजनान् प्रापयितुं तेन कन्नडग्रन्थाः, अनुवादग्रन्थाः च आधिक्येन लिखिताः । संस्कृतग्रन्थाः तु उपदशाः एव । प्रायः कालस्य आवश्यकतां मनसि निधाय एषा प्रवृत्तिः दर्शिता स्यात् तेन ।

मान्यस्य रङ्गनाथशर्मवर्यस्य साहित्यसेवागभीरतां व्यक्तित्वमेरुतां च दृष्ट्वा सारस्वतसमाजेन विविधसंस्थाभिश्च विविधानां प्रशस्तिपुरस्कारादीनां प्रदानेन आत्मा कृतार्थीकृतः । राज्यप्रशस्तिः, राष्ट्रप्रशस्तिः, मानदविद्यावारिधि-प्रशस्तिः, महामहोपाध्यायप्रशस्तिः इत्यादयः समाजसंस्थादीनां स्वधन्यता-सम्पादने साधनानि आसन् । तस्मै प्रशस्तिपुरस्कारादिदानेन प्रशस्ति-पुरस्कारादीनां मूल्यं प्रवृद्धम् ।*

'वाणीवाहन'नामिकायां कृतौ शतावधानी रा.गणेशवर्यः ग्रन्थादौ अन्योक्ति-श्लोकमेकम् उपस्थापयति । स च -

वर्णेनाच्छपदक्रमेण विशदस्थानेन मान्यश्रिया
धातुः केतन विक्रमेण वियति स्वच्छन्दबुद्ध्या भृशम् ।
नीरक्षीरविवेक वत्सलतया पद्मप्रिय त्वामतो
वाणीवाहन शारदेहन सदा विन्दामि मन्मानसे ।।

हंसपरः अर्थः - हे हंस ! तव शरीरवर्णः धवलः । तव पदगतिः

रमणीया । ध्वनिः तु गम्भीरः । सृष्टिकर्तुः ब्रह्मणः विजयध्वजः एव भवान् इति कीर्तिः । वियति तव स्वैरविहारः तु अनुपमः । नीरक्षीरयोः पृथक्करणे समर्थः अनन्यलभ्यः विवेकः । वात्सल्यगुणेन पद्मप्रियः इति ख्यातिः । शरत्काले प्रीतिः । अतः एव त्वं वाग्देव्याः वाहनत्वम् अवाप्तः । अतः त्वां मनसा प्राप्नोमि । ध्यायामि इत्यर्थः ।

अत्र वर्णः नाम श्वेतवर्णः, अक्षरं च । पदक्रमः नाम पदविन्यासः पदानाम् अन्वयव्यवस्था च । पद्मं नाम कमलं रामश्च । अस्य श्लेषस्य कारणतः कस्यचित् विदुषः सङ्कीर्तनम् अत्र व्यज्यते । स च विद्वान् मान्यः रङ्गनाथशर्मा एव इत्यत्र का संशीतिः ? रङ्गनाथशर्मा हंसः इव अन्तरङ्गबहिरङ्गधवलः । स्वच्छव्यवहारविभूषितः । तदीयं वचनं सदा मान्यार्हम् । ब्रह्मणा सृष्टम् अनर्घ्यं रत्नम् एव सः । विद्यारूपे आकाशे उन्नतोन्नततया स्वच्छन्दविहारं करोति सः । व्याकरणे शुद्धाशुद्धविवेकः, साहित्ये औचित्यानौचित्यविवेकः, वेदान्ते नित्यानित्यविवेकः इत्यादयः तस्य जीवने सहजाः गुणाः । वात्सल्येन तु सः आपण्डितपामरप्रियः । श्रीरामस्य अनन्यभक्तः । अज्ञानदुर्दिनं विनाश्य आविर्भवतः सुज्ञानशरदृतोः स्वागतकर्ता । अयं खलु देववाण्याः वाहनम् । एतादृशान् एव अवलम्ब्य देववाणी विकासं प्राप्नोति । एतादृशः कृती सुकृती बहुकृतिकृती अस्मन्मानसे सदा निवसतु ।

रङ्गनाथशर्मवर्यस्य व्यक्तित्वम् अच्छोदसरः । वैदुष्यं तु सह्याद्रिपङ्क्तिः । विद्याधिदेवतायाः यात्रावसरे पुरः गृह्यमाणा दीपशिखा अस्ति तदीयं जीवितम् । विद्वदग्रणीः सौजन्यमेरुः अव्याजप्रीतिवर्षी सः अस्मासु कृपावृष्टिं सदा वितनोतु इति आशास्यते ।

यस्य स्मृत्या च नामोक्त्या प्राप्यते संस्कृतप्रियैः ।
तुष्टिः पुष्टिः प्रेरणा च रङ्गनाथं नुमो हि तम् ।।

★ ★ ★

# २५. रङ्गात् निर्गतः रङ्गनाथशर्मा

**- जनार्दनः**

शास्त्रज्ञाः बहवः स्युः लोके । किन्तु तेषु तलस्पर्शिज्ञानं, शास्त्रपङ्क्तीनां वचोविधेयत्वम्, इदमित्थमिति शास्त्रार्थं निरूपयितुं सामर्थ्यं, गहनस्यापि शास्त्रविचारस्य सरलतया मनोज्ञतया च प्रतिपादनम् इत्यादयः गुणाः केषुचित् एव भवेयुः । समग्रे अपि भारते सूक्ष्मेक्षिकया यदि परिशीलयेम तर्हि अपि एतादृशसमामर्थ्यवन्तः अङ्गुलिगणनीयाः एव प्राप्येरन् । तादृशेषु अङ्गुलि-गणनीयेषु अन्यतमः आसीत् महामहोपाध्यायः विद्वान् एन्.रङ्गनाथशर्मवर्यः, यश्च जनवरीमासस्य पञ्चविंशतितमे दिनाङ्के (२५.१.२०१४) स्वीये नवनवतितमे वर्षे (मासत्रयानन्तरं प्राप्तशतवर्षः अभविष्यत् सः) पञ्चत्वम् अगात् । (जन्म १९१६)

कर्णाटकाभिजनेन तेन कन्नडभाषया संस्कृतभाषया च अनेके ग्रन्थाः लिखिताः, असङ्ख्यासु विद्वद्गोष्ठीषु शास्त्राणां सूक्ष्मतत्त्वानि सप्रमाणं निरूपितानि । एतादृश्यः सिद्धयः वस्तुतः अपूर्वाः एव, तथापि तद्विषये विशेषतया असङ्कथय्य तदीयस्य उदात्तजीवनस्य कानिचन मुखानि प्रस्तूयन्ते अत्र ।

मान्यः शर्मवर्यः आसीत् वात्सल्यस्य प्रतिमूर्तिः । आपण्डितपामरम्, आबालवृद्धम्, आसुपरिचितापरिचितम्, आनिर्धनधनिकं सर्वेषु अपि तदीयं वात्सल्यं समानतया प्रवहति स्म । सकृत् तं दृष्टवान् सर्वोऽपि तदीय-वात्सल्यामृतपानम् आजीवनं स्मरेत् एव । अपरिचितमपि जनं महता आदरेण, असीमेन वात्सल्येन च सः स्वागतीकृत्य सत्करोति स्म, आ सुदीर्घकालात् सुपरिचितमिव भावयन् । गृहम् आगताय सर्वस्मै अपि (बालाय, अपरिचिताय,

अज्ञातकुलगोत्राय वापि) फलक्षीरादिकं तेन दीयेत एव । आतृप्ति सम्भाष्य प्रस्थितं तम् आप्राकारद्वारम् (Gate) अनुगत्य आप्रच्छनवचनानि तेन उच्यन्ते स्म एव । परमवार्धक्ये उपस्थिते अपि व्रतमिव एतम् आचारम् अपालयत् सः । वार्धक्ये दृष्टिशक्तेः क्षीणताकारणतः, प्रस्थातरि कस्याञ्चित् दिशि प्रस्थिते, अन्यस्यां दिशि मुखं कृत्वा सः हस्तचालनं करोति स्म यत् ततः द्रष्टुः नेत्रे सजले भवतः स्म । विदुषां विषये, समस्तरीयाणां विषये, गौरवार्ह-पदस्थानां विषये एव न, बालस्य विषये अपि तदीयः एषः व्यवहारः नितरां श्लाघ्यः अनुकरणीयः च ।

संस्कृतं व्यवहारभाषा भवेत्, जनाः संस्कृतेन सम्भाषणं कुर्युः इत्येषा संस्कृतप्रचारपरा दृष्टिः तस्य आसीत् इत्यतः संस्कृतेन सम्भाषणं कुर्वत्सु तस्य विशेषप्रीतिः भवति स्म । संस्कृतभारतीकार्यं दृष्ट्वा कदाचित् सः सानन्दम् उक्तवान् आसीत् - ''तरुणाः यदेतत् संस्कृतप्रचारकार्यं स्वजीवितोद्देशत्वेन स्वीकृतवन्तः सन्ति, ततः अहं संस्कृतस्य भव्योदर्कविषये गतचिन्तः अस्मि'' इति । अभिव्यक्तिसमये भाषाशुद्धतासंरक्षणविषये नैर्भर्यं स्यात् इति स्मारयन् अपि सः संस्कृतेन व्यवहारम् अवश्यकर्तव्यत्वेन प्रतिपादयति स्म ।

संस्कृतभारत्याः कार्यं यदा आरब्धं तदा काचित् चर्चा समुत्पन्ना आसीत् - 'कण्णप्प-डेविड-रामय्यादीनां संज्ञापदानां विभक्तियोजनं शास्त्रसम्मतं किम् ?' इति । द्वित्राणि दिनानि यावत् विदुषां गोष्ठ्याम् अयं विषयः चर्चितः । तदवसरे रङ्गनाथशर्मवर्यः विभक्तियोजनं सुदृढं प्रतिपादयन् - ''डित्थ-डवित्थादिषु, यर्वाणस्तर्वाणादिषु, अप्पय्य-जय्यट-कल्हणादिषु च पदेषु प्राचीनैः विभक्तियोजनं कृतं दृश्यते एव इत्यतः - 'संज्ञापदेषु विभक्तियोजनं कर्तुं शक्यते किम्' इति प्रश्नः एव अनुचितः । अनेकैः शास्त्रज्ञैः विभक्तियोजनं कृतं, विभक्त्यन्ताः प्रयोगाः बहुधा कृताः च । अतः 'विभक्तियोजनं करणीयम् उत न' इत्ययं नात्र चर्चाविषयः, अपि तु 'कथं करणीयम्' इति विषये चर्चा प्रवर्तेत'' इति उक्त्वा शास्त्रसम्मतं मार्गं विस्तरेण प्रादर्शयत् । 'संज्ञापदेषु विभक्तियोजनं विना संस्कृतेन सार्वत्रिकः व्यवहारः एव दुश्शकः स्यात्' इति तस्य निश्चिता मतिः आसीत् ।

कदाचित् कार्यकर्तॄणां गणे चर्चा उत्पन्ना - ''पत्रादिलेखनावसरे वयं सङ्केतलेखनाय यं क्रमम् अनुसरामः तत्र कथं साधुता ? सङ्केते तु नाम-मार्ग-

प्रदेश-नगरादीनां प्रथमान्तप्रयोगः भवति । किन्तु तेषु विशेषणविशेष्यभावः न घटते । समुच्चयार्थः अपि न तत्र विवक्षितः । एवं तर्हि तत्र कथं साधुता उच्येत ?'' इति ।

समस्या एषा रङ्गनाथशर्मवर्यस्य पुरतः उपस्थापिता । सर्वं श्रुत्वा, क्षणं विचिन्त्य सः अवदत् – ''साधुताकथने न कोऽपि क्लेशः । भवद्भिः गीता-रामायणादिकं पठितं स्यात् ननु ?'' इति ।

''आम् ! पठितमेव'' इति उक्तं कार्यकर्तृभिः ।

''रामायणमेव दृश्यताम् । तत्र आदौ आनुपूर्वी भवति – श्रीमद्वाल्मीकि-रामायणम्, बालकाण्डः, प्रथमोऽध्यायः.... इत्येवम् । इयं च प्राचीना परिपाटी । सर्वेषु अपि ग्रन्थेषु अयमेव क्रमः अनुसृतः दृश्यते । तादृशेषु स्थलेषु कथं साधुता उच्येत ? श्रीमद्वाल्मीकिरामायणम्, तत्र बालकाण्डः, तत्र प्रथमः अध्यायः इत्येवं तत्रादिपदानाम् अध्याहारेण ननु ? अथवा सप्तम्यर्थकता प्रतिपादनीया स्यात् । कथञ्चित् साधुता तु अस्ति एव । तुल्यन्यायेन सङ्केतलेखनक्रमे अपि साधुता'' इति ।

प्रायः अशीतिवर्षवयसः अनन्तरं वार्धक्यजन्यं बाधिर्यं नेत्रशक्तिहीनता च तम् अबाधत । तत् दौर्बल्यं दिने दिने अवर्धत । तस्मात् श्रवणे, पठने, ग्रन्थाद्यवलोकने च सः महत् कष्टम् अन्वभवत् । तथापि सः प्रतिदिनम् आकाशवाणीवार्तां नियततया शृणोति स्म, दिनपत्रिकासु स्थितान् विशेषलेखान् अन्यसाहाय्येन (अन्येन वाचयित्वा) जानाति स्म । तेनैव क्रमेण स्वस्य, जिज्ञासूनां च सन्देहं ग्रन्थपरिशीलनपुरस्सरं निवारयति स्म । प्रौढग्रन्थान् प्रतिदिनम् अध्यापयति स्म, स्मरणबलेन पङ्क्तीः व्याख्यानं च स्मृत्वा । लेखान्, ग्रन्थान् च लिखति स्म एतेन एव क्रमेण । यद्यपि इन्द्रियपाटवाभावः तम् असहायम् अकरोत्, तथापि सः तत् समस्यायै अमत्त्वा स्वकर्तव्यानि विना लोपं करोति स्म एव नैयत्येन । स्वस्य इन्द्रियाणाम् अपाटवविषये कदाचित् सः सविनोदम् अवदत् – ''इन्द्रियाणि मां वदन्ति – 'भोः शर्मन् ! भवता तु षष्टिवर्षात्मके वयसि उद्योगात् निवृत्तिः प्राप्ता । वयं तु नवत्यधिकानि वर्षाणि यावत् भवतः सेवाम् श्रद्धया अकुर्म । किम् अस्माकं निवृत्तिः न स्यात् ?' इति । एवं वदन्ति तानि स्वयमेव निवृत्तानि अभवन्'' इति । इन्द्रियापाटवरूपं क्लेशम् अनुद्विग्नेन मनसा अङ्गीकृत्य सः कर्तव्यपरः भवति स्म । न बाधन्ते

स्म तं दौर्बल्यानि, न व्यथयन्ति स्म तं सामर्थ्याभावादयः ।

एतादृशे इन्द्रियापाटवयुक्ते काले अस्मत्कार्यकर्तृभिः कदाचित् तस्य दर्शनाय गतम् आसीत् । कार्यकर्तृणाम् आगमनोद्देशं विचार्य सन्देहादीन् निवार्य अन्ते सः अवदत् – ''सर्वासु अपि प्रादेशिकभाषासु अङ्कानां दक्षिणतः गतिः एव श्रूयते । संस्कृतक्षेत्रे तु दृश्यते वामतो गतिः । अङ्कानाम् उपयोगः दैनन्दिनव्यवहारे महान् । तत्र वामतो गतेः कारणतः सामान्याः बहुधा क्लिश्नन्ति । अतः संस्कृतक्षेत्रे अपि अङ्कानां दक्षिणतो गतिः किमर्थं न अङ्गीक्रियेत ?'' इति ।

''संस्कृतक्षेत्रे 'सर्वत्र' अपि अङ्कानां वामतो गतिः एव प्राधान्येन अनुस्त्रियते । एवं सति, किम् एतेन परम्पराविरोधः न भवेत् ?'' – कश्चित् कार्यकर्ता अपृच्छत् ।

''सर्वत्र इति मा उच्यताम्, 'बाहुल्येन' इति निगद्यताम् । दक्षिणगतिविषये तत्र तत्र प्रयोगाः दृश्यन्ते एव । ते क्वाचित्काः स्युः, न तु असाधवः ।''

''विषयेऽस्मिन् व्याकरणशास्त्रस्य विरोधः किं नास्ति ?''

''न सर्वथा । व्याकरणशास्त्रम् एतद्विषये न किमपि वदति विशेषतः । उभयथा अपि साधुत्वं तु वक्तुं शक्यमेव । दक्षिणगतिविषये व्याकरणविरोधः तु कोऽपि नास्ति ।...''

''तथापि......''

''यः प्रयोगः व्याकरणविरुद्धः स्यात्, स तु अवश्यं परिहरणीयः एव । किन्तु अत्र तु तथा नास्ति । अतः दक्षिणगतेः अनुसरणात् न कापि हानिः ।...''

''भवन्तः तु एवं वदन्ति । किन्तु अन्ये शास्त्रज्ञाः कदाचित् विरोधं प्रकटयेयुः । अतः भवन्तः विषयमेतम् अधिकृत्य एकं लेखं लिखित्वा यच्छन्तु । तं वयं सम्भाषणसन्देशे प्रकाशयिष्यामः ।....''

''कथमहं लिखेयम् ? मम अङ्गानि शैथिल्यं गतानि । अहं लेखितुं न शक्नोमि ।''

''अथवा भवन्तः वदन्तु । अस्मदीयः कार्यकर्ता तत् लिपिबद्धं करिष्यति । ततः अक्षरसंयोजनं कृत्वा लेखं श्रावयिष्यामः । भवद्भिः अनुज्ञायेत चेत् प्रकाशयिष्यामः ।...''

एतत् शर्मवर्येण अनुमतम् । ततः तेन उक्तं श्रुत्वा कश्चन लेखः सज्जीकृतः, तस्मै श्रावयित्वा यथोचितं परिष्कारं विधाय तन्नाम्ना एव सम्भाषणसन्देशे

प्रकाशितः च ।

एतादृश्यः घटनाः सन्ति बह्व्यः । तथापि विस्तरभयात् अत्र न उल्लिख्यन्ते ताः ।

वयःकारणतः तदीयाः नेत्रकर्णादयः यद्यपि क्षीणशक्तिमन्तः आसन्, तथापि तदीया बुद्धिः तु अवसानान्तं यावत् अपि अप्रतिहतगतिः एव आसीत्, 'बुद्धिस्तु मा गान्मम' इति चाणक्यवचनं स्मारयन्ती इव । यदाकदाचिदपि यः कोऽपि शास्त्रसम्बद्धः प्रश्नः पृष्टः चेत् झटित्येव ग्रन्थोल्लेखं स्मृत्वा सप्रमाणम् उत्तरं ददाति स्म सः । यत्र झटिति उत्तरं वक्तुं न शक्येत तस्य उत्तरम् अनन्तरदिने स्वयमेव श्रावयति स्म दूरवाणीद्वारा । यदा दूरवाणी विरलप्राप्या आसीत् तदा तु समपत्रं लिख्यते स्म तेन । कदाचिदपि केनचिदपि पृष्टस्य कस्यचिदपि प्रश्नस्य विषये तेन अनादरः तु सर्वथा न प्रदर्शितः, विलम्बः वा न अनुष्ठितः । अद्वैतवेदान्ते, अलङ्कारशास्त्रे, व्याकरणे, अन्यशास्त्रेषु च असाधारणी गतिः आसीत् तस्य, तथापि व्याकरणे तु विशेषप्रीतिः आसीत् तदीया । 'यस्मिन् दिने मया व्याकरणं विस्मर्येत तद्दिने मम अन्तकालः समापद्येत' इति वदति स्म सः ।

प्राणोत्क्रमणदिने तस्य ससंज्ञत्वपरीक्षणाय पौनःपुन्येन प्रश्नान् पृच्छति स्म तदीया पुत्री । एतादृशे प्रसङ्गे पुत्र्या पृष्टम् – ''अष्टाध्यायी केन लिखिता ?'' इति ।

''न जानामि'' इति क्षीणस्वरेण अवदत् शर्मवर्यः ।

''रामायणं केन विरचितम् ?'' – पुनः पृष्टं पुत्र्या ।

''वाल्मीकिना'' – शान्ततया एव स्पष्टम् उत्तरं दत्तं शर्मवर्येण ।

एतदनन्तरं द्वित्रघण्टाभ्यन्तरे एव तदीयाः प्राणाः पञ्चसु भूतेषु लीनाः जाताः । अष्टाध्यायीरचयिता पाणिनिः विस्मृतः यत् तदेव तदीयान् अन्तिमान् क्षणान् सङ्केतयति स्म । तादृशे अवसरे अपि तेन प्रभुः श्रीरामः तु स्मृतः एव । यतः रामायणं तस्य प्रियः ग्रन्थः आसीत्, मर्यादापुरुषोत्तमः रामः तस्य आदर्शपुरुषः आराध्यदेवः च आसीत् ।

★ ★ ★

कर्णाटके शिवमोग्गाभिधे जनपदे 'नडहळ्ळी'नामके ग्रामे मान्यस्य रङ्गनाथशर्मवर्यस्य जन्म जातं १९१५ तमे वत्सरे वैशाखशुक्लपञ्चम्याम् । पिता श्री तिम्मप्पनामा, माता श्रीमती जानकम्माभिधेया । वैशाखशुक्लपञ्चमी शङ्करभगवत्पादानां जयन्तीदिनमपि । शर्मवर्यस्य जन्मनक्षत्रं पुनर्वसुः, यस्मिन् च भगवतः श्रीरामस्य जन्म अभवत् । जन्मकालसुयोगकारणात् एव इति भाति, मान्यः रङ्गनाथशर्मवर्यः शङ्करभगवत्पादानां, भगवतः श्रीरामस्य च परमाराधकः आसीत् । व्याकरणे वेदान्ते साहित्ये च प्रगल्भपाण्डित्यं वहतः तस्य वैदुष्यं यथा, तथैव वात्सल्यपूर्णं परमोदारव्यक्तित्वम् अपि आसीत् अनितरसाधारणमेव ।.....

संस्कृतभाषया कन्नडभाषया च तेन षष्ट्यधिकाः ग्रन्थाः रचिताः । शताधिकाः मौलिकलेखाः च लिखिताः । संस्कृतनिष्ठं ज्ञानं कन्नडजनान् प्रापयितुं तेन कन्नडग्रन्थाः, अनुवादग्रन्थाः च आधिक्येन लिखिताः ।....

मान्यस्य रङ्गनाथशर्मवर्यस्य साहित्यसेवागभीरतां व्यक्तित्वमेरुतां च दृष्ट्वा सारस्वतसमाजेन विविधसंस्थाभिश्च विविधानां प्रशस्तिपुरस्कारादीनां प्रदानेन आत्मा कृतार्थीकृतः । राज्यप्रशस्तिः, राष्ट्रप्रशस्तिः, मानदविद्यावारिधिप्रशस्तिः, महामहोपाध्यायप्रशस्तिः इत्यादयः अनेकाः प्रशस्तयः तेन अधिगताः ।

ISBN 818822087-6
9788188220878

ISBN 978-81-88220-87-8
रू. 100/-